SARASVATĪ BHAVANA STUDIES

Vol XIV

GENERAL EDITOR
Surati Narayana Mani Tripathi
Vice-Chancellor
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi




# PĀṆINĪYA-DHĀTUPĀṬHA-SAMĪKṢĀ

*by*

**Dr. Bhāgīratha Prasāda Tripāṭhī**
Vidyāvāridhi (Ph D.)

VARANASI
1965

सरस्वतीभवन-अध्ययनमाला

( १४ )

# पाणिनीयधातुपाठसमीक्षा

लेखकः सम्पादकश्च

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

व्याकरणाचार्यः, विद्यावारिधिः ( पी-एच्० डी० )

सीनियर-रिसर्च-फेलो

वाराणस्याम्

१८८७ तमे शकाब्दे

# प्रास्ताविकम्

"एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इति श्रुतिः। अनया च भगवत्या श्रुत्या एकस्यापि शब्दस्य सम्यग् ज्ञानेन शोभनप्रयोगेण चैह-लौकिकी पारलौकिकी चेष्टप्राप्तिरभिधीयते। तत्रापि ज्ञानमन्तरा प्रयोगस्य कथमप्य-सम्भवाद् ज्ञानं पूर्वमेवापेक्ष्यते। तज्ज्ञानञ्च व्याकरणादेव भवति। अत एव "ब्राह्मणेन निष्कारणो षडङ्गो वेदोऽध्येयो ज्ञेयश्च। प्रधानञ्च षट्स्वङ्गेषु व्याकरणम्" इति महाभाष्ये उक्तम्। प्राधान्यञ्च व्याकरणस्य शब्दराशेर्वेदस्य स्वसंस्कारार्थं सर्वतः प्रथममपेक्षणीयत्वात्। "वाग् वै पराच्यव्याकृताऽऽसीत्। ते वै देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुरु" इति तैत्तिरीयात् सर्वतः प्रथममिन्द्रेण वाचो व्याकृतिर्विहिता। तदारभ्य बहुधा व्याकरणानि समजायन्त। लाघवम्, वैज्ञानिकत्वम्, सर्वतः परिपूर्णता, लौकिकवैदिकशब्दानामुभयेषां साधकता चेति दृष्टिकोणैर्विपश्चित्सु पाणिनिव्याकरणस्यैवात्यादर इदानीं यावत् परिदृश्यते। तत्र शब्दानां सारल्येनाव-गमाय प्रकृतिप्रत्ययादिकल्पना बहोः कालात् प्रचलितैव समाश्रिताऽस्मिन् व्याकरणे। अत एवाथर्वणे—"को धातुः ? किं प्रातिपदिकम् ? कश्च प्रत्ययः ?" इत्युक्तम्। धातु-प्रातिपदिकभेदेन प्रकृतेर्द्वैविध्येऽपि प्रातिपदिकेष्वप्यनुगतो धातुरेव प्रकृतित्वेन मुख्यता-मर्हति। बहुत्र शब्देष्वनुगतः कश्चिद् वर्णसमुदायस्तत्संबद्धः कश्चिदर्थोऽप्यनुभूयमानः सर्वास्वपि भाषासु धातुपदेन व्यपदिश्यते। दधाति बहुषु स्थलेष्वनुगतानर्थानिति धातुः, धीयते वाऽनेकैः शब्दैरनुगतेऽर्थे इति कर्मणि प्रत्ययेन वा निष्पन्नो धातुशब्दः। एतद्विषये गवेषणायां प्रवृत्तेषु विद्वत्सु पाणिनिना धातुपाठरूपेण खिलपाठः कृतः। अन्यैश्च क्षीरतरङ्गिणी, धातुप्रदीपः, धातुवृत्त्यादयो ग्रन्थाः सङ्कलनात्मका विद्वद्भिः कृता वर्तन्ते। तत्रैषु वर्तमानानां बहूनां धातूनां कुत्रापि प्रयोगादर्शनाद् ह्विट्नीमहोदयेन नवशतसंख्याका एव धातवः स्वीकृताः।

तत्र महाभाष्ये बहूनां शब्दानां व्याकरणेन निष्पन्नानामप्य प्रयुक्तत्वमाशङ्क्य सन्ति शब्दाः प्रयुक्ता एवेति समाधायानुपलब्धिशङ्कायामुक्तम्—"उपलब्धौ यत्नः क्रियताम्। महान् शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंश-तिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः, वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येता-वान् शब्दस्य प्रयोगविषयः। किञ्च, बहवः शब्दा देशान्तरे नियतविषयाः। शवतिर्गति-कर्मा कम्बोजेष्वेव, विकार एवैनमार्या भाषन्ते शव इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमगधेषु, गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु" इति। अस्यैव भाष्योक्तस्यार्थस्याधारमाश्रित्य संस्कृतग्रन्थेषु तत्तद्देशभेदभिन्नेषु भाषासु

प्राकृत-पाली-अवेस्ता—इत्यादिषु तेषां तेषां धातूनां प्रयोगप्रदर्शनेन 'विद्यावारिधिः' इत्याख्यायोपाधये साफल्यमाप्नुवता धातुपाठसमीक्षकेणानुसन्धात्रा स्वकीये निबन्धे स्पष्टीकृतः सर्वेषु धातुषु धातुपाठपठितेषु समादरः, निराकृतश्च ह्विट्नीमहोदयस्य सिद्धान्तः। परीक्षकाणां संवेदनेन विषयस्यावलोकनेन चास्य लेखकस्य परिश्रमो बहिष्ठां प्रशंसामर्हति। प्रयासेनानेन च जिज्ञासूनां धातुविषयकज्ञाने महानुपकारः सम्भाव्यते। ग्रन्थेऽस्मिन् धातवो धातूनामर्थास्तत्समधातवस्तदर्थाः प्रयोगस्थलानि च तत्तत्साङ्केतिक-शब्दैः प्रकाशितानि। ते च सङ्केताः सूच्याद्यवलोकनेन ज्ञाता भविष्यन्ति। निबन्ध-स्यास्यानुसन्धानात्मकस्य प्रकाशनमिदं बाहुल्येनोपयोगितां भजेदिति कामयमानः स्वकीयैराशीःसंतानैः संयुनक्ति।

केन्द्रीयविश्वविद्यालयानुदानायोगस्य आर्थिकेन साहाय्येनास्य ग्रन्थस्य मुद्रण संजातमिति विश्वविद्यालयस्य पक्षेण तत्रत्येभ्योऽधिकारिभ्यः साधुवादान् वितरन् विरमति।

सुरतिनारायणमणित्रिपाठी
वाराणसेयसंस्कृतविश्वविद्यालयस्य
उपकुलपतिः।

# प्रवृत्तिनिमित्तम्

श्रीनन्दनन्दनलीलाधाम्नि वृन्दावने १९५३ खीस्ताब्दे धातुपाठमनुशीलयता मया किमपि नवीन समधिगतमिवानुभूतम्। विपश्चिद्भि. सह सम्भाषणप्रक्रमे जनेनानेन धातुपाठधृताः प्रायश. समेऽपि धातवो व्यवहृता। सम्भाषणमाकर्ण्य दोषज्ञा "कोऽर्थः! कोऽर्थः!!" इति प्रण्यगदन्। बहुत्र तु "अप्रयुक्तताप्रयोगदोष.! अप्रयुक्तताप्रयोगदोषः!!" इत्येव समाकर्णि मया विद्वज्जनगणगी.। एवं सत्यपि नाहं मनागपि विचलितोऽभूव निजपथा.त्। असकृन्मनसि समुदिता जिज्ञासा—यद्यस्त्यप्रयुक्तता तर्हि किमिति भगवता पाणिनिना सगृहीता धातव एते? "नून प्रयोगविषयाः सन्तीमे" इति द्रढिष्ठा धारणा प्ररूढा चेतसि मदीये। १९५४ खीस्ताब्दे वाराणसीमुपेतो विद्वद्भिः समं सम्भाषमाणोऽहं बहुभि प्रत्याख्यातः, अनेकैरुपहसितो भूरिभिश्च प्रतिघाभाजनतां नीत.। शब्दशास्त्रविप्रकाण्डा गुरुचरणा श्रीमद्रघुनाथशर्माण. समभ्यनन्दन् मामकीं वर्तनीम्, प्रोदसाहयश्च द्वित्राँश्लोकप्रयोगान् निदर्शयन्त इति मन्मनोमयूरो भूयो नर्तितु प्राक्रमत जलमुङ्नादमाकर्ण्यैव। तदनु—"*सर्वे देशान्तरे* सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते। न चैवोपलभ्यन्ते। उपलब्धौ यत्न क्रियताम्। महान् शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्य नवधाथर्वणो वेद, वाकोवाक्यमितिहासः पुराण वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः। एतावन्त शब्दस्य प्रयोगविषयमननुनिशम्य 'सन्त्यप्रयुक्ता.' इति वचनं केवल साहसमात्रमेव" इति महाभाष्यमधीयानस्य मम चेतसि समजनि कोऽप्यपूर्व. प्रमोदः। मया १९५६ खीस्ताब्दतः १९५९ वत्सर यावत् सस्कृतवाङ्मया हिन्दीवाङ्मयाश्च भूयिष्ठा ग्रन्था. समधीता भाषाज्ञानवर्द्धनोपायाः। एतद्विषयका बहवो लेखा लिखिताः प्रकाशिताश्च। ततोऽपि मदिष्ट मम पुरस्तान्न मूर्तं जातम्। न च कामपि पथां दिङ्मूढोऽहमपारयन्निश्चेतुम्।

१९५९ खीस्ताब्दे वाराणसेयसंस्कृतविश्वविद्यालयमनुसन्धित्सया समुपेतेन मयाचार्यप्रवराणां श्रीमत्पण्डितक्षेत्रेशचन्द्राणां चट्टोपाध्यायानां सान्निध्यमुपालम्भि। तैर्विलियमड्वाइट्ह्विट्नीमहोदयस्य धातुपरिशिष्ट. समुपस्थापित यत्र ह्विट्नीर्नवशतसख्याकानेव धातूनङ्गीचकार द्विसहस्रसख्याकेषु धातुषु, इतरांश्च प्रक्षिप्तान् मेने। एतद्विषये मार्किनदेशस्य भाषाशास्त्रपत्रिकायाः पञ्चमे खण्डे चतुर्दशे च तेन ह्विट्नीमहाशयेन भूयो लिखितम्। तत्समा-

लोचनाप्रसङ्गेन "डब्ल्यू. जेड. के. एम्." इत्याख्याया. पत्रिकाया अष्टमे खण्डे गेअर्ग बूह्लर-महाशयेन यल्लिखित तद्विषयेऽपि चट्टोपाध्यायमहाशयैर्मदीयमवधान समाकृष्टम्। बूह्लर-महाशयेन दर्शित यद् ह्विट्नीद्वारा प्रत्यादिष्टा बहवो धातवः प्राकृतादिभाषासु प्रयुज्यमाना दृश्यन्ते। तदनु तस्यामेव पत्रिकायाम् ओतोफ्राङ्कमहाशयेनाप्येतद्विषये पालिभाषात सामग्री-माहृत्य परिशिष्टरूपेण लिखितम्।

श्रीमच्चट्टोपाध्यायानां निर्देशकत्वे (एप्रिल) १९६१ खीस्ताब्दात् १९६३ अक्तूबर-पर्यन्तं भारतशासनीयशिक्षामन्त्रणालयेन ३३०० मुद्रा धातुपाठसमीक्षाग्रन्थरचनार्थं मह्यं प्रदत्ता. (पारम्परिकसंस्कृतपाठशालानां परिणतियोजनायाम्)। श्रीमच्चट्टोपाध्यायैर्वाल्दे-पॉकर्नीरचितम्—**Alois Walde,** Vergleichendes Worterbuch Indo-germnischen Sprachen : herausgegeben und bearbeitet Von Julius pokorny, 1930-1932 (3 Bde) इति कोशमन्यान् ग्रन्थान् दत्त्वा विषय च निर्दिश्य यत् साहाय्यमाचरित तदर्थं ते कोटिशो वन्दनीयाः। अत्र मया कियत् साफल्य-मासादितमितीह प्रेक्षका. प्रमाणम् इति निवेदयते

विदुषा विधेयः—

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
ज्येष्ठानुसन्धानपण्डितगणाभ्यन्तरः
(सीनियर-रिसर्च-फेलो)

वा० स० विश्वविद्यालये,
सवत् २०२२
रथयात्रायाम्

# उपोद्घातः

इह ग्रन्थे क्षीरतरङ्गिणी-धातुप्रदीप-धातुवृत्ति-गतान् सर्वान् सपाठभेदधातूनधिकृत्य गवेषण-प्रवर्तना वर्तते मदीया । शर्ववर्म (त्रिविष्टपस्रोतस्समुपलब्धधातुपाठ-(अर्थविहीन-) चन्द्र-जैनेन्द्र-काशकृत्स्न-कातन्त्र शाकटायन हेमचन्द्र-वोपदेवाना धातुपाठधातव. समे प्रायशोऽस्मिन् ग्रन्थे सन्ति समाविष्टाः । प्रतिपृष्ठे कृत विभागद्वयम् । प्रथमे विभागे तावत् खण्डद्वयम् । यत्र प्रथमे खण्डे व्याख्येया धातवो द्वितीये च सन्ति समायोजिता अर्था. । द्वितीये विभागे व्याख्येयधातुभिः सह ध्वनितुलनार्थे पूर्वोक्ताना निखिलाना धातुपाठाना धातवो वेदनिघण्टुनिरुक्तपुराणपालिप्राकृता-दीना च प्रासङ्गिकी सामग्री समुपन्यस्ता वर्तते । अस्मिन् भागे समुपन्यस्ताना धातूना स्थापनया सस्कृनधातुविकासपरिचय. शक्येत विज्ञातुम् ।

यद्यपि पूर्वोक्तैकादशधातुपाठाना धातुसूची दशधातुपाठाना चार्थसूची श्रीबालकृष्ण-गजाननपल्सुलेमहोदयेन प्रस्तुताऽस्ति, तथापि तत्रार्था धातूनामनुसारेण नोपलभ्यन्ते । धातूनामस्ति पृथक् सूची, अर्थानाञ्च पृथक् । धातु ज्ञात्वा कश्चन तदीयानखिलानर्थान् बोद्धु न प्रभवति, कस्यापि धातोः समस्तानर्थानेकत्र प्राप्तुमपि नहि शक्नोति सारल्येन । सूच्येषा तु तेषामुपकारिका येषामेतन्निखिलधातुपाठगतधातूनामर्था' कण्ठस्थीस्युः, साधारणाना कृते निकाम नोपकारिका । उदाहरणतः प्रस्तूयते धातुद्वयम्—√वी धातुरस्त्येतेष्वर्थेषु—१–गतौ, २–व्याप्तौ, ३–प्रजने, ४–कान्तौ, ५–असने, ६–खादने च । √अव् धातुश्च—१–रक्षणे, २–गतौ, ३–कान्तौ, ४–प्रीतौ, ५–तृप्तौ, ६–अवगमे, ७–प्रवेशे, ८–श्रवणे, ९–स्वाम्यर्थे, १०–याचने, ११–क्रियायाम्, १२–इच्छायाम्, १३–दीप्तौ, १४–अवाप्तौ, १५–आलिङ्गने, १६–हिंसायाम्, १७–आदाने, १८–भागे, १९–वृद्धौ च । सूच्यामेकैकोऽर्थोऽकारादिक्रमेण विन्यस्तोऽस्ति तत्र तत्र च तद्धातुरपीति -जिज्ञासु रक्षणेऽर्थे धातु दृष्ट्वा ज्ञास्यति—√अव् धातु रक्षणार्थक एवेति । कथ स धातोरनूनकानर्थाञ्छक्नुयाद् युगपज्ज्ञातुम् ? पाठकैर्धातुदेश एव अर्था लभ्येरन् न त्वर्थदेशे धातव॰ । एवदृशा सा सूची जिज्ञासूनामेव नैव पण्डितानामपि प्रहेलिका जाता । प्रस्तुते ग्रन्थे भवन्त. कस्मिन्नपि धातौ सर्वधातुपाठानामर्थानेकत्र समुपलप्स्यन्तेऽकारादिक्रमके ।

प्रथमविभागस्य प्रथमे खण्डे गणस्य धातुसंख्यायाश्चोल्लेखो विद्यते । मयेह ग्रन्थे क्षीरतरङ्गिणीपाठः प्रामुख्येन गृहीत इति यत्र यत्र धातौ कस्यापि नामोल्लेखो न स्यात् तत्र तत्र क्षीरतरङ्गिण्याः सख्यादि विज्ञानीयम् । यो धातुः क्षीरतरङ्गिण्या नोपलब्धस्तत्र मया धातुप्रदीपस्य सख्या निर्दिष्टा । यत्र च धातुप्रदीपेऽपि यो धातुर्नावाप्तस्तत्र धातुवृत्तेः सख्यासमुल्लेखो व्यधायि । क्षीरतरङ्गिण्याः सस्करणद्वयमधिगतम्—डॉ॰ ब्रूनोलीबिशसम्पादित मीमासकयुधिष्ठिरसम्पादित च । द्वितीयस्य सख्याया भूयस्यव्यवस्थेति मया प्रथमसस्करणगतसख्या समुल्लिखिता । द्वितीये सस्करणे यत्र मनागपि भेदः परिलक्षितस्तत्र मया तत्सख्या सङ्केतिता । धातुवृत्तेर्महीसुर-वाराणसीप्रकाशित सस्करणद्वय समुपायोजि ।

प्रथमविभागस्य द्वितीये खण्डे परस्मैपदस्थाने (प) इति, आत्मनेपदस्थाने च ( आ ) इति प्रयुक्त विराजते । अर्थनिर्देशनस्थले क्षीरस्वाम्यादिनाम्नामाद्याक्षराणि गृहीतानि । यथा—"क्षी मैं-सा-श-च-जै काकृ-कात-शा-हे-वो" इति । क्षीरतरङ्गिणी-धातुप्रदीप-धातुवृत्ति-चान्द्रव्याकरण-काशकृत्स्नशब्दकलापधातुपाठ कातन्त्रधातुपाठ ( हस्तलेख )–कविकल्पद्रुमा उपलब्धा इति तत्साहाय्येन विरचितेऽयस्मिन् ग्रन्थे मया बालकृष्णगजाननपलसुलेमहाशयस्य सूच्यपि कात्स्न्र्येन समुपायोजि ।

यद्यप्येकादशधातुपाठैः पाठशुद्धेः प्रकाम निर्णयसम्भवः, तथापि मया सरस्वतीभवन-पुस्तकालयस्थधातुपाठाना सप्तहस्तलेखैः समपादि पाठभेदसङ्गतिः । तेषा सख्यादिनिर्देशः सहायकग्रन्थाना सूच्या वीक्षणीयः ।

धातुपाठमवलम्ब्य लिखिताष्टीकाष्टिप्पण्यश्चैतावच्चिर यावत् प्रायेण सन्ति कल्पनासम्भूता । व्याकरण वस्तुतः प्रयोगमाश्रित्य प्रवर्तते । प्रयोगशरणा वैयाकरणा इति व्याकरणग्रन्थेषु यत्र यत्र समाधिर्न सङ्गच्छते तत्र तत्र 'लक्ष्यानुसन्धानात्' 'अनभिधानात्' वेति प्रस्तूयते । यथा—'वचन्ति' इति रूप व्याकरणशुद्धमपि नोल्लिख्यते, अनभिधानात् । इत एव कारणाल्लक्ष्यैकचक्षुष्को लक्षणैकचक्षुष्काज्ज्यायान् आश्रूयते । वैयाकरणैः केवलकल्पनाभिरिद तथ्य प्रायेण विस्मृतम् । तैर्लक्ष्याण्यननुसन्धाय सलक्षणानुसन्धान कल्पनाः प्राबल्येन समाश्रीयन्त इति ते तथ्येभ्यः सुदूर गता. सन्ति । वैयाकरणा ऐतिह्यतस्तु दवीयस्त्व गच्छन्तो दृश्यन्ते । खातमिद समीकर्तु मया भूयः प्रयोगानाश्रित्य धातुसम्बन्धे विचारः प्रवर्तितोऽस्ति । एनमेव प्रयोग शरणीकृत्य ह्विट्नीर्नवशतसख्याकानेव धातूनङ्गीचकार । शेषाश्च धातूनप्रामाणिकान् उज्जुघोष, ते वैयाकरणै. परतो यथाबुद्धि सन्निवेशिता. स्युरिति । तेन सकुचितदृशा विचार्येय धारणा समास्थितासीत् । वस्तुगत्या सस्कृतभाषाप्रयोगविषयो विष्टपेऽस्मिन् तत्सम-तद्भव-देशजेति येन केनापि रूपेण वर्तत एव । सस्कृतवाङ्मयानुपलम्भादेव कमपि धातुमप्रामाण्किमङ्गीकर्तु न युज्यते । महाभाष्यकृता तथ्यमिद सुसाधु प्रस्फोरितम्—*सर्वे देशान्तरे*अत्रेति ।

भगवता पतञ्जलिना भाषाणा सुविचारितः स्वरूपपरिचयः प्रास्तावि । तेन समा भाषाः प्रयोग-विषयीकृता इति "सप्तद्वीपा वसुमती, त्रयो लोकाः"—कथनेन सुस्पष्ट भवति । साधुत्वासाधुत्व-(व्याकरण) विचारस्तु तदा परतः समुद्भवेद् यदा हि सुज्ञाना दिङ्नैयत्यस्य प्रयोगनैयत्यस्य वा चिन्ता जायेत । साधुत्वासाधुत्वविचारे च व्याकरण मूलम् । व्याकरण तु परवर्ति । तद्यथा—"वाग्वै पराच्यव्याकृता अवदत् । ते देवा इन्द्रमब्रुवन्—इमा नो वाच व्याकुरु इति" (तैत्तिरीये षष्ठकाण्डे) । अत्र वाण्या अव्याकृतत्व सुज्ञेयम् । अत्र मान्यता तैः शिष्टप्रयोगमाधृत्य प्रत्यज्ञायि । शिष्टैर्ये प्रयोगाः स्वीकृतास्ते ते साधुत्वसवलिता प्रख्यापिताः ।

भगवता पतञ्जलिना देशान्तराणा केषाञ्चिन्नामानि प्रयोगभेदाश्च समुदाहृताः—"एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा—शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एवैनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्यमेषु, गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु (गिरिधरशर्म-सपा.स. ५२ पृ. ) द्रष्ट. निरु. २,२,८ । अद्यत्वे √शव् धातोर्गत्यर्थकत्व सस्कृतप्रयोगेषु नोपलभ्यते

सत्यपि धातौ √शव् (गत्र) १/ गतौ (प) इति पाणिन्युल्लिखिते, तर्हि धातोरस्य गत्यर्थकत्वमपलापयितु शक्यते ? न शक्यते, कम्बोजेषु प्रयोगोपलम्भात्। उक्तभाष्यनिरुक्ताभ्या सिद्ध्यति यदेकस्यैव धातोर्देशान्तरेषु भवन्ति भिन्नभिन्ना अर्था इत्यशेषास्ते न शक्यन्ते सग्रहीतुम्। महामुनिना पाणिनिना √शव्धातोरार्यानुमोदित विकारार्थमनुपदिश्य कम्बोजप्रचलित गत्यर्थकत्वमेव समुपदिष्टम्, इत्येतेन व्यज्यते यत् तेन कुत्रापि प्रयुक्ता आख्यातरूपार्था प्राधान्यतो निरूपिता.। फलतो विद्वद्भिः समुपलब्धार्थपर्यन्ते नेयत्ता निश्चेया, देशभेदादर्थानामानन्त्यात्। इह ग्रन्थे धातौ धातौ देशान्तरप्रयुक्तधातूनामर्थाना च सङ्कलै यथागति प्रयतितम्।

तथ्यानि सर्वाण्येतानि समनुध्याय मया ग्रन्थस्यास्य सज्जायै वक्ष्यमाणा सामग्री समुपयोजिता—(क) भारोपीयान्याख्यातानि नामानि वा। (ख) भारेनीयान्याख्यातानि नामानि वा। (ग) वेदेभ्यः प्रभृति नाटकादिग्रन्थान् यावत् प्रामाणिकाः प्रयोगाः। (घ) पालिसाहित्ये समुपलब्धा' प्रयोगा.। (ङ) प्राकृतसाहित्ये समासादिता. प्रयोगाः। (च) अपभ्रशसाहित्ये समधिगता. प्रयोगा.। (छ) हिन्दीसाहित्ये भाषाशाखाया वोपलब्धा. प्रयोगा'। पुलिन्दखण्ड- (>बुन्देलखण्ड) भाषाऽस्ति मदीया मातृभाषेति कोशेष्वनुपलभ्यमानस्तच्छब्दो मया तत्र तत्र लिखित। तद्भाषामय' कोऽपि कोशो नाशक्यत प्राप्तु मया। इय भाषाशाखा खुरई (सागर म० प्र०) स्थऽस्य भाष्यमाणा प्रभाषेति। (ज) मुण्डारीभाषाया प्राप्ताः प्रयोगाः। (झ)— गणभाषा (पिशाचभाषा)-[दिशबाडी प्राकृत]-साहित्ये लब्धा सामग्री। (ञ) कश्मीरभाषेति। लक्षणाधारेण प्रणीतस्य भट्टिकाव्यस्य प्रयोगाः पूर्व मया सगृहीता अपि ते पश्चाद् बहिष्कृता'। महाभाष्यप्रयोगास्तु यथेप्सितमङ्गीकृता'।

निर्वचनप्रामाण्याय—निरुक्तम्, नामलिङ्गानुशासनम् अमरकोशोद्घाटिनी-रामाश्रमीसहित च समाश्रिते। क्वचित् स्थलेषूणादिव्युत्पत्तिरपि प्रादर्शि। एकस्यैव शब्दस्यानेकेभ्यो धातुभ्यो व्युत्पादितत्वाद् व्युत्पत्ति. प्रायेण काल्पनिक्येव। उदाहरणत्वेन—अन्त्रशब्द' √अन्त् १/ धातौ, अभ्रशब्द' √अभ्र् १/ धातौ, अर्बुदशब्द √अर्ब् १/ धातौ, अर्वन्शब्द' √अर्व् १/ धातौ, ऊर्दरशब्द' √उर्द् १/ धातौ प्रेक्षणीयः। एवमेवात्र ग्रन्थे सर्वत्र विचारितमस्ति।

प्रयोगोपस्थापनतत्परताया मया वैदिकपदानुक्रमकोश–(सम्पूर्णः, खण्डमेकमप्रकाशित विहाय) सेण्टपीटर्सबर्ग(ब्योथलिङ्क–रॉथ)कोश–शब्दकल्पद्रुमप्रभृतय. समाश्रिता. (द्र० सहायकग्रन्थाना सूची)। वाल्मीकीयरामायण-महाभारत-महाभाष्य-निघण्टु निरुक्त-मनुस्मृति-रघुवश-नैषध-यशस्तिलकचम्पूप्रभृतीनामक्षरश' सटीकमनुष्ठित मया पारायणमिति यत्र यत्र विहितष्टीकोल्लेखस्ते ते ग्रन्था मदधीता अवधेया, न तु कोशसगृहीताः। सेण्टपीटर्सबर्गकोशे महाभारतस्य पर्वाणि श्लोकसख्यया सह निर्दिष्टानि। अध्यायास्तत्र नोल्लिखिताः। सपत्स्यमाने सस्करणे मयाऽध्यायोल्लेखाय प्रयतिष्यते। तत्र वाल्मीकीयरामायणादिश्लोकसख्या'यद्यतनतत्सस्करणश्लोकादिसख्यया न सवदति प्रायशः। तन्मार्ष्टुमपीहा।

भारोपीयाः कोशाः सन्ति शार्मण्य-(जर्मन)-भाषामयाः। जूलियस्पॉकर्नीमहोदयस्य (यावत्प्रकाशित–), वाल्देपॉकर्नीमहोदयस्य च भारोपीयव्युत्पत्तिकोशावक्षरशो मया पर्यालो-

डितौ जर्मनभाषामयौ। संस्कृतविस्समाजस्य भवेद् बोधगम्या भारोपीयशृङ्खला, स्याच्च तद्विचाराणामिह दिशि प्रवर्तनेत्युद्दिश्य मया सत्यपि भूरिपरिश्रमसाध्ये कर्मणि तत् सर्वमपेक्षित कर्तुं प्रायत्यत संस्कृतभाषामयम्।

एतैर्विशेषैः प्रयासैर्मया धातवः प्रयोगशाणेन परीक्षिता.। ह्विट्नीयं धातु नाम्नी चकार तत्र धात्वादौ '+' एवञ्जातीयक चिह्नमस्ति सयोजितम्। प्रकृतधातुर्ह्विट्नीव्याख्यातधातुभ्यो व्यतिरिक्त इति तत्सङ्केताकूतम्। ह्विट्न्यननुमोदिता धातव ईदृशा मया प्रायश. प्रयोगैः प्रमाणिताः। एतादृशाना सूची द्रष्टव्या।

धातूनामुदाहरणानि नहि मस्यन्ते तिङ्प्रयोगा एव, अपि तु नामान्यपि तथा—"अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु"–निरु. २,२,८=धातोराख्यातपदभावेन यः प्रयोग सा प्रकृति'। नामीभूतस्य तस्यैव य. प्रयोग' सा विकृतिरिति दुर्गाचार्य'। ह्विट्नीमहाशयेनापि क्वचिन्नाम्नामेवोदाहरण प्रास्तावि। दृश्यताम्—√कद् धातु.। अन्येषा परिवर्तमानानामशा-नामपेक्षया मूले यस्य शब्दस्य स्थितिः प्रायशोऽपरिवर्तमाना परिलक्ष्येत स धातुत्वेन परिकल्प्यते। उदाहरणतः स्वर्णादिधातवो ग्राह्या'। कटककुण्डलादि यत् किमप्याभरण निर्मीयेत हेम्ना, तदाकारे भिन्नतापि नाम सम्पद्येत, जातु तन्नामान्यपि भिन्नतामापद्येरन्, मूलतो द्रक्ष्यते काञ्चनमेव न त्वन्यत्। एवमेव शब्दशास्त्रेऽपि—भवति,-बभूव,-भविता,-भूयात्,-अभूत्-प्रभृतिषु 'भू' इति भव् इति च स्थैर्येण दृश्येते, यदा हि—अति, अत',-अन्ति,-व, म,-इता, यात्,-त्–प्रभृतय प्रत्ययाः परिवर्तमाना भवन्तीति विचार्य वैयाकरणैर्निरधारि—एतेषा समेषा मूले विद्यते 'भू' इति। एतदेवाधृत्य धातूना तिङ्रूपानधिगतत्वेऽपि, सत्स्वेव नामसु, तत्र तत्र सन्ति कल्पिता धातव आचार्यै.। यथा–√शूल् १/५२६ रुजायाम्, √शच् १/१६३ व्यक्ताया वाचि, √शट् १/२९६ रुजाविशरणगत्यवसादनेषु, √शठ् १/३३७ कैतवे, √शण् १/७९१ प्रभृतयः।

पाणिनिप्रोक्तास्तदुपदिष्टा वा सन्ति कियन्तो धातव', परतश्च सन्निवेशिताः कियन्त इति दुःशको निर्णयः। न चानधिगततिङ्रूपनिभाना धातूना न पाणिनिप्रोक्तत्वमुपदिष्टत्व वेति वाच्यम्, "शव् गतौ" धातोरपि तथात्वासम्भवात्, तदुल्लेखस्य निरुक्तमहाभाष्ययोः सत्त्वादि-त्यस्माभिः समेऽपि धातवः प्राप्तपाणिनिपरम्परा उररीकार्याः। एतावति द्राघीयसि काले पाणिनीयैः विद्वद्भिर्देशभेदानुसारेण धातुपाठे बहूना पाठभेदाना सन्निवेशितत्वात् प्राप्तपाणिनिपरम्पर-त्वमस्य साधीयः। केचन पाठभेदा लिपिकाना भ्रान्त्या सञ्जाताः केचिच्चानवबोधेन (द्रष्ट.√कास् (कासि) १/६३७)। प्रयोगदृशा पाणिनीयधातुपाठो गणपाठतोऽपि गरीयान् वरीवर्तीत्यतो यावन्तः पाठभेदा इह सम्प्राप्यन्ते न तावन्तो व्याकरणस्य कस्मिंश्चिदपि ग्रन्थे। एतेनैवास्य प्रचुरप्रचारता शक्यते बोद्धुम्।

यत्र यादृशः पाठभेदः समासादितः, सङ्गतिं चेष्टमानेन मया तत्र '>' इति शरसङ्काशसङ्केत' समन्वस्थायि। शराणिदिशि पाठभेदोऽवगमनीयः। धातुपाठभेदमतिरिच्य विकासशृङ्खलायोजनेऽपीदमेव चिह्न सुध्यानीयम्। उक्तपाठभेदे हेतुचतुष्टयमत्र सुस्पष्ट निर्वर्ण्यते—

१—लक्ष्यभेद', २—देशभेदेनोच्चारणभेदाद् विकास', ३—हस्तलेखानामस्पष्टतयाऽनवबोधेन च भ्रान्ति', ४—संहितापाठः ।

१—लक्ष्यग्रन्थेषु प्राप्तरूपाणामनुसारेण केचन वैयाकरणा निर्दिशन्ति धातून् । हेमचन्द्र' √पल्यूल धातुमुल्लिलेख, तन्मतेन √पल्यूल धातुर्नास्ति । पल्यूलयतेः प्रयोगः काठ तै. शौ. पै. ( संहितासु ) लभ्यते । ग्रन्थानामेतेषामध्ययनात् तेन धातुरय निर्दिश्येत । पूर्व सर्वा वेदशाखा. सर्वैर्नाधीयन्ते स्म । तत्तच्छाखीयास्तत्तच्छाखा अभ्यस्यन्ति स्मेति तत्तत्क्षेत्रेषु तत्तद्ग्रन्था-नामेव प्रचारः स्वाभाविक. । √पल्यूल धातु. तैब्रा. १,३,५,२ इत्यत्र प्रयुक्तो लभ्यते । क्षीरवोपौ धातुमिममुल्लिलिखतुर्न तु √पल्यूलधातुमिति तज्ज्ञाताः काठ. १६,६, तै २,५,५,६, शौ. १२,४,९, पै १७,१६,९ इति ग्रन्था न स्यु. । अन्यथा तौ पल्यूलधातुमवश्यमुल्लिखेताम् । इममेव लक्ष्यभेद विचिन्त्य ओलडि १०/९ धातौ क्षीरस्वाम्याह—"इत्थ लक्षणमलक्षयताम् अन्धकुक्कुटीन्यायेन लक्ष्यमनुसरता कियदिव रुष्यामः, कियदिव तुष्यामः" इति । √चर्च्, √छर्च्छ्, √जर्ज्, √झर्झ् १/ परिभाषणे ( प ) इत्यत्र चाह—"किमत्र सत्य देवा ज्ञास्यन्ति" इति । √पुण् ( पुण ) १०/ सघाते ( प ) इत्यत्र च सायण. प्राह—"पुरुषकारे तु 'पूर्ण' इति स्वामी 'पुण' इति शाकटायन इत्युक्त्वा कोशसिद्धिस्त्वीदृशेऽर्थे कीदृशीति न विद्म इत्युपहसितम्" । अस्तु, √पल्पूल √पल्यूल इत्युभयोर्धात्वोः स्यात् सक्रान्तिः, लिपिदोषात् पकारस्य यकारत्वेन यकारस्य च पकारत्वेनापि बोधसम्भवात् ।

( २ ) देशभेदेनोच्चारणभेदाद् वर्णेषु जात परिवर्तनम् । एतादृशेषु स्थलेषु विद्यते तत्तद्वर्ग-वर्णसक्रमणप्राभृती । √कख् ( कखे ) १/ हसने धातु. √कक्ख् इति जायमानः सन् √खक्ख् इति विकासमापन्नः । इद सर्व तत्र तत्रैव निभालनीयम् । प्रतिधात्वेतादृशा विचाराः सन्ति प्रवर्तिताः । द्रष्ट युगि १/ >जुगि, बुगि १/ >भुगि, इति । वर्णविपर्ययेण √सिंह् १/३१६ h काकृधातुः √हिंस् ७/१९ इति जातः, विलोमक्रमेण वा । एवमेवार्थेऽपि √मस् ( मसी ) ४/ 'परिमाणे' इत्यस्य 'परिणामे' इति, √च्यु, √च्युस् १०/ इत्यत्र 'सहने' इत्यस्य च 'हसने' इति जातम् ।

( ३ ) इदानीन्तनीव सौविधी लिपिसम्बन्धिनी नासीत् प्राक्तने काले । अद्यतनमिव लिपिसङ्घटनात्मकमैक्यमपि सार्वदेशिक नासीत् तदानीम् । एकस्य हस्तलेखस्यानेका भवन्ति स्म प्रतिलिपयः । लिपिकराश्च प्रायशो न भवन्ति स्म विद्वास इति मक्षिकास्थाने मक्षिका अतिरिच्यान्यस्याक्षरस्यान्यत्वेन बोधो नैसर्गिकः । पूर्वतनस्य लिपिकरस्य त्रुटिभिः सह तस्य त्रुट्योऽपि सन्दृब्धा भवन्ति स्म । अनेकेषा लिपिकानामनेका भ्रान्तय पाठभेदे कारण जाता. । यथा—√मेव् ( मेवृ ) १/ सेचने ( प )—मै-सा काकृ-कात, सेवने—क्षी-च-जै-शा-हे । 'सेचने' इत्यत्र चकारादधस्तनपङ्क्तेर्घृष्टत्वान्मृष्टत्वाद् वा वकारभ्रान्तिः प्रकाम सिद्धा । वकारादधस्तनभागे मनाक्मस्या लग्नत्वाच्चकारभ्रान्तिरपि निश्चप्रचम्, एवमेव चकारपकारयो.—√व्यय् १०/९४ क्षये ( प ) इत्यस्य स्थाने √व्यप् इति पपाठ कौशिक इति क्षीरः ।

( ४ ) धातुपाठस्य संहितात्वेनोपदेशे "दश रामशराः" इत्यस्य "दशरा मशरा." इति वदनेका. जायन्ते विप्रतिपत्तय. । संहितापाठे पूर्वधातोर्वर्णस्य परधातौ सन्निवेशभ्रान्तयः,

पूर्वधात्वर्थाक्षरस्य परधातौ योजनाभ्रमाश्च सन्त्यनेकत्र । यथा—"वृतु ४/ वरणे" इत्यत्र "तप ४/ ऐश्वर्ये वा" इत्यस्य 'वा' 'योजनेन' वावृतु धातु. सम्पादित' । भट्टिकारेण क्वचिल्लक्ष्यमविचार्य लक्षणस्यानुसारेण "ततो वावृत्यमाना सा" ४,२८ इति रचयित्वा ततोऽप्यग्रे सशीतिरुपस्थापिता । √यु १०/ जुगुप्सायाम् इत्यत्र जुगुप्सायामित्यस्याद्याक्षर "जु" इति प्रकृते धातौ योजयित्वा गुप्सायाम् इत्यस्य ध्वनिसादृश्येन कुत्सायाम् इति सम्पादितम् इति "युजु कुत्सायाम्" जात. स्वतन्त्रो धातुः । अत्र सन्ति सर्वत्र पाठभेदा' । सर्वे च वैयाकरणा नैकमत्य भजन्ते । विस्तरग-स्त्विह पुस्तके विलोकनीयम् । सपाठभेद समेषा पाणिनीयधातूना विद्यते सख्या—२३५६ इति । भ्वादे' प्रभृति क्र्यादिपर्यन्त १७७४ धातव', चुरादौ च ५८२ इति ।

अनुपतञ्जलि वैयाकरणैः कल्पना. सुतमा समाश्रिताः, लक्ष्य प्रति तद्दृक्पातो नास्ति-नीकाशः । √तर्ज् ( तर्ज ) १०/१५१ सतर्जने (आ) इति धातुव्याख्याने क्षीरस्वामी लिलेख—"लक्ष्ये तर्जयतीति दृश्यते" इति । भट्टिकारोऽपि 'तर्जयन्त.' ७,३६ इति प्रयुज्येदमीयामेव प्रवृत्तिं पर्यचाययत् । यदा हि महाभारते 'तर्जयसे' इत्यस्य द्विःकृत्वो लभ्यते प्रयोग'—५,२४८५, १४,९१३ इत्यत्र । प्रयोगशोधन्या शक्यन्ते मार्ष्टुमिमा. सर्वा भ्रान्तयः । मयाऽत्रार्थे यथाप्राप्त-प्रयोगेण प्रयतितम् । अनेकेषा सस्कृतग्रन्थाना विलोपान्न मदिष्ट सर्वतः पूर्तिमगात् । धातुपाठस्य प्रततध्ययनार्थं प्रादेशिकभाषाकोशाना प्रस्तुतिर्निकाममपेक्षणीयेति विरमति

विदुषामनुचर —
भागीरथप्रसादस्त्रिपाठी 'वागीशः शास्त्री'
ज्येष्ठानुसन्धानपण्डितगणाभ्यन्तर.
( सीनियर-रिसर्च-फेलो )

वा० स० विश्वविद्यालये,
सवत् २०२२
रथयात्रायाम्

# सङ्केतबोधकसूची संस्कृतादिग्रन्थानाम्

अ =अथर्वशिखोपनिषद् ।
अ को =अमरकोश' ।
अ कौ सू =अथर्ववेदीयकौशिकसूत्राणि ।
अक्षि. =अक्ष्युपनिषद् ।
अचि =अभिधानचिन्तामणिः ।
अद्भुब्रा =अद्भुतब्राह्मणम्
अनर्घरा =अनर्घराघवम्
अना =अमृतनादोपनिषद्
अन्न. =अन्नपूर्णोपनिषद्
अभि =अभिज्ञानशाकुन्तलम्
अमरु =अमरुशतकम्
अ वे =अथर्ववेदः ( शौनकसहिता )
अ वे प्रा =अथर्ववेदप्रातिशाख्यम्
अव्य, अव्यक्तो. =अव्यक्तोपनिषद्
अशि. =अथर्वशिर उपनिषद्
१ आ, आत्मो =आत्मोपनिषद्
आ. च., आ॰ चन्द्रिका =आख्यातचन्द्रिका
आनन्दलह =आनन्दलहरीस्तोत्रम् ।
आबो. =आत्मबोधोपनिषद्
आर्यासप्तश. =आर्यासप्तशती
आर्षे, आर्षेयो =आर्षेयोपनिषद्
आश्व. गृ, आश्व. गृह्य. =आश्वलायनगृह्यसूत्रम्
आश्रौ., आश्व. श्रौ. =आश्वलायनश्रौतसूत्रम्

इ, इतिहासो =इतिहासोपनिषद्
उणा =उणादि.
उत्तररा., उत्तररामच =उत्तररामचरितम्
ऋ. =ऋग्वेदसहिता ।
ऋ प्राति =ऋग्वेदप्रातिशाख्यम्
ऋ म (निरुक्तादिटीकोद्धृत–) =ऋग्वेदसहिता ।
ऐ, ऐतरेयो. =ऐतरेयोपनिषद्
ऐआ. =ऐतरेयारण्यकम्
ऐब्रा =ऐतरेयब्राह्मणम्
क. =कपिष्ठल (कठ) कृष्ण यजुर्वेद-सहिता
कठरुद्रो., करु. =कठरुद्रोपनिषद्
कठो. =कठोपनिषद्
कथासरि =कथासरित्सागरः
का. =काण्वसहिता ( शुक्लयजुर्वेदीया )
काठ =काठक ( चरक ) कृष्णयजुर्वेदसहिता
कादम्ब. = =कादम्बरी
का प्र, कव्यप्र =काव्यप्रकाशः
काब्रा. =काण्वशाखीय शतपथब्राह्मणम्
काशीख =काशीखण्डम् ( स्कन्दपुराणस्य )
काश्रौ, कात्याश्रौ. =कात्यायनश्रौतसूत्रम्
काला =कालाग्निरुद्रोपनिषद्
किराता. =किरातार्जुनीयम्
कुण्डिको. =कुण्डिकोपनिषद्
कुमारसं. =कुमारसंभवम्

कृ.
कृष्णो. } =कृष्णोपनिषद्

केनो. =केनोपनिषद्

कौ. =कौथुमसामवेदसंहिता

कौलो. =कौलोपनिषद्

कौषीतकिब्राह्मणो. =कौषीतकिब्राह्मणोपनिषद्

कौषीतक्या. =कौषीतक्यारण्यकम्

क्रि. र. स =क्रियारत्नसमुच्चय

खि =( ऋग्वेदीय ) खिलसूक्तानि

खिसा. =( ऋग्वेदीय-) खिलसूक्तानि ( सातवलेकरसंस्करणम् )

ग.
गणपत्यु } =गणपत्युपनिषद्

ग. पु. =गरुडपुराणम्

गरु.
गरुडो. } =गरुडोपनिषद्

गर्भ.
गर्भो } =गर्भोपनिषद्

गी. =( श्रीमद्भगवद्- ) गीता ।

गी. गो.
गीतगो. } =गीतगोविन्दकाव्यम् ।

गु.
गुह्यकाल्यु. } =गुह्यकाल्युपनिषद्

गोउ. =गोपालोत्तरतापिन्युपनिषद्

गोगृ
गोभि. गृ } =गोभिलगृह्यसूत्रम्

गोच. =गोपीचन्दनोपनिषद्

गोपू. =गोपालपूर्वतापिन्युपनिषद्

गोब्रा. =गोपथब्राह्मणम्

च. प. स्तो. =चर्पटपञ्जरीस्तोत्रम्

चरक. =चरकसंहिता

चिकि =चिकित्सास्थानम् ( सुश्रुतस्य )

छन्दोम. =छन्दोमञ्जरी

छाग.
छागलेयो. } =छागलेयोपनिषद्

छान्दो
छान्दोग्यो } =छान्दोग्योपनिषद्

जाब्रा. =जाबाल्युपनिषद्

जै =जैमिनीयसामवेदसंहिता

जैउ =(जैमिनीय-तलवकार-)उपनिषद्ब्राह्मणम्

जैब्रा. =जैमिनीयब्राह्मणम्

ताब्रा. =ताण्ड्यब्राह्मणम्

ति. =तिलकटीका ( वाल्मीकीयरामायणे )

ते.
तेजोबिन्दू } =तेजोबिन्दूपनिषद्

तै. =तैत्तिरीयकृष्णयजुर्वेदसंहिता

तैआ =तैत्तिरीयारण्यकम्

तैउ. =तैत्तिरीयोपनिषद्

तैप्रा.
तैस. प्रा. } =तैत्तिरीयसंहिताप्रातिशाख्यम्

तैब्रा =तैत्तिरीयब्राह्मणम्

त्रिका. =त्रिकाण्डशेषः

त्रिता =त्रिपुरातापिन्युपनिषद्

त्रि.
त्रिपुरोप. } =त्रिपुरोपनिषद्

दे. भा. =देवीभागवतम्

देव्यु. =देव्युपनिषद्

दैब्रा. =दैवतब्राह्मणम्

त्रिवि.
त्रिपाद्विभूतिमहानारायणो } =त्रिपाद्विभूतिमहानारायणोपनिषद्

नाप
नारदपरिव्राजको. } =नारदपरिव्राजकोपनिषद्

नाद.
नादबिन्दूप. } =नादबिन्दूपनिषद्

निरु. =निरुक्तम्

नि.
निघ. } =निघण्टुः

निर्वा. =निर्वाणोपनिषद्

नील. =नीलकण्ठीया टीका ( महाभारते )

नृपू.
नृसिंहपूर्वतापिन्यु. } =नृसिंहपूर्वतापिन्युपनिषद्

नैष. =नैषधमहाकाव्यम्

पञ्चत. =पञ्चतन्त्रम्

पञ्च. ब्रा.
पञ्चविंब्रा. } =पञ्चविंशब्राह्मणम्

पा. अ. =पाणिनीयाऽष्टाध्यायी

पारमात्मिको =पारमात्मिकोपनिषद्

पी.
पीताम्बरोप. } =पीताम्बरोपनिषद्

पिंब्र. =पिण्डब्रह्माण्डोपनिषद्

पै. =पैप्पलादाऽथर्ववेदसंहिता

प्रका =प्रकाशटीका

प्रतापरुद्रीय =प्रतापरुद्रीयम्

प्रश्नो =प्रश्नोपनिषद्

प्रायश्चि. =प्रायश्चित्तेन्दु

बटुको. =बटुकोपनिषद्

बा
बाष्कलो } =बाष्कलोपनिषद्

बि.
बिल्वो. } =बिल्वोपनिषद्

बृहत्स.
बृ स. } =बृहत्संहिता

बृहदारण्यको. =बृहदारण्यकोपनिषद्

बृजा.
बृहज्जाबालो. } =बृहज्जाबालोपनिषद्

ब्रह्मवै
ब्र वै पु } =ब्रह्मवैवर्तपुराणम्

ब्रसू =ब्रह्मसूत्रम्

ब्रह्मो =ब्रह्मोपनिषद्

भ
भस्मजाबालो. } =भस्मजाबालोपनिषद्

भव.
भवसतारणो. } =भवसतारणोपनिषद्

भा.
भावनो. } =भावनोपनिषद्

भा.पु
भाग पु. } =भागवतपुराणम्

मब्रा
मन्त्रब्रा. } =मन्त्रब्राह्मणम्

मण्डलब्राह्मणो =मण्डलब्राह्मणोपनिषद्

मत्स्यपु =मत्स्यपुराणम्

मनु =मनुस्मृतिः

मन्त्रिको. =मन्त्रिकोपनिषद्

मन्वर्थ =मन्वर्थमुक्तावली (मनुस्मृतिटीका)

मभार. =महाभारतम्

मभाष्य. =महाभाष्यम्

महा.
महो. } =महोपनिषद्

महावीरच =महावीरचरितम्

महीध. =महीधरभाष्यम्

मा =माध्यन्दिनसंहिता (शुक्लयजुर्वेदीया)

मा पु.
मार्क पु } =मार्कण्डेयपुराणम्

मालतीमा. =मालतीमाधवम्

मित्र. =मित्रलाभः

मुक्तिको. =मुक्तिकोपनिषद्

मुण्डको. =मुण्डकोपनिषद्

मुद्राराक्ष. = मुद्राराक्षसम्

मृच्छ.
मृच्छकटि. } =मृच्छकटिकम्

मेघ.उ. =मेघदूतम् (उत्तर—)

मेदि. =मेदिनीकोशः

मै =मैत्रायणी संहिता

मैत्रि.
मैत्र्यु } =मैत्र्युपनिषद्

मैत्रे.
मैत्रेय्यु } =मैत्रेय्युपनिषद्

(य)वा.स. =(यजुर्वेदीया) वाजसनेयसंहिता

यशस्ति.च. =यशस्तिलकचम्पूः

याज्ञ.
याज्ञवल्क्य. } = याज्ञवल्क्यस्मृतिः

यो
योगकुण्डल्यु. } = योगकुण्डल्युपनिषद्

योचू. = योगचूडामण्युपनिषद्

योत. = योगतत्त्वोपनिषद्

योशि = योगशिखोपनिषद्

रघु. = रघुवशमहाकाव्यम्

राजत = राजतरङ्गिणी

रापू = रामपूर्वतापिन्युपनिषद्

रार. = रामरहस्योपनिषद्

रुजा. = रुद्रजाबालोपनिषद्

रुहृ = रुद्रहृदयोपनिषद्

ललित = ललितविस्तर-

लाट्या.
लाट्या श्रौ } = लाट्यायनश्रौतसूत्रम्

व.
वनदुर्गो. } = वनदुर्गोपनिषद्

वटु.
वटुको. } = वटुकोपनिषद्

वउ.
वरदोत्तरतापिन्यु. } = वरदोत्तरतापिन्युपनिषद्

वपू.
वरदपूर्वतापिन्यु } = वरदपूर्वतापिन्युपनिषद्

वरा
वराहो } = वराहोपनिषद्

वा रा. = वाल्मीकीय रामायणम्

वा. स = वाजसनेयमाध्यन्दिनसहिता।

विक्रमाङ्कदेव. = विक्रमाङ्कदेवचरितम्

वै. प. को. = वैदिकपदानुक्रमकोषः

श क द्रु. = शब्दकल्पद्रुमकोशः

शत्रुञ्जयमा. = शत्रुञ्जयमाहात्म्यम्

शत सु स = शतकत्रयादिसुभाषितसग्रहः

शब्रा = शतपथब्राह्मणम्

शा
शाण्डिल्यो. } = शाण्डिल्योपनिषद्

शाआ = शाङ्खायनारण्यकम्

शाब्रा
शाङ्खा ब्रा. } = शाङ्खायनब्राह्मणम्

शागृ = शाङ्खायनगृह्यसूत्रम्

शार्ङ्ग स = शार्ङ्गधरसहिता

शाकु. = शाकुन्तलम्

शाङ्खा.श्रौ
शाश्रौ. } = शाङ्खायनश्रौतसूत्रम्

शि = शिवोपनिषद्

शिशु. = शिशुपालवधम्

शौ. = शौनकीयाथर्ववेदसहिता

श्वे.
श्वेताश्वतरो } = श्वेताश्वतरोपनिषद्

श्री.व्या = श्रीधरीया व्याख्या ( गीतायाम् )

षब्रा. = षड्विंशब्राह्मणम्

सब्रा = सहितोपनिषद्ब्राह्मणम्

सन्या.
सन्यासो } = सन्यासोपनिषद्

ससा.
सर्वसारो. } = सर्वसारोपनिषद्

साब्रा. = सामविधानब्राह्मणम्

सा भा = सायणीय भाष्यम्

सार. = सामरहस्योपनिषद्

सुबा = सुबालोपनिषद्

सौ. = सौभाग्यलक्ष्म्युपनिषद्

स्क.पु = स्कन्दपुराणम्

सजी. = सजीविनी ( मल्लिनाथटीका )

हरिवश. = हरिवशपुराणम्

ह
हसो. } = हसोपनिषद्

## सङ्केतबोधकसूची पालिग्रन्थानाम्

अगुत्तर. = अगुत्तरनिकाय-

दीघ = दीघनिकाय-

मज्झिम. = मज्झिमनिकाय-

विनय = विनयपिटक-

सयुत्त. = सयुत्तनिकाय–

सद्दनी. = सद्दनीति–

## सङ्केतबोधकसूची प्राकृतापभ्रंश-( भाषा )-ग्रन्थानाम्

अभि. = अभिज्ञानशाकुन्तल–

आचा. = आचाराङ्गसूत्र–

आवम = आवश्यकसूत्र-( मलयगिरिटीका )

उप. = उपदेशपद–( हस्तलिखित– )

उपपृ. = उपदेशपद-( जैनविद्या-प्रचारकवर्ग-, पालीताणा– )

उव. = उवएसमाला

उवा = उवासगदसाओ

ओघ = ओघनिर्युक्ति–

औप. = औपपातिकसूत्र–

कप्प. = कल्पसूत्र–

कप्पू. = कर्पूरमञ्जरी–

कस = ( बृहत् ) कल्पसूत्र–

काल. = कालकाचार्यकथानक–

कुप्र = कुमारपालप्रतिबोध–

कुमा. = कुमारपालचरित–

गउड. = गउडवहो

गा. = गाथासप्तशती

जी. = जीवविचार–

जीवस. = जीवसमासप्रकरण–

ठा. = ठाणङ्गसुत्त ( स्थानाङ्गसूत्र– )

णाया. = णायाधम्मकहासुत्त–

णदि. = णदिसूत्र–

तदु. = तदुलवेयालियपयन्नो

ती. = तीर्थकल्प–

दस = दसवैकालिकसूत्र–

दसनि. = दसवैकालिकनिर्युक्ति–

दे. / दे. ना. } = देशीनाममाला

देवे = देवेन्द्रस्तवप्रकीर्णक–

धर्मवि. = धर्मविधिप्रकरण–( सटीक– )

धर्मस. = धर्मसग्रहणी

धर्मा = धर्माभ्युदय–

* नाट = नाटकीयप्राकृतशब्दसूची ।

* नाट–सा = साहित्यदर्पण–

निचू. = निशीथचूर्णि–

निर. = निरयावलीसूत्र–

पच. = पचसग्रह–

पचा. = पचासकप्रकरण–

पउम. = { पउमचरिअ / पउमचरिय

पडि. = पचप्रतिक्रमणसूत्र–

पण्ण. = पण्णवणासुत्त–

पण्ह. = प्रश्नव्याकरणसूत्र–

पव. = प्रवचनसारोद्धार–

पाअ. = पाइअलच्छीनाममाला

पा. स. म. = पाइअसद्दमहण्णवो

पिंग. = प्राकृतपिंगल–

पिंड = पिंडनिर्युक्ति–

पिंडभा = पिंडनिर्युक्तिभाष्य

पि. = ग्रामातिक देर प्राकृत स्प्राखन्

प्रयौ. = प्रतिज्ञायौगन्धरायण–

प्राप्र. = प्राकृतप्रकाश–

प्रामा. = प्राकृतमार्गोपदेशिका

प्रासू. = प्राकृतसूक्तरत्नमाला

भग. = भगवतीसूत्र–

भत्त. = भत्तपरिण्णापयन्नो

भवि. = भविस(य)त्तकहा

---

* द्र. 'पाइअसद्दमहण्णवो' इति प्राकृतशब्दकोशः ।

महा. = आउस् गेव्याल्ते एरस्यालुगन् इन् महाराष्ट्री
मै = मैथिलीकल्याण–
मोह. = मोहराजपराजय–
रभा. = रभामजरी
रत्ना = रत्नावली ( नाटिका )
रयण. = रयणसेहरनिवकहा
राज = अभिधानराजेन्द्र–
वव = व्यवहारसूत्र–( सभाष्य–)
वाग्भ = वाग्भटकाव्यानुशासन–
विक्र. = विक्रमोर्वशीय–
विपा = विपाकश्रुत–
विसे = विशेषावश्यकभाष्य–
वेणी. = वेणीसहार–
वै. = वैराग्यशतक–
श्रा. = श्राद्धप्रतिक्रमणसूत्रवृत्ति–
स.
सबो. } = सबोधसत्तरी
सक्षि = सक्षिप्तसार–
सबोध. = सबोधप्रकरण–
सवेग = सवेगमजरी
स = समराइच्चकहा
सट्ठि = सट्ठिसयपयरण–
सण. = सनत्कुमारचरित–
सम. = समवायागसूत्र–
सम्म. = सम्मतिसूत्र–
सम्मत्त. = सम्यक्त्वसप्तति–
सम्य. = सम्यक्त्वस्वरूपपच्चीसी–
सम्यक्त्वो. = सम्यक्त्वोत्पादविधिकुलक–
सिरि. = सिरिसिरिवालकहा–
सुख = सुखबोधा टीका ( उत्तराध्ययनस्य )
सुज. = सूर्यप्रज्ञप्ति–
सुपा. = सुपासनाहचरिअ–
सुर. = सुरसुदरीचरिअ–
सूअ. = सूअगडागसुत्त–
सूअनि. = सूत्रकृताङ्गनिर्युक्ति–
से = सेतुबध–
हित. = हितोपदेशसारकुलक–
हेका. = हेमचन्द्रकाव्यानुशासन–

## हिन्दीग्रन्थः

अ. अ.
अभि. अनु. } = अभिधान अनुशीलन

## आंग्ल-शार्मण्यादि ग्रन्थानां सङ्केत-बोधकसूची

डब्ल्यू. जेड्. के. एम्. = विएना ओरिएण्टल जर्नल्
अमे. ओ. सो. जर्नल = अमेरिकन् ओरिएण्टल सोसाइटी जर्नल्।
जेड् डी. डी. एम्. जी. = Zeitschrift der Deutschen Morgenländischen Gesellschaft
पी. टी. एस्. पालि–डिक्श. = पाली टेक्स्ट् सोसाइटी पालि डिक्शनरी
पि. = ग्रामातिक् देर् प्राकृत स्प्राखन्
पीटर्सब. = ( सैंट ) पीटर्सबर्ग ( सस्कृत ) व्योर्थर् बुख्—व्योथलिङ्क ऑत्तो : रॉथ रुडॉल्फ्।
महा = आउस् गेव्याल्ते–एरस्यालु गन् इन महाराष्ट्री
मा. विलि. = मानियर् विलियम् : ( सस्कृत-इंग्लिश्–डिक्शनरी )
B K A = Barret, ( L C.: The ) Kashmirian Atharva-veda ( with critical notes )

G R V = Geldner, (K F der) Ṛgveda (i-iv übersetzt und erlautert)

G W = Grassmann, (H) Wörterbuch (zum Ṛgveda)

M V G = Macdonnell, (A A Vedic) Grammar

O R N = Oldenburg (H) Vedic (Hymns, trans.)

W A G = Wackernagel, (J): Altindische Grammatik



# सामान्यसङ्केताः

अक = अकर्मक—
अड्या. = अड्यारसंस्करणे ( अप्रकाशितोपनिषद् )
आ.
आश्वा } = आश्वासः
( आ ) = आत्मनेपदम्
आन. = आनन्दाश्रमसंस्करण—
कवकृ. = कर्मणि वर्तमानकृदन्तः
कात = कातन्त्र ( व्याकरणम् )
काकृ = काशकृत्स्न—
कृ. = कृत्यप्रत्ययान्तः
क्रि. = क्रियापदम्
क्षी = क्षीरस्वामी
क्षी. = क्षीरतरङ्गिणी
गी.प्रे.सं. = गीताप्रेसगोरखपुरीयसंस्करणम्
च = चन्द्रः ( चान्द्रव्याकरणम् )
चौ.सं. = चौखम्बासंस्करणम्
जू. = जूलियस् ( पॉकर्नी )
जै = जैनेन्द्रव्याकरणम्
टी = टीका
तु.
तुल. } = तुलनीय—(तुलना कार्या)
देश. = देशज.
तौदा. = तौदादिक—
द्र.
द्रष्ट. } = द्रष्टव्य—
धा. = धातुः
नाप. = नाम ( परक ) पद—
नाधा.
नामधा. } = नामधातुः ।
निसा. = निर्णयसागरसंस्करण—
( प ) = परस्मैपदम्
पाठा. = पाठान्तरम्—
पाभे = पाठभेदः
पुरुप = पुरुपकार.
पृ = पृष्ठम्
प्रपु = प्रथमपुरुष.
प्रभृ = प्रभृति—
प्रयो. = प्रयोजक—(प्रेरणार्थकणिजन्तः)
प्रे. = प्रेरणा (प्रेरक—)
ब्योथ = ब्योथलिङ्क (पीटर्सबर्गसंस्कृतकोशः)
भकृ. = भविष्यत्कृदन्तः
भवि. = भविष्यत्काल.
भाप = भावपरकपद—
भूका = भूतकालः
भूकृ. = भूतकृदन्त.
मपु = मध्यमपुरुष.
मुपा. = मुद्रितपाठ—(प्राग्र—)
मै = मैत्रेयः
यक्र. = यथाक्रम—
यु.मी.सं. = युधिष्ठिरमीमांसकसंस्करण—
लाल. = लालकविः([हि.] छत्रप्रकाशस्य रचयिता)
वकृ. = वर्तमानकृदन्तः
वा = वाल्दे (पॉकर्नीः)
वि.ब शा. = विश्वबन्धुशास्त्री
वे = वेङ्कटात्मज-माधव-भाष्य—(ऋ.)
वैतु. = वैपरीत्येन तुलनीय—
वै.प.को.
वैदि.प.को. } = वैदिकपदानुक्रमकोषः
वो = वोपदेवः
श = शर्ववर्मा
शा = शाकटायनः

संकृ =संबन्धककृदन्तः
सा =सायणः
सू =सूत्रम्
स्क. =स्कन्दस्वामिकृतभाष्य–
ह ले. =हस्तलेख–
हे =हेमचन्द्र.
हेकृ =हेत्वर्थकृदन्त.
ह्वि =ह्विट्नी. ( विलियम् ड्वाइट् )
* एतच्चिह्नयुतस्य शब्दस्य प्रयोगो हिन्द्या. पद्य एव ज्ञेयः। भारोपीयभाषायाम् एतच्चिह्न-युतः शब्द काल्पनिकोऽववेय.।
† एतच्चिह्नयुत' शब्द प्रादेशिको निश्चेय.
‡ एतच्चिह्नाङ्कित शब्दः ग्राम्यो निर्धारणीयः।
—इद चिह्नम् 'इति' इत्यर्थकम्।
˘ अक्षराधोभागे लग्नमिद चिह्न तालव्यस्थान-बोधकम्।
˓ इद चिह्नम् अर्द्धस्यैकारस्य बोधकम्।

॰ इद चिह्न ७ इत्यस्य बोधकम्



# सङ्केतबोधकसूची भाषाणाम्

अप. = अपभ्रंश–
अफ़गा. = अफ़गान्–
अर्मे = अर्मेनियन्–
अलेम = अलेमनिक्–
अल्बे = अल्बेनियन्–
अवे. = अवेस्ता–
आइस् = आइस्लैण्डिक्–
आस्से. = आस्सेतन्–
इँग्लि. = इँग्लिश्–
इता = इतालियन्–
इरा = इरानियन्–
इरि. = आइरिश्–
ऍंग्लो-सैक्सॉ. = ऍंग्लो सैक्सॉन्–
किम्रि = किम्रिक्–
गॉथि. = गॉथिक् ( Gothic )
गाथि-अवे = गाथिक-अवेस्ता–
गुर्जरभा = गुर्जरभाषा
च स्ला = चर्च स्लावोनिक्–
डिंग. = डिंगल–
न उ. ज. = नवीनोच्चजर्मन्–
न पर्सि. = नवीनपर्सियन्–
न. ब्रेटॉ = नवीनब्रेटॉनिक्–
नार्वे. = नार्वे ( नार्वेजियन्– )
पु. आइस्. = पुरातन–आइस्लैण्डिक्–
पु. ऑस्क. ( ao. ) = पुरातन-आस्कन–
पु इरि. = पुरातन-आइरिश्–
पु. उ. ज. = पुरातनोच्चजर्मन्–
पु च स्ला. = पुरातनचर्चस्लावोनिक्–
पु नार्दि. = पुरातननार्दिक्–
पु. प्र. = पुरातनप्रशियन्
पु बुल्गा = पुरातनबुल्गारियन्–
पु ब्रेटॉ. = पुरातन ब्रेटॉनिक्–
पु. म उ ज. = पुरातनमध्योच्चजर्मन्–
पु रसन् = पुरातनरसन्
पुरा हि = पुरातनहिन्दी–
पु लिथु = पुरातनलिथुआनियन्–
पु सैक्सॉ = पुरातनसैक्सॉन्–
बगा = बगला–
बु ख. = बुदेलखण्डीय–
बुल्गा = बुल्गारियन्–
बोहे = बोहेमियन्–
ब्रेटॉ. = ब्रेटॉनिक्–
म इँग्लि. ( mengl ) = मध्य इँग्लिश–
म इरि. = मध्य आइरिश्
म किम्रि = मध्यकिम्रिक्–
म ज = मध्यजर्मन्–
म नीदै. = मध्यनीदैलैंण्डिक्–
मरा = महाराष्ट्रिय–
मैथि = मैथिल–
लिथु = लिथुआनियन्–
लेट्टि. = लेट्टिश्–
लैति. = लैतिन्–
शौ. = शौरसेनी
स. = सस्कृत–
सर्बि. = सर्बियन्–
सैर्ब्रो क्रोटि. = सैर्ब्रो-क्रोटियन्–
स्वीडि. = स्वीडिश्–
स्ला., स्लावो. } = स्लावोनिक्–



# विषयसूची

| विषय | पृष्ठसंख्या |
| --- | --- |
| १—प्रास्ताविकम् | क–ख |
| २—प्रवृत्तिनिमित्तम् | ग–घ |
| ३—उपोद्घात: | ङ–ञ |
| ४—सङ्केतबोधकसूची संस्कृतादिग्रन्थानाम् | ट–थ |
| ५—सामान्यसङ्केता: | द–ध |
| ६—सङ्केतबोधकसूची भाषाणाम् | न |
| ७—पाणिनीयधातुपाठसमीक्षा | १–७३४ |
| (क) भ्वादे: प्रभृति: क्र्याद्यन्ता धातव: | १–५६६ |
| (ख) चुरादिगणधातव: | ५६७–७३४ |
| ८—ह्विट्नीमहोदयेन न्यक्कृता इह ग्रन्थे च प्रयोगै: साधिता धातव: | ७३५–७४९ |
| ९—अनुपलब्धप्रयोगा धातव: | ७५०–७६१ |
| १०—साक्षादुपयोजितानां ग्रन्थानां सूची | ७६२–७६४ |
| ११—शुद्धिपत्रम् | ७६५ |



# पाणिनीयधातुपाठसमीक्षा

रघुनाथं शिवं नत्वा क्षेत्रेशं च गुरुद्वयम् ।
धातुपाठसमीक्षेयं तन्यते लक्ष्यसाधना ॥

√अंह् ( अहि ) १/६२८ गतौ ( आ )
शं ×
क्षी-मै-सा-च-जै-
कात-शा-हे ।
वक्रगतौ—काकृ ।
गते—वो ।

√अङ्ग् (अगि) १/१४५
गत्यर्थः ( प ) ।
√अङ्घ् (अघि) १/१०५
गत्याक्षेपे ( आ ) ।
√अघ् १/४१३ गत्याक्षेपे
( आ ) कांकृ ।
√अंह्व १/३१५ कलुषे (प)
काकृ ।
√अह्व १/३१६ हिसागत्योः
( प ) काकृ ।
√अंह्व (अहि) १०/
भासार्थः ( प ) ।

क—अंघु् ( अथवा एघु् ) = सकीर्णम् , कारावासे, बन्धने । * अंघोस्—, अंघे्स् = क्रूरता । लैति.—अंगार् = बन्धने, व्यग्रता, मनःशरीरवेदना, दुःखम् । अंगुस्—तुस् = संकीर्णम् , कारावासे, बन्धने । पु फ्रि अंगॉस्त् , पु उ. ज. अंगुस्त, म. उ. ज. अंग्स्त् , पु. च. स्ला. अजॉस्त् = कारा, बन्धनम् । लिथु. अक्स्तस् = संकीर्णम् , कारावासे—वा. पॉकर्नीः ।

ख—अवे. अंजह्व = अपेक्षा, आपत् , बन्धनम् , कारावासः ।

ग—अंहस् क ४, २, ९ । अंहतिः—ऋ ८, ६४, ९ । अह्नि काठ १, १२ । मा २, ८ ।

+√अक् (अक) १/७८६ कुटिलायां गतौ (प)
शं ×
क्षी-मै-सा-च-जै-काकृ-कात-
शा-हे ।
वक्रगते—वो ।

√अच् ( अचु ) १/८४७ गतौ
( प ) इत्येके—क्षी ।
√अख् १/३८ गतौ ( प )
काकृ ।

√अग् (अग) १/७८७ कुटिलायां गतौ (प)।
√अंक् (अकि) १/८४ लक्षणे (आ)।

√अङ्क् १/८४ उत्तरधातोर्व्याख्यानमवलोकनीयम्।

√अक्ष् (अक्षू) १/६४५ श× — व्याप्तौ संघाते च क्षी-मै-सा-जै-काक्-कात-शा-हे। व्याप्तौ—च व्याप्तिसंहत्योः—वो। — √अश् (अशू) ५/१८ व्याप्तौ (आ) क्षी-मै। व्याप्तौ संघाते च—सा-हे। √अक्ष् ५/ व्याप्तिसंहत्योः (प) श-वो। √अक्ष १/५१५ खेलने (आ)। आष्ट (निघ. २/१८) = व्याप्तिकर्मा। √अह्व (अह) ५/२६ व्याप्तौ (आ)।

क—अगु = प्रेरणे, उन्नतौ, शुद्धौ। अगुस्,—अक्स् = स्कन्धः, आधारः। लैति.—अक्सिस् = तनुदण्डः, पक्ष्मध्यवर्तिनी नाडी। लिथु.—असिस्। लेट्टिश्—अस्स्। पु. च. स्ला.—ऑस। पु. उ. ज.—अह्स, न. उ. ज.—अछ्से = अक्षः—वा. पॉकर्नीः।

ग—(१) अक्ष्णुते, अक्ष्णुयात्—मै ४,२,९। (२) अक्षतु—पै १०,२,३। ब्रह्मलोकं समक्षसे—वा० रा० २, ५२, ८६।

√अक्ष्>√अश्>√अह् इति क्रमिको विकासो लक्ष्यते। भ्वादि-स्वा-द्युभयत्रत्योऽयं धातुः सौविध्यार्थं भ्वादावेव पठितः पाणिनिना विकल्पितश्नुतया चोपदिष्ट. (पा ३/१/७५)।

+√अग् (अग) १/७८७ श× — कुटिलायां गतौ (प) क्षी-मै-सा-च-जै-कात-शा। अकवत् (=कुटिलायां गतौ) हे। वक्रगते—वो। — √अज् (अज) १/ गति-क्षेपणयोः (प)। √अज् १/६०४ कुटिलायां गतौ (प) काक्। √अक् (अक) १/ कुटिलायां गतौ (प)।

| | | |
|---|---|---|
| ( काक्ष — √अज् ) | कुटिलायां गतौ—काक्ष। | √अग् १/४१० आदाने (आ) काक्ष। |
| संभवतो लैपिकी स्खलतिः। | | अग्रम् —निरु. ६,३,१। |

क—अग्रो—अथवा—ऑग्रो = निशितः कण्टकः, ( उच्चम् , प्रथमम् ) अग्रम्-वा पॉकर्नी.।

ख—अवे. अग्र = उच्चम् , परिधिः, स्थानम्।

ग—अग्निनाग्निः समिध्यते—ऋ १, १२, ६। प्रत्यग्रं शृणीहि—ऋ ३, ३०, १७।

छ—अगरना ❀ = अग्रे गमनम् , अग्रे भवनम्।

छ—अगुआना (अग्रु—नि. १/१३-नदीनामधेयम्। २,५—अङ्गुलि-नामधेयम् ) = अग्रेकरणम्।

| | | |
|---|---|---|
| +√अङ्क् (अकि) १/८४ लक्षणे ( आ ) | | √अञ्च् (अचि) १/८४७ गतौ ( उ )। |
| श × | क्षी-मै-सा-च-जै-काक्ष-कात-शा। | √अञ्च् (अञ्चु) १/१८५ गतिपूजनयोः (प)। |
| | लक्षणे गतौ च—हे। | √अञ्च् (अञ्चु) १०/२११ विशेषणे ( प )। |
| | लक्ष्मणि गत्याञ्च—वो। | √अङ्ग् (अगि) १/१४५ गत्यर्थः ( प )। |
| | | √अङ्ग (अङ्ग) १०/३७३ लक्षणयोः ( प )। |
| | | √अङ्ग (अङ्ग) १०/३७२ पदलक्षणयोः ( प ) इत्येके —क्षी। |
| | | √अङ्क (अङ्क) १०/३७३ पदलक्षणयोः ( प ) इत्यन्ये —क्षी। |
| ( लक्षणम् = | चिह्नम् —क्षी ) | |

क—अंक् — न्युब्जीभावे, कौटिल्ये।

ख—अवे. — अक = वडिशम् , ग्रहणम् , विपत् , शङ्कुः, पिधानम्। अंकस-नेह् = कविका, शासनम् , संयमः — वा. पॉकर्नीः।

ग—अङ्काः — ऋ १, १६२, १३।

छ—√अँकना ❀

छ—√ आँकना = ( १ ) अङ्कनम् , ( २ ) मापनम् , ( ३ ) अनुमितिकरणम् , निर्णयनम् ।

अङ्केति क्षिप्रनाम। अञ्चितमेवाङ्कितं भवति (निरु ५/१७) इत्ययं धातुः √ अञ्च् १/८४७ गतौ, √ अङ्ग् १/१४५ गत्यर्थः, (√ अङ्क १०/३७३ पदलक्षणयोः) प्रभृतिधातुभिः संबध्नाति। जी बुइलरमतेन ( डब्ल्यू . जेड के एम् . — वियेना-शोधपत्रिकाया अष्टमे बन्धे, १८९४ ई., १७-४२ पृ ) जलमर एड्ग्रेन-महाशयस्य मतेन च ( अमे. ओ सो. ज एकादशे बन्धे, १-५४ पृ. ) निरनुनासिका धातवः सति सम्भवे सानुनासिका भवन्ति। व्याकरणदृशापि “अकाराः” निरनुनासिक-सानुनासिकभेदेनाष्टादशविधाः सम्पद्यन्ते-इति √ अच् धातुः √ अञ्च्, √ अक् धातुश्च √ अङ्क् इति भेद प्रपद्येते। एवमेव सर्वत्रावगमनीयम्। शास्त्री विश्वबन्धुरपि वैदिकपदानुक्रमकोशे ( संहिताभागे ) अङ्कशब्दस्य टिप्पण्यां लिखति—“कौटिल्यार्थेन √ अक इत्यनेनापि नुमागमनिपातनतो यथाकथमपि सम्बन्धः साध्यतामर्थानुसन्धानतः”। आवेस्तः “अक” शब्दोऽप्यङ्कशब्दस्य पूर्वावस्था लक्षयतीति।

| | | |
|---|---|---|
| +√ अङ्ग (अगि) १/१४५ गत्यर्थः ( प ) | | √ अञ्च् ( अचि ) १/१४७ गतौ ( उ )। |
| श × | क्षी-मै-सा-च-कात। | |
| | गतौ — जै-शा-हे। | |
| | गत्याम्—वो। | पूर्वधातोः समग्रा ध्वनयो बोधनीयाः। |
| काङ्क-√ रिङ्ग् (रिगि) परन्तु टीकायाम् | गतौ — काङ्क। | अङ्चयन् ( = वर्णानालोञ्चयन् शनैः शनैः ) — शब्रा- १, ७, २, १७। |
| | | पर्यङ्क्याते — ऋ. १०, १६, ७। |
| अङ्गति, इति तिष्ठति। | | |

क—अंक् = न्युब्जीभावे, कौटिल्ये, अंग् —। पु उ. ज. एंक = ग्रीवापृष्ठदेशः, जङ्घा। पु. उ. ज. अंगो, अंगुल = कण्टकः। पु. आइस्. अंगि, एंग्लो-सै. ओंग् = अग्रम्, कण्टकः — वा. पॉकर्नीः।

ख—अवे. अंगुस्त = अङ्गुष्ठः—वा. पॉकर्नीः।

ग—पल्यङ्क्यन्ते—शब्रा० ३, ९, २, १६ अनवस्थाने। पल्यङ्क्यमाने ७, ३, ३, १२। ( सा तेऽङ्गे त्वङ्गतु — नलोदये १/२३ )। पल्यङ्क्य — १, ७, १, १८। कात्या. श्रौ. ८, २, १।

घ—अग — जातक ५, १९, ७।

छ—आँग ॐ १ = अङ्गम्।

छ—अँगवना ※ = ( १ ) अङ्गीकरणम् , ( २ ) आच्छादनम् , ( ३ ) सहनम् ।

| | | |
|---|---|---|
| +√अङ्घ् ( अघि ) १/१०५<br>श × | गत्याक्षेपे ( आ )<br>क्षी-मै-सा-च-जै काकृ-<br>कात शा-हे ।<br>गते निन्दारम्भजवेषु-वो । | √अह्न ( अहि ) ( १/६७८ )<br>गतौ ( आ ) । वक्रगत्याम्-<br>काकृ ।<br>√अघ् १/४१३ गत्याक्षेपे<br>( आ ) काकृ । |

गत्याक्षेपः = वेगगतिर्गमनारम्भो वा–क्षी ।

क—द्रष्ट √अंह्न १/६२८ ।

ग—अङ्घ्रिः–मा २, ८ ।

अयम् , √अंह्न १/६७८ ( आ ) धातुश्च मिथः सङ्क्रान्तौ । अघशब्दोऽप्यस्माद् व्युत्पद्यते–पचाद्यच् ३, १, १३४। आगमशास्त्रस्यानित्यत्वान्न नुम् । इह √अघ् १/४१३ गत्याक्षेपे ( आ ) काकृ-धातुस्तुलनीयः ।

| | | |
|---|---|---|
| √अच् ( अचु ) १/८४७<br>श-च-जै-काकृ कात-<br>वो × | गतौ ( उ ) इत्येके-क्षी<br>क्षी-सा-हे ।<br><br>गतौ याचने च—मै । | <√अञ्च् (अचि) गतौ (उ) ।<br>√अज् ( अज ) १/२२६<br>गतिक्षेपणयोः ( प ) ।<br>√अच्छ् १/३५५ गतौ<br>( प ) काकृ ।<br>√अक् ( अक ) १/७८६<br>कुटिलायां गतौ ( प )। |

क—अंक् = न्युब्जीभावे, कौटिल्यम्–वा. पॉकर्नीः ।

ग—पर्यचामि हृदा मतिम्–ऋ १०, ११९, ५। अङ्गुलीः–न्यचति–शत्रा. ३, १, ३, २५ । अप अच–ऋ ९, ९७, ५४ , कौ २, ४५६, जै ३, ३४, १४ ।

| | | |
|---|---|---|
| √अज् ( अज ) १/२२६<br>श × | गतिक्षेपणयोः ( प )<br>क्षी-मै-सा-जै ।<br>गतौ - च ।<br>गतौ क्षेपणे च — काकृ-<br>कात-शा-हे ।<br>क्षेपे गते — वो । | √अच् ( अचु ) १/८४७ गतौ<br>( प ) इत्येके-क्षी ।<br>√अञ्च् ( अञ्चु ) १/१८५<br>गतिपूजनयोः ( प ) ।<br>√अञ्ज् ( अन्जू ) ७/२१<br>व्यक्तिम्रक्षणगतिषु ( प )।<br>√अग् ( अग ) १/७८७<br>कुटिलायां गतौ ( प )।<br>√अक् ( अक ) १/७८६<br>कुटिलायां गतौ ( प )। |

क—अग् =प्रेरणे। अगोः।
ख—अवे अजैति=प्रेरणे—जू पॉकर्नीः।
ग—अजन्ति-ऋ ९, ९१, १।

√अञ्च् (अन्चु) १/१८५ गतिपूजनयोः (प)

श क्षी-मै-सा-जै-काक-कात।
गत्यर्थः—च।
गतौ पूजायां च—शा-हे।
पूजे गते च—वो।

√अच् (अचु) १/८४७ गतौ (प) इत्येके-क्षी।
√अञ्च् (अचि) १/८४७ गतौ (उ)।
√अङ्क् (अकि) १/८४ लक्षणे (आ) लक्षणे।
गतौ च—हे।
√अङ्ग् (अगि) १/१४५ गत्यर्थः (प)।

क-अंक्, अंग्=न्युब्जीभावे कौटिल्ये-वा पॉकर्नीः।
ग-आञ्चतु-शौ ११, १२, १६। आके - ऋ २, १, १०, अञ्चिताभ्याम् गताभ्याम्—रघु. २, १८।
ङ-अंच (सक.) = गमने। अंचति (पंचा १६, २३)।
,, ( ,, ) = पूजने। अंचए (भवि)।
० यंच ( ,, ) = गमने पूजने च (ठा ५, १—पत्र ३००)।
ज-आचुर = गमने।

√अञ्च् (अचि) १/८४७ गतौ (उ)
पूजे—वो।
मै-श-च-जे-क्षी-सा-
हे-काक-कात-शा ×

√अञ्च् (अन्चु) १/८६५ गतौ याचने च (उ) मै।
√अच् (अचु) १/८६५ गतौ याचने च (उ) इत्येके—मै।
√अञ्च् (अन्चु) १/१८५ गतिपूजनयोः (प)।

इदित् पाठः पूजायां नलोपाभावात्—दुर्गादा.।
उदाहरणानि पूर्वधातोरवगन्तव्यानि।

√अञ्च् (अन्चु) १/८६५ गतौ याचने च (उ) मै

क्षी-श-जै-शा × मै-सा।
गतौ—च-काक-कात।

√अच् (अचु) गतौ याचने च (उ) इत्येके—मै।

गतौ अव्यक्तशब्दे—हे।
गते क्लिष्टोक्तौ च—वो। शेषः पूर्ववत्।
क्लिष्टोक्तिः = अव्यक्तशब्दः—दुर्गादास.।
पूर्ववदुदाहरणानि ज्ञेयानि।

छ—इंचना * / ऐंचना } (<अञ्चनम्) = आकर्षणे, गमने, प्रापणे, आकुञ्चने च।
उँचना (<उदञ्चनम्) = अधोवयनस्य दृढीकरणे कर्षणे च।

√अञ्ज् (अन्जू) ७/२१ व्यक्तिम्रक्षणगतिषु (प)

√अच् (अचु) १/८४७ गतौ (प) इत्येके—क्षी।

श व्यक्तिम्रक्षणकान्तिगतिषु

√अञ्च् (अन्चु) १/१८५ गतिपूजनयोः (प)।

मै-सा-काकृ-कात-हे।

√अज् (अज) १/२२६ गतिक्षेपणयोः (प)।

व्यक्तौ—च।

√अग् (अग) १/७८७ कुटिलायां गतौ (प)।

गतिव्यक्तिम्रक्षणेषु—जै-शा।

√अक् (अक) १/७८६ कुटिलायां गतौ (प)।

व्यक्तिगतिम्रक्षणे—वो।

√अञ्ज् (अजि १०/२२८ भासार्थः (प)।

क—आंगु = अभ्यङ्गे, अभिषेके। लैति. उंक्तुस्, उम्तु। पु प्र अंक्तन्, अँक्ते = म्रक्षणम् (नवनीतम्)। पु उ. ज अंखो, जर्मन, अंके = म्रक्षणम् (नवनीतम्)- वा. पॉकर्नीः।

ग—अनक्ति-ऋ १, १५३, २।

घ—अञ्जति (अञ्जेति)-संयुत्त २, २८१, जातक ४, २१९।

ङ—अज (सक.) = म्रक्षणे (समवायांगसूत्र)।

छ—{ ऑजना = म्रक्षणे कान्तौ। / ओंगना = म्रक्षणे (शकटाक्षस्य)।

√अट् (अट) १/२९२ गतौ (प)

श क्षी-मै-सा-च-जै-काकृ-कात-शा-हे।
गत्याम्—वो।

√अत् (अत) १/३७ सातत्यगमने (प)।

√अठ् (अठ) १/२३२ गतौ (प)।

ग—अटसि—सार. २३० : १४। अटति सर्वशः—मभार. १, १०३१। पम्पामटति—वा. रा. ३, ७५, ६८।

ङ—अड ( सक ) = भ्रमणे। अडति ससारे ( पण्ह १,१ ) ( णाया १,१४ )।

छ— { अॅटना (<√ अट् गतौ ) = लये, ( २ ) पूरणे, ( ३ ) चलने, (४) क्षपणे।
अटना ( <√ अट् गतौ ) = भ्रमणे, ( २ ) याने।

ज—आड़ा = निर्मोचने।

| | | |
|---|---|---|
| +√ अट्ट् ( अत्ट ) १/२५२ अतिक्रमहिंसयोः ( आ ) १/२५२ श-च-जै-काकृ-शा× | √ अट्ट १०/७७ मञ्जिकायाम् क्षी-सा। अतिक्रमणहिंसयोः-मै। हिंसातिक्रमयोः-हे। अतिक्रमे वधे—वो। | ( प ) काकृ। √ अन्त् १/४३० क्रमहिंसयोः (आ) काकृ। |
| [ कात-√ अट्ट् ( अट्ट ) ]। | अतिक्रमहिंसयोः—कात। | √ अट्ट् ( अट्ट ) १०/२५ अनादरे ( प ) इति च दुर्गः-क्षी। √ अट्ट् ( अट्ट ) १/१०१ हिंसातिक्रमयोः ( आ ) जै। √ अट्ट् ( अट्ट ) १/६३ हिंसातिक्रमयोः (आ) शा। √ अट्ट् ( अट्ट )अतिक्रमे वधे ( आ ) वो। |

ग—साट्टप्राकारतोरणाम्—वा. रा ५, ३, ३३।

अस्य धातोस्तिङ्रूपाणि नोपलभ्यन्ते। इदमीया व्युत्पत्तिस्तु √ अत् १/३७>√ अन्त् १/४३०-काकृ। >√ अण्ट् १/२५८-सा। >√ अट्ट् इति बोधनीया। अतिशायने रोषे वधे हर्षे च प्रसक्तस्य वर्णस्य द्वित्वप्रवृत्तिर्नैसर्गिकी-इति √ अत् १/३७ >√ अट् १/२९२>√ अट्ट्। यथा √ पट् > पट्ट, पट्टिश, √ कुट् > √ कुट्ट् > कुट्टिमः, √ हट् > हट्टः, √ भट् > भट्टः, √ घट् > √ घट्ट् > घट्टः, √ चट् > चट्टः, √ खट् > √ खट्ट इति भूयिष्ठाः शब्दा धातवश्च ज्ञानीयाः।

टे १ मेदिनीकोशेऽट्टशब्दस्यार्थाः—१. शुष्कम, २. भक्तम् = अन्नम्, आटा ( हिन्दी )। ३. क्षौमम, ४. अत्यर्थम्, यथा—अट्टहासः। ५. गृहान्तरम्, यथा—साट्टप्राकारतोरणाम्—वा० रा० ५, ३, ३३।

| | | |
|---|---|---|
| +√ अट्ट् (अट्ट) १/२५२ अतिक्रमहिंसयो : (अ) श-जै-काकृ-कात-शा× | अन्ये तु—क्षी। क्षी-सा। अतिक्रमणहिंसयोः—मै। अतिक्रमे—च। हिंसातिक्रमयोः—हे। अतिक्रमे वधे—वो। | <√ अट्ट् ( अत्ट ) अतिक्रमहिंसयोः (आ)। √ अन्द् १/४३० a क्रमहिंसयोः (आ) काकृ। |

व्याख्यानं पूर्वधातुतो बोधनीयम् ।

| | | |
|---|---|---|
| +√अठ् (अठ) १/३३२ | गतौ (प) | √अत् (अ) १/३७ सातत्यगमने (प) । |
| मै-सा-श-च-काक्र-कात× | क्षी-जै-शा हे । | √अट् (अट) १/२९२ गतौ (प) । |
| | गते—वो | √अण्ठ् (अठि) १/२५८ गतौ (आ) । |
| | | √अण्ड् (अडि) १/४३५ गतौ (आ) । |

√अत्>√अट्>√अठ् इति क्वचिद् देशविशेषे व्यवहृतः स्यात् । अस्यासार्वत्रिकत्वादेव मैत्रेयसायणादयो नैनमनुमोदयामासुः । मन्ये, एतत्प्रयोगविषयः पश्चिमोत्तरसीमा भवेद् भारतस्य, जैनेन्द्रहेमचन्द्रनिवासभूभागो वा ।

| | | |
|---|---|---|
| +√अड् (अड) १/३५३ | उद्यमे (प) | √अल् (अल) १/५१६ भूषण-पर्याप्तिवारणेषु (प) । |
| श× | क्षी-मै-सा-च-जै-काक्र-कात-शा-हे-वो । | अल्ल् १/२२७ बन्धने पालने च (प) काक्र । |
| | | √अड् ५/२६ व्याप्तौ (प) हे । व्यापे—वो । |
| | | √अठ् (अठ) १/३३२ गतौ (प) । |

ग—अडः=वृश्चिकलाङ्गूलम् (धा. वृ., ८२ पृ.) । वृश्चिकलाङ्गूलमुद्यतं तिष्ठतीत्यडः । व्याडः>व्यालोऽपि तथा । √अड्√अल् इत्येतयोर्निकामं मिथः संक्रान्तिः । आडिर्नाम पक्षिविशेषः । वसिष्ठो विश्वामित्रं शशाप-वको भव । विश्वामित्रोऽप्याचुक्रोश वसिष्ठम्-आडिर्भवेति । यथा मार्कण्डेयपुराणे-"त्वमप्याडिर्भवस्वेति प्रतिशापमयच्छत्" (९/१०) ।

छ—आड़त=उद्यमः, आड़तिया=उद्यमशीलः ।
ज—अड़ांग्=लक्ष्यसाधने ।

| | | |
|---|---|---|
| +√अड्ड् (अड्ड) १/३४५ अभियोगे (प) | | √अट्ट् (अट्ट) १/२५२ अतिक्रमहिंसयोः (आ) । |
| श | क्षी-मै-सा-च-जै-काक्र-कात-शा-हे-वो । समन्ताद्योगे—गोविन्दभट्टः । (ब्योथ-रॉथ) समाधाने—दुर्गादासः । (ब्योथ-रॉथ) । | |

छ—अड़ना=हठे ।

अड्डाना=आश्रयणे, अवरोधने। अड्डान (<√अड्ड्=समाधाने)=विश्राम-स्थलम्।

? अड्डा।

ज—आडाओ=अनाज्ञाकारितायाम्।

+√अण् (अण) १/४३७ शब्दार्थः (प)

श×

क्षी-मै-सा-च

शब्दे—जै-काक्र-कात-शा-हे।

रवे—वो।

√अल् (अल) १/५१६ भूषणपर्याप्तिवारणेषु (प)।

√अड् (अड) १/३५३ उद्यमे (प)।

√अण् (अण) ४/६७ प्राणने (आ) सा।

क—अल्=चूर्णने, अणुत्वे—वा. पॉकर्नीः।

ड—अण (सक)=शब्दे, (२) गमने, (३) ज्ञाने। अणइ (विसे ३४४१)।

## प्राकृते प्रयुक्तोऽयं लभ्यते धातुरिति प्रत्युक्तो ह्विटनीः।

+√अण् ( अण ) ४/६७ प्राणने ( आ ) सा.

क्षी-मै-श-च-जै-काक्र-कात-शा×

सा-हे।

प्राणे—वो।

√अन् ( अन ) ४/७० प्राणने ( आ ) मै।

√अन् ( अन ) २/५९च=प्राणने ( प )।

√अन् ( अन ) २/५९ प्राणने ( प ) धातोरयं देशविशेषे प्रयुक्तो दैवादिको भेदः साहित्ये नाधिगम्यते। अतो वैयाकरणा अपि पाठे नैकमत्यं भजन्ते। √अन् २/५९ इत्यनेन प्रोपसर्गयोगे, कर्मणि–"प्राण्यते" इति रूपात् प्रोपसर्गस्थविच्छित्तौ "अण्यते" इत्यस्य भ्रान्त्या स्याद् धातुत्वस्वीकारः।

+√अण्ठ् ( अठि ) १/२८ गतौ ( आ )

( सा )√अण्ट् ( अटि ) क्षी-मै-( सा )-च-जै-कात-शा-हे।

श×

गते—वो।

[ काक्र–√अण्ड् (अडि) ] गतौ—काक्र।

√अत्(अत) १/३७ सातत्यगमने ( प )।

अठ् ( अठ ) १/२३२ गतौ ( प )।

अड् ५/२६ व्याप्तौ (प) हे। व्यापे-वो।

√अण्ड् १/१७९ आवरणे ( प ) काक्र।

ग—दाहपाकरुगण्ठिते गुल्मे—सुश्रुत. २,४५५,११।
छ—ऐंठना=वेष्टने (गतौ), (२) पीडायाम्।

| | | |
|---|---|---|
| +√अत् (अत) १/३७ श× | सातत्यगमने (प) क्षी-मै-सा-च-जै काकृ-कात-शा-हे। | अतति (निघण्टौ २/१४) गतिकर्मा √अट् (अट) १/२९२ गतौ (प)। |

क—अत्=गमने—जू. पॉकर्नीः। लैति. अन्तुस्—वा. पॉकर्नीः।

ग—समतसि कपोत इव गर्भधिम्—ऋ. १,३०,४। अतन्नहेव सूर्यः—ऋ. ६,६,९।

ज—आतु=उड्डयने, (२) भ्रमणे, (३) प्रवाहे।

| | | |
|---|---|---|
| √अद् (अद) २/१ श | भक्षणे (प) क्षी-मै-सा-च-काकृ-कात-शा-हे। भक्षे—वो। | √खद् (खद) १/५० भक्षणे (प) सा। √जक्ष् (जक्ष) २/६० भक्षहसनयोः (प)। |

क—एद्=भक्षणे। लैति. (एदो) एस्=अदने। स्ला.-*एद्मि। जस्ति=भक्षणे। गॉथि. इतन्, एतन्, एज्ञन्=अदने। अर्मे. उतेम्=चुल्लिः-वा. पॉकर्नीः।

ग—अत्ति-ऋ. १,१६४,२०। भागवते भौवादिकोऽपि-"साकमन्नमदामहे"-३, २०, ५१।

घ—अदेमि-जातक ५,३१।

ज—{ आद्=हानौ। आदेर=प्रवेशे।

| | | |
|---|---|---|
| √अन् (अन) २/५९ श | च=प्राणने (पा) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो। | √अन् (अन) ४/७० प्राणने (प) मै। √अन्त्र् १०/५ जीवने (प) काकृ। √अनिति (निघण्टौ २/१४) गतिकर्मा। √अन्त् (अति) १/५९ बन्धने (प)। |

क—अन=प्राणने, श्वसने-जू. पॉकर्नीः।

ग—( अनिति )-अनन्-शब्रा. २,५,३,३, अन्यात्-तैआ. ८,७,१ । अपानिति-काठ २९,६ ।

| | | |
|---|---|---|
| √अन् ( अन ) ४/७० | प्राणने ( आ ) मै । | √अन् ( अन ) २/५९ प्राणने (प) । |
| क्षी-श-च × | मै-सा-जै-काक्र-कात-शा-हे-वो । | √अण् ( अण ) ४/६७ प्राणने ( प ) सा । |

क्षीरचन्द्राभ्यामपठितोऽयम् असार्वत्रिकत्वं व्यनक्ति । अपोपसर्गविशिष्टस्य "अपान्यते" इति कर्मणि प्रयोगस्योत्तरांशग्रहणप्रचारोऽप्येनं पुष्णाति ।

| | | |
|---|---|---|
| +√अन्त् ( अति ) १/५९ | बन्धने ( प ) | √अन्द् ( अदि ) १/६० बन्धने ( प ) । |
| श-जै-शा × | क्षी-मै-सा-च-काक्र-कात—हे । | √इन्त् ( इति ) १/६० ( प ) अन्ये-क्षी । |
| | बन्धे—वो । | √अम् ( अम ) १/४५९ गत्यादिषु ( प ) । |

ग—अन्तकः-वा. रा. ३,३,१४ ( गी. प्रे. गो. सं. ) ।

√अन्द् धातोश्चत्वादियं धातुः । अत एव सायणः-"अत्र धनपालः-तान्तं द्रविडाः पठन्ति । आर्यास्तु दान्तमिति । उभयमिति मैत्रेयस्वामिकाश्यपसम्मताकारादयः"-१/६१ । √अन्त्√अन्द्,√इन्द्,√बिन्द्√गण्ड्-पञ्चैते न तिङ्विषयाः-इति काश्यपः । अविगीतमन्ये सर्वेषां तिङमुदाहरन्ति-सा. १/६१ ।

√अन्द् ( अदि ) धातोस्तिङ्प्रयोगविषयत्वात् ( हिन्द्याम् ) ( प्रेक्षणीय उत्तरधातुः )√अन्त् धातोश्चातथाभूतत्वान्नूनमेष परवर्ती । अतो हेतोः पुरुषकारः स्वामिनो मतमुल्लिलेख-"अतेः पाठोऽनार्षः । अन्ये 'अदि इति बन्धने' इति पेठुः" ( पुरुष० ७५ पृ० ) । नायं पाठः क्षीरतरङ्गिण्या लभ्यते ।

[ अन्तः ( अन्तनम्-घञ् ३/३/१८ । "अन्तः स्वल्पे निकटे प्रान्ते निश्चय-नाशयोः । अवयवेऽपि" इति हेमः । अन्तकः = यमः ( अन्तं करोति-अन्तयति । "तत्करोति ( वा० ३/१/२६ ) इति ण्यन्ताद् ण्वुल् ) । एवमेव—अन्तरम् , अन्तरा, अन्तरायः, अन्तरालम् , अन्तर् , अन्तरिक्षः, अन्तिकम् , प्रभृति-शब्दाः सम्बध्नन्त्यनेन । अन्त्रम् = पुरीतत् ( आंत-हिन्दी )-शब्दोऽप्यस्माद् व्युत्पद्यते । यथा-उणा० ४/१५९ ष्ट्रन् । काशकृत्स्नस्तु√अन्त्र १०/५ जीवने धातुं पृथक् पठति । दशोणादौ√अम् १/१५९ धातुतो व्युत्पत्तिः ( ४/१५८ ) ष्ट्रन् , उणादावपि ४/१२३ । अन्त-शब्दोऽपि √अम् धातुतो व्युत्पद्यते-( उणा. ३/८६ ) इति तन् । इत्थम्√अन्त् धातुः सर्वथा निरस्तो भवति ]

+√अन्द् ( अदि ) १/६० बन्धने ( प ) क्षी-मै-शा-च-जै-काक्र-कात-शा-हे । बन्धे-वो ।
श ×

√अन्ध (अन्ध) १०/३७० दृष्ट्युपसंहारे (प) ।

घ-अन्दु = शृङ्खला-विनय १,१०८ ।

छ-ॲंदाना ( <सं √अन्द् बन्धने ) = वारणे । रक्षणे ।

-ऑदू = लौहशृङ्खला । ॲंदुआ (<अन्दुकः ) = गजपश्वपादबन्धनाय कण्टकितं काष्ठयन्त्रम् ।

ज-अन्दूड़ ( पन्दूड़ ) = उन्मत्तप्रलापे । उन्मत्तदोलने ।

+√अभ्र् ( अभ्र ) १/५५५ गत्यर्थः ( प ) क्षी-मै-सा-च । गतौ—जै-काक्र-कात-शा-हे । गत्याम्-वो ।

√अर्ब् ( अर्ब ) १/४११ गतौ ( प ) । अप्+√रा = अभ्र > √अभ्र् ।

क—( एनेभ् ) : नेभ्-, एम्भ्, मृभ्, एम्ब् ( आम्ब् ) = अभ्रम् । किम्रिक-अम्ब्यूर्, अमिर्, अम्यू् = यथाशीघ्रम्, अम्पेर् तथा एम्मेर् ।

ख—अवे. अव्र=अभ्रम्—वा. पाकर्नीः ।

ग—[अभ्रम्-"अभ्रं व्योमपुष्करमम्बरम्" ( अ० को० १/२/१ ) । अत्र भानुजिदीक्षितश्चतुर्विधां व्युत्पत्तिं दर्शयति—१. न बिभर्ति किञ्चित् । मूलविभुजादित्वात् ( वा० ३/२/५ ) कः । २. आपो भ्रश्यन्त्यस्मात् । अन्येभ्योऽपि ( वा० ३/२/१०१ ) । अत्र पक्षे अब्भ्र इति स्यात् ( मुकुटः ) । ३. अभ्रति = स्थैर्यं गच्छति । अच् ( ३/१/१३४ ) । ४. ( स्वामिमते ) न भ्राजते । √भ्राज् (भ्राजृ) दीप्तौ । अन्येभ्योऽपि ( वा० ३/२/१०१ ) इति डः । "अभ्रं मेघो वारिवाहः" ( अ. को. १/३/७ ) इत्यत्र अपो बिभर्ति । ( ३/२/५ ) इति कः । अत्र स्वामी—"अभ्रति, अपो राति वा—अभ्रम् । न भ्रश्यन्त्यापोऽस्माद् इत्येके, यदुक्तम्—न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यतः ( पुराणम् )" ।

अभ्राद् वृष्टिः—शब्रा. ( Apte's Practical Sanskrit English Dictionary ), शिशु. ९,३ ।

√अम् ( अम ) १/४५९ गत्यादिषु ( प ) क्षी-मै-सा ।
श

√अण्ड् ( अण्ड ) १/१७० आवरणे ( प ) काक्र ।

√अम्म् १/२२५ गतौ ( प ) काक्र ।

आदिपदेन–शब्दे संभक्तौ
( भक्तौ–क्षी ) च ।
गतिभक्तिशब्देषु–जै-शा ।
गतौ–काकृ-कात ।
गतौ भजने शब्दे–वो ।

न कम्यमिचमाम्-८०२
श-जै-शा-हे-वो ×

क–आँमो–, आम=तीव्रगतौ, पुनःपूरणे। दारुणवेदनायाम्, हानौ, बाधायाम्।

ख–अवे.–अम=शक्तौ–वा. पॉकर्नीः।

ग–अभ्यमीषि–ऋ १,६४,९, आमयति–ऋ. १०,९७,९।

ङ–अम ( सक )=१–गमने, २–शब्दे, ३–अभ्यवहारे, ४–पीडने, ५–( अक ) रोगितायाम्। अमइ ( विसे ३३५३ )।

+ √अम्ब ( अबि ) १/३७५ शब्दे ( आ ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो।

अम् ( अम ) १/४५९ गत्यादिषु ( प ) आदिपदेन–शब्दे संभक्तौ ( भक्तौ–क्षी ) च।
√अम्भ् ( अभि ) १/३८२ शब्दे ( आ ) इति दुर्गः–क्षी।
√रम्भ् ( रभि ) १/ शब्दे ( आ ) इति दुर्गः–क्षी।

क—( एनेभ्– ) : नेभ्–, एम्भ्–, मृभ्। एम्ब् ( आम्ह् )=अभ्रम्। अर्मे. अम्प्=पाने–वा. पॉकर्नीः।

ग—पञ्चस्रोतोऽम्बुम्—श्वेता. उ. १,५, सुश्रु. २,४९३। अम्बु ( निघण्टौ १/१२ )। अम्बा स्मालं भवतीति–निरुक्ते ९/१०। अम्ब–वा. सं. ६,३६।

यद्यपि नोपलभ्यते धातोरस्य क्रियापदम्, तथाप्येषोऽपलपितुं न शक्यते। अनार्यभाषाप्रभावोऽपि नात्र वक्तुमुचितः, वेदातिरिक्तानां भूरीणां शब्दानामार्यभाषात एव विकसितत्वात्। √अम् १/४५९ धातुरस्ति प्रयुक्त ऋग्वेदे। शब्दार्थकोऽप्येष धातुः–√अम् √अम्ब् इति सुज्ञेयं विकासमाप। ये हि "म्ब"युताञ्छब्दान् अनार्यभाषाप्रभवान् भणन्ति ते निकामं प्रत्यादिष्टाः। स्वरा रेफोत्तरा अपि जायन्ते, यथा–√अण् शब्दार्थः √रण् शब्दार्थः। √इ २ / गतौ < √रि ६ / गतौ। √इङ्ख् ( इखि ) १। गत्यर्थः > √रिङ्ख् ( रिखि ) गत्यर्थः। अत एवोक्तं काव्यमीमांसायाम्—

ललल्कारया जिह्वं जर्जररस्फाररेफया।
गिरा भुजङ्गाः पूज्यन्ते काव्यभव्यधियो न तु ॥ ७।

अयं श्लोको रेफप्रयोगाधिक्यं निर्दिशति। √अम्> √अम्ब्>√रम्ब् १/३७३। अन्त्यवर्णस्य महाप्राणतया √अम्ब्>√अम्भ् १/३८२ इति, √रम्ब्>√रम्भ् १/३८२ इति विकासं पेदाते। स्रोतस उपलभ्यमानत्वादनार्यभाषाप्रभवत्व क्लिष्टकल्पनामात्रम्।

ज—अुइउम् = श्रवणे।

+√अम्ब् ( अम्ब ) १/४११ गतौ ( प ) <अर्ब् (अर्बि) १/४११ गतौ ( प )।

मै-श-च-जै काकृ-कात- क्षी-सा-हे-वो।
शा ×

अम् ( अम ) १/४५९ गत्यादिषु ( प )।
अम्म् १/२२५ गतौ ( प ) काकृ।

अर्वेत्यादौ रेफस्थाने नकारं कौशिको मन्यते—क्षी। अर्बादयो नोपधा इति कौशिकः—सा १/४१२।

ग—पूर्ववदुदाहरणानि बोध्यानि। √अम् १/४५९ गत्यादिषु>√अम्ब् गतौ।

एकस्मादेव धातोरर्थभेदादुभयतः√अम्ब ( अबि ) शब्दे, √अम्ब् गतौ चेति विकासः।

+√अम्भ् (अभि) १/३८२ शब्दे (आ) इति दुर्गः-क्षी.

मै-श-च ×

क्षी-सा-जै-काकृ-कात-शा-हे।
ध्वनौ—वो।

√रेभ् ( रेभृ ) १/३८२ शब्दे ( आ )।
√रम्भ् ( रभि १/३८२ ( आ )।
√अम्ब् ( अबि ) १/२७५ ( आ )।
√आप् ( आप्लृ ) ५/१४ व्याप्तौ ( प )।
√अम् ( अम ) गत्यादिषु ( प )।

क—द्रष्ट. √अम्ब् १/३७५।

ग—अम्भः किमासीद् गहनं गभीरम्-ऋ. सं. ८,७,१७,१। ·आप्नोति, आप्यते वा। उदके नुम्भौ च ( उ० ४/२१० ) इत्यसुन् ह्रस्वो भान्तादेशो नुमागमश्च। ( २ ) अम्भते वा। असुन् ( उ० ४/१८९ )।

देशोच्चारणविशेषेण, अल्पप्राणे प्रयोक्तव्ये महाप्राणप्रयोगात् (√अम्)> √अम्ब्>√अम्भ् इति जातम्। अनयोर्मूले √अम् विराजते। उपरितनी व्युत्पत्ति-र्नौचितीमावहति। विकासशृङ्खलां विचारयन् क्षीरस्वामी अमरकोशटीकायाम् अम्भस्-शब्दस्य व्युत्पत्तिम् अमति-इत्यम्भः इति दर्शयति। एषा व्युत्पत्तिर्भानुजिदीक्षितेन स्वाम्याकूतमनवबुध्य निराकृता प्रमाणान्यनुपस्थाप्य। विशेषः √अम्ब् शब्दे धातुतो ज्ञानीयः।

√अय् (अय) १/४७० गतौ (आ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे।
वो ×, श

√इ (इण्) २/३४ गतौ (प)।
√इ १/३२० गतौ (प) मै।
√ई १/३१७ गतौ (प) अन्ये ई च प्रश्लिष्टमाहुः—क्षी।
√ई २/३८ गतिप्रजनकान्त्यसनखादनेषु (प) सा।
√ई (ईङ्) ४/३४ गतौ (आ)।
√अय् (अय) १/८६८ गतौ (उ)।
अयते (निघण्टौ २/१४) गतिकर्मा।
√अज् (अज) १/२२६ गतिक्षेपणयोः (प)।

ग—अयते-ऋ. १,१२७,३।
ङ—अय (सक)=(१) गमने, (२) प्रापणे, (३) ज्ञाने (सम ९३)।
ज—आयोन्, एओन् } = गतिकरणे।

√अय् (अय) १/८६८ गतौ (उ) क्षी-सा-वो।
मै-श-च-जै-काकृ-कात-शा-हे ×

पूर्वसूत्रवत्।

ग—अयति–शौ १३,१,५८, अयाम–तै ७,४,९,१। अयन्तम्–बाष्कलोप. ४।
ङ—अय (सक)–गमने, (२) प्रापणे, (३) ज्ञाने (सम ९३)।

+√अर्घ् (अर्घ) १/७३१ ××× (प)
मै-सा-श-च-जै-काकृ-कात-शा ×, क्षी हे मूल्ये–वो।

√अर्हं (अर्ह) १/७३१ पूजायाम् (प)।
√अर्घ (अर्घ) १०/१६८ × × श।
√ऋह् (ऋह) ६/२७ कत्थनयुद्धहिंसादानेषु (प) क्षी।

क—अल्गुह्=अर्जने, प्राप्तौ, जये। लिथु अल्ग्=अर्जनम्, प्राप्तिः।

ख—अवे. अर्जह्=अर्घः, मूल्यम्—वा. पॉकर्नीः।

ग—कलां नार्हन्ति षोडशीम् (मभार. सभा. ३८/२६)—ईजर्टनसम्पादिते पूना-संस्करणे। नार्घन्ति रत्नानि समुद्रजानि—पञ्चत. १,८८।

घ—अग्घति—जातक १,११२।

ङ—अग्घ (सक) (१) सुमूल्येन विक्रये, (२) समादरे (सुपा ५०१)।

छ—{ आघ* =मूल्यम्। आघु* (स्त्री) = ,, ।

√अर्च् (अर्च) १/२०१ पूजायाम (प)। श× क्षी-मै-सा-च-जै-काकृ-कात-शा-हे। पूजे (उप)—वो।

√ऋच् (ऋच) ६/२३ स्तुतौ (प)।
√अर्च् (अर्च) १०/२५९ पूजायाम् (प)।
√अर्क् (अर्क) १/४१० आदाने (आ) काकृ।
√अर्क् (अर्क) १०/१०३ स्तवने (प)।
अर्चति (निघण्टौ ३/१४) अर्चतिकर्मा।

क—एर्क्=द्युतौ। अर्मे.—एर्ग्=अर्कः—वा. पॉकर्नीः।

ग—अर्चति—ऋ. ७,२२,३।

घ—अच्च् (अच्च) अच्चने—धा. म. ५४, अच्च पूजायां—सद्दनी. १३६, १३४१ अच्चति (दाठावंस ५,६६)।

ङ—अच्च (सक)=पूजने। अच्चेइ (औप) (सुपा ७८) (दे. ना. २/३५)।

छ—अरचना *=पूजने।

ज—आर्जि=प्रार्थने (संथाली, हिन्दी)।

√अर्ज् (अर्ज) १/२१९ अर्जने (प) क्षी-मै-सा-च-काकृ कात-शा-हे-वो। सर्जने—जै। बा. ग. प. मुद्रणदोषमाह तन्न समीचीनम्, सर्ज-अर्जने इति धातोः सत्त्वात्।

√ऋज् (ऋज) १/१७३ गतिस्थानार्जनोर्जनेषु (आ)।
√सर्ज् (सर्ज) १/२२० सर्जने (प)।
√अर्ज् (अर्ज) १०/१९३ प्रतियत्ने (प)।
√राज् (राज़) १/८०५ दीप्तौ (उ)।

क—अर्गुह्न्=अर्जने—वा. पॉकर्नीः।

ग—यद्घमर्जति—नैष ५/८४।

घ—अज्जति—जातक ३,२६३ (?)।

ज—अर्जाओ=अर्जने, अन्नोत्पादने।

| | | |
|---|---|---|
| √अर्द् (अर्द) १/५३ श× | गतौ याचने च (प) क्षी-मै-सा-काकृ-कात। गतियाचनयोः-जै-शा-हे.। यातने, च=गतौ याचने इत्येके-क्षी। गतियातनयोः-हे। गतौ-च। यातनागतियाचने-वो। | √ऋ १/९२० गतिप्रापणयोः (प)। √ऋत् (ऋत) १/ जुगुप्सायाम् (आ) सौ. धा.। √अर्थ (अर्थ) १०/३४९ उपयाञ्चायाम् (आ)। √अर्द् (अर्द) १०/२७७ हिंसायाम् (प)। अर्दयति (निघण्टौ २/१९) वधकर्मा। अर्दति (निघण्टौ २/१४) गतिकर्मा। |

क—एर्-एर्द्=विकिरणे, धावने-वा. पॉकर्नीः।

ग—आर्दन्-ऋ. ४,१७,२। वेदे-ऋदति प्रयोगोऽपि लभ्यते-विग्रीवासो मूरदेवा ऋदन्तु-ऋ. ७,१०४,२४, शौ (अ.वे.) ८,४,२४, श्रोणया कटमर्दति-शौ (अ. वे.) १२,४,४, अर्दति-रघु. ५,१७=याचते (सं.)।

| | | |
|---|---|---|
| +√अर्ब् (अर्ब) १/१४१ श-काकृ× | गतौ (प) क्षी मै-सा-च-जै-शा-हे। गतौ हिंसायां च-कात। हिंसे गतौ च-वो। | √अम्ब् (अम्ब) १/४११ गतौ (प)। कौशिको मन्यते-क्षी। |

ग—महान्तं चिदर्बुदं निःक्रमीः पदा-ऋ.१,५१,५, अर्बुदिर्नाम यो देवः-अ. वे. ११,९,४।

अर्बुदनिरुक्तिः-अर्बुदो मेघो भवति। अरणमम्बु, तद्दोऽम्बुदः, अम्बुमद्भातीति वा। अम्बुमद्भवतीति वा। स यथा महान् बहुर्भवति वर्षस्तदिवार्बुदम् (निरुक्ते ३,१०,१)।

[ स्वामी व्युत्पत्तिं न दर्शितवान्। भानुजिदीक्षितेन तु–"अरं बुन्दति", √बुन्द् ( उबुन्दिर ) निशामने +मूलविभुजादिः ( वा. ३,२,५ ), पृषोदरादिः ( ६/३/१०९ ) इति व्युत्पादितम्। "अर्बुदो मांसपुरुषे दशकोटिषु न स्त्रियाम् ( अर्बुदो मांसकीले स्यात् पुरुषे दशकोटिषु )। महीधरविशेषे ना" ( मेदिनी, दे १९,२० )। ]

यदि पिण्डः पुमान् स्त्री चेत् पेशी नपुंसक चेदर्बुदमिति–सुश्रु. १,३२२,७। सुश्रुते–नासार्बुद–१,२५,६, मासार्बुद–१,३००,१, मेदोर्बुद–२,१०९,११। शोणितार्बुद–१,२९९,१, द्विरर्बुद–१,२८८,११।

| | | |
|---|---|---|
| +√अर्व् ( अर्व ) १/५८० शX | हिंसायाम् ( प ) क्षी-मै-सा-च-जै-काकृ-हे। वधे–वो। | √ऋह ५/२९ हिंसायाम् (प)। √ऋ १/९२० गतौ ( प )। √अर्ब् ( अर्ब ) १/४११ गतौ ( प )। |
| ( कात–√अर्ब् ) | गतौ हिंसायां च–कात। | √अव् ( अव ) १/५९६ रक्षणगतिप्रीतितृप्त्यवगमहिंसादानभागवृद्धिषु ( प )। |

ग—अर्वतीः–ऋ. १,१४५,३, अर्वति–ऐब्रा. ३,३४, अर्वस्व–मै ४,१२३। अर्बुकाश्चैव राजानः–मभार. २,१११९।

बवयोरभेदादयं धातुः पूर्वधातुश्च मिथः संक्रान्तौ। अत उभयत्र गतौ हिंसायां चेति पाठो दृश्यते। अस्य धातोर्गत्यर्थकत्वम् "अर्वन्" (ऋ. सं. ४,५,१४,४) शब्दे स्पष्टम्। यथाह दुर्गाचार्यः–( ऋच्छति )=गच्छत्यध्वानं प्रापयत्यध्वनः पारम् इति वा। √ऋ १/९२० गतिप्रापणयोः। ( उ. ४/१०९ ) इति वनिप् प्रत्ययः।" निरुक्ते ( १०/३१ ) तु–"अर्वेरणवान्" इत्यस्ति। एतद्भाष्ये स्कन्दस्वामी प्राह–"भाष्ये तु–अर्वेरणवान् इत्यर्थप्राप्तवचनं द्रष्टव्यम्"। एवं विचारणया ज्ञायते–द्विधा विकासं प्राप्त एष धातुः–१–√ऋ>अर्>√अर्व्। २–√अव् १/५९६ हिंसायाम् ( मध्ये रकारे प्रयुक्ते )>√अर्व् इति।

[ अर्वन्= इन्द्रः, गोकर्णपरिमाणं च–इति विश्वः। घोटके, कुत्सिते च–इति मेदिनी, वे ३६। अर्वती= घोटकी–इति हलायुधः, "कुट्टनी" इति त्रिकाण्डशेषः। यथाह मेदिनीकारः–"अर्वती कुम्भदास्यां च वडवायां च योषिति–ते ८६। अत्र सर्वत्र हिंसागत्यर्थकत्वे संनिविष्टे। ]

| | | |
|---|---|---|
| √अर्ह् ( अर्ह ) १/७३१ | पूजायाम् ( प ) क्षी-मै-सा- | √अर्घ् ( अर्घ ) १/७३१ |

| | | |
|---|---|---|
| श × | च-जै-काकृ-कात-शा-हे। योग्यत्वे पूजने-वो। | ( प ) क्षी.। मूल्ये-वो। √ऋह ( ऋह ) ६/२७ कत्थनयुद्धहिंसादानेषु ( प ) क्षी। √ऋ १/९२० गतिप्रापणयोः ( प )। √अर्ह् ( अर्ह ) १०/१९९ पूजायाम् ( प )। |

क—अल्गुह = तुल्यमूल्यकम्। योग्यत्वे, औचित्ये।

ख—अवे. अर्जैति = आद्रे, पूजायाम्, योग्यत्वे ( न. पर्सि. अर्जीदन् = योग्यत्वे, औचित्ये )-वा. पॉकर्नीः।

ग—अर्हति—ऋ. २, १४, २, १०, १५८, २, १०, ८५, ३।

घ—अरह् ( अरह ) पूजायां—धा. पा. ३३०, धा. म. ४८७, सद्दनी. १०१३, १६७० अरहेति। अरहति—सुत्तनिपात ४३१,५५२। जातक १,२६२।

ङ—अग्घ ( सक )=योग्यत्वे ( णायाधम्मकहासुत्त १,८ )।

ङ—अरिह ( ” )=योग्यत्वे, ( २ ) पूज्यत्वे, ( ३ ) पूजायाम्। अरिहइ ( महा )।

ज—आर्जि=प्रार्थने ( संथाली, हिन्दी )। तुलनीयः- ( ख- )।

| | | |
|---|---|---|
| √अल् ( अल ) १/५१६ | भूषणपर्याप्तिवारणेषु ( प ) | √ऋ १/९२० गतिप्रापणयोः ( प )। |
| श-च × | क्षी-जै-शा-,मै-सा-काकृ-कात-हे ( उप )। | √अड् ( अड ) १/३५३ उद्यमे ( प )। |
| | वारणपर्याप्तिभूषासु-( उप )-वो। | √अल्ल् १/२२७ ©बन्धने पालने च ( प ) काकृ। |
| ( क्षी-√अल् ( अलॉ )- | अलतः प्रयोगसिद्धये। | √अलर्क् १/४१० ▯आदाने ( आ ) काकृ। |

ग—अलकं पूरयामास मैथिल्याः—वा. रा. २,९६,२०; रघु. १,४२,४,५४ ( भूषणेऽर्थे )।

[ “अलकाश्चूर्णकुन्तलाः” ( अ. को. २,६,९६ )-अलति, अल्यते वा। अल्+उणा। ५/४५ वुन्। “अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले-( मेदिनी, के ४१° ) ]

अलातृणः—ऋ. सं. ३,२,२,५। "अलातृणोऽलमातर्दनो मेघो बलः"-निरुक्ते ६,२। अलम्-( अलति। बाहुलकादम् )। "अलं भूषणपर्याप्तिवारणेषु निरर्थके। अलं शक्तौ च निर्दिष्टम्" इति विश्वः। अलम् इति योगेनैव "अलङ्कार"-शब्द आभूषण-वाचको भवति।

[ अलिः-( अलति = दंशे समर्थो भवति। √अल्+'सर्वधातुभ्य इन्'—उणा. ४/११८) "भृङ्गवृश्चिकयोरलिः"-इति रभसः। अलीकम् ( उ. ४/२५ ) इति साधु। "अलीकमप्रियेऽपि स्याद्दिव्यसत्ये नपुंसकम्"-मेदिनी—के, ४२। "अलीकसहितेऽपि"-इति काल्यः ( भानुजिदीक्षितः—अ. को. २/६/९२ ) ]

छ—अड़ना (<√अल् वारणे ) = ( १ ) गतिरोधे, ( २ ) हठे।

छ—आड़ना (<√अल् वारणे) = ( १ ) वारणे, ( २ ) बन्धने, ( ३ ) निषेधे, ( ४ ) निधिनिक्षेपणे।

ज—आलिच = अङ्कुशप्रयोगे।
आलु = हस्तेन जलपरिष्कारे।
आलांग् = हललौहोपकरणादीनां निशाने ( प्रताप्य )।

| | | |
|---|---|---|
| √अव् ( अव ) १/५९६<br>श× | रक्षणगतिकान्तिप्रीतितृत्यवगम-( "न"-जै-शा-हे )-प्रवेशश्रवणस्वाम्यर्थयाचन-क्रियेच्छादीप्त्यवाप्त्यालिङ्गन-हिंसाऽऽदानभाग-( दान-भागयोः स्थाने 'दहन-भाव' —जै-शा-हे )-वृद्धिषु ( प )<br>क्षी-मै-सा-जै-शा-हे।<br>रक्षणे—च।<br>पालने—काक्रु-कात।<br>रक्षे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ प्राप्तौ श्लेषेऽर्थने वेशे भागे वृद्धौ ग्रहे वधे स्वाम्यर्थेऽवगमे कामे कृतौ—वो। | √अप् १/२२८a पालने ( प ) काक्रु।<br>√अप्प् १/२२८b पालने ( प ) काक्रु।<br>√अव्व् १/२२७d बन्धने पालने च (प) काक्रु।<br>√अव्य् १/२२७e बन्धने पालने च (प) काक्रु।<br>√अव् १०/१७५ अवकल्पने ( प ) काक्रु।<br>अवति ( निघण्टौ २/१४) = गतिकर्मा। आवयति ( २/८ ) अत्तिकर्मा।<br>√अब्ब् १/२२९ जनने ( प ) काक्रु। |

क—अउ = श्रवणे, रक्षणे, अवधाने। पु. च. स्ला. उम = ज्ञानम्, निर्णयः।
लैति.-अवुंस् = पितामहः ?-वा. पॉकर्नीः।

७,१०४,१२। तेन मामवति—रघु. ११/७५=प्रीणाति

(सक)=उपरितनेषु सर्वेष्वर्थेषु । अव—(श्रा २३, विसे

अवाप्तौ ।

प्रवेशे—"आलार अव्वम जन्ठरा" (प्रसङ्ग-पारिजाते ३/१)।

१८ व्याप्तौ (आ)
क्षी-मै-च-जै-
काकृ-कात-शा।
व्याप्तौ संघाते च—सा-हे।
व्याप्तिसंहत्योः—वो।

√अक्षू (अक्षू) १/६४५ व्याप्तौ संघाते च (प)।
√अहू (अह) ५/२६ व्याप्तौ (प)।
अशत् (निघण्टौ २/१८) व्याप्तिकर्मा।
आनशे (निघण्टौ २/१८) व्याप्तिकर्मा।
अश्नुत (निघण्टौ २/१८) व्याप्तिकर्मा।

नेश्-, एश-, नंश्=प्राप्तौ, दाने, उपस्थितौ, पूर्तौ।
प्राप्तौ, उपस्थितौ—वा. पॉकर्नीः।

ऋ. १,९४,२, अश्नुते—ऐब्रा. १,६, अनन्तं सुखमश्नुते—मनु

लिप्सायाम्, (२) याचने।

१ भोजने (प)
क्षी-मै-सा-च-जै-
काकृ-कात-शा-हे-वो।

√अश् (अशू) ५/१८ व्याप्तौ (प)।
√अद् २/१ भक्षणे (प)।

अशो( ak^o )=अशने (अदने)-जू. पॉकर्नीः।

| | | |
|---|---|---|
| +√अष्( अष ) १/८९०<br>क्षी-श-च-जै-कात × | गतिदीप्त्यादानेषु ( उ ) इत्येके-मै ।<br>मै-सा-शा ।<br>गतौ दीप्त्यादानयोश्च —काकृ ।<br>दीप्तौ गत्यादानयोश्च —हे ।<br>दीप्तौ ग्रहे गतौ—वो । | √अस् ( अस ) १/८७२ गतिदीप्त्यादानेषु ( उ ) ।<br>√अस् ( अस ) २/५४ भुवि ( प ) ।<br>√अस्(असु) ४/९६ क्षेपणे ( प ) ।<br>√अक् ( अक ) १/७८६ कुटिलायां गतौ ( प ) ।<br>√अग् ( अग ) १/७८७ कुटिलायां गतौ ( प ) ।<br>√अव् ( अव ) १/५९६ रक्षण' दीप्ति आदान ( प ) । |

ग—प्राषितः—पै २०, २६, २ ।

अशतर>कर्माषतरास्मै—साय. ( व्योथ-रॉथ. )=अषतर- =व्याप्ततर-।

| | | |
|---|---|---|
| +√अस्(अस) १/८७२<br>श-जै-शा × | गतिदीप्त्यादानेषु ( उ ) क्षी-मै-सा ।<br>गतौ दीप्त्यादानयोश्च —काकृ-कात ।<br>दीप्तौ गत्यादानयोश्च—हे ।<br>गतौ—च ।<br>अषार्थे ( दीप्तौ ग्रहे गतौ ) —वो । | >√अष्(अष) गतिदीप्त्यादानेषु ( उ ) इत्येके—मै । |

ग—रिपुरास भूभृताम्—रघु. ११/८१=बभूव (सं.) । "आस" इति तिङन्तप्रतिरूपकमव्ययम्, दीप्त्यर्थकस्यास्ते रूपं वा"–( सं. ) ।

| | |
|---|---|
| √अस्( अस ) २/५४<br>श | भुवि ( प )<br>क्षी-मै-सा-च-जै-काकृ-कात-शा-हे ।<br>भावे—वो । |

क—एस्=सत्तायाम् । लिथु.-एस्मि, एस्त् ( इ ), पु. प्रशियन्-अस्मइ, अस्त्, एस्त्, पु. च. स्ला. जेस्म, जेस्त ।

ख—अवे. अ.ह्मि, अस्ति—वा. पॉकर्नीः ।

ग—अस्ति—ऋ. १,२७,८, आस-ऋ. ४,३५,४ ।

छ—अछना * = भुवि । बंगा आछे, मैथि. है, मरा-आहे, पुरा हि.-अहै ।

आछना * }
आथना } = भुवि ।
आसना * }

√अस् ( असु ) ४/९६ श — क्षेपणे ( प ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे । क्षेपे—वो । — √अस् ( अस ) १/८७२ गतिदीप्त्यादानेषु ( उ ) ।

क—एंस् ।

ख—अवे. अंह्येइति-, अंस्त् = शत्रुता, अनुसरणम्—वा. पॉकर्नीः ।

ग—अस्यति-ऋ. ३, ५३, २२ । भौवादिकोऽपि—आत्मारामः समभ्यसत्-श्रीमद्भागवत. १,७,९ ।

+√अह्न् ( अह ) ५/२६ श-च-जै-काकृ-कात-शा × ( हे-वो-√अड् ) लैपिकी त्रुटिः । √अह्न् इति स्यात् । — व्याप्तौ ( प ) क्षी-मै-सा । हे । व्यापे—वो । — √अक्ष् ( अक्षू ) १/६४५ व्याप्तौ संघाते च ( प ) । √अश् ( अशू ) ५/१८ व्याप्तौ ( आ ) क्षी । अह्न् १/३१६ । हिंसागत्योः ( प ) काकृ ।

ग—अंह्न्-ऋ. १, ४२, १ । √अह्न् इत्यस्यैवानुनासिकोपक्रमं प्रकारान्तरमित्यर्वाचाम् अभिसन्धिर् भवति ( तु० Gw ) अयं च धा० २ अह इति च यक्र. √अङ्घ् इत्यनेन √अघ् इत्यनेन च समानं समूलतया प्रतिपत्तव्यौ भवत इति तु तत्त्वम् अवधेयम् इति शास्त्री विश्वबन्धुः । अस्माकं मतेन तु √अक्ष् १/६४५ व्याप्तौ संघाते च ( प ) अयम् √अह्न् धातुः, √अश् ५/१८ व्याप्तौ ( आ ) च मिथः संक्रान्ताः सन्ति । √अङ्घ्, √अघ् धातू न व्याप्त्यर्थकौ न च सौवादिकौ—इति तयोरत्र संक्रान्तिश्चिन्त्या । विकल्पितशाऽनुतया चोपदिष्टः ( पा० ३/१/७५ ) √अक्ष् धातुः । अक्ष्णोति > अह्नोति इति विकासः सुबोध्यः ।

√आञ्छ् (आछि) १/२०६ श × ( जै ) — आयामे ( प ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो । — आ + यम् = आयच्छ् > √आञ्छ्- ( वागीशः ) । √अञ्च् ( अचि ) १/८४७ गतौ ( उ ) ।

ग—आञ्छेद् ऊर्ध्वमधो वापि कटिभग्नं तु मानवम्—सुश्रु. चिकि. ३,२८। आञ्छेत्=बध्नीयात्। (डल्हणाचार्यो निबन्धसंग्रहाख्यव्याख्यायाम्), आञ्छन्–सुश्रु० २, ८१, १।

| | | |
|---|---|---|
| √आप्(आप्लृ) ५/१४ | व्याप्तौ (प) क्षी-मै-सा-च-जै,काकृ-(उप), कात-शा-हे। व्यापने-वो। | √आप्(आप्लृ) १०/२८६ लम्भने (प) आधृषाद्वा। अप्-शब्दो जलवाची व्याप्त्यर्थकः। |

क—अप्=प्राप्तौ, उपस्थितौ, एप=प्राप्तौ, उपस्थितौ, ग्रहणे।
ख—अपयेइति=प्राप्तौ–वा. पॉकर्नीः।
ग—आप–ऋ. ४, १, ९, आप्नोति—मा १९, १९।
घ—√अप्प्(अप्प) पापुणे–सद्दनी १०८७ अप्पोति–विसुद्धिमग्ग ३५०।
ज—आपिर्=उड्डयने।

| | | |
|---|---|---|
| √आस्(आस) २/११ श | उपवेशने (आ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे। उपवेशे-वो। | आ+√स्था १/९१२ गति-निवृत्तौ (प)। आ+√सद् (षद्लृ) १/८३९ विशरण० (प)। √अस् २/५४ भुवि (प)। |

क—सेद्=उपवेशने। * एस्=उपवेशने। * ए-स्(द्)
ख—अवे.-आस्ते=उपवेशे। अंहे॒न्ते=उपवेशे–वा. पॉकर्नीः।
ग—आस्ते–ऋ. १०, ७१, ११।
घ—अच्छति–विनय १, २८९।
ङ—√आस (अक)=उपवेशने (पि ५७८)।
,,—√अच्छ (अक)=उपवेशने। अच्छइ (णाया १,१)।

| | | |
|---|---|---|
| √इ १/३२० क्षी-श-जै-शा × | गतौ (प) मै। मै-सा-च-काकृ कात-हे-वो। | √अय् (अय) १/८६८ गतौ (उ)। |

ग—अयति–पै १०, २७, २, जैब्रा १५५।

√इ १/३२०, √अय् १/८६८ द्वावेव धातू अभिन्नौ ज्ञेयौ। क्षीरसायणवोपाः √अय् १/८६८ धातुं पेठुः, मैत्रेय-सा-च-काकृ-कात-हे-वोपाश्च √इ धातुम्। सायण-वोपयोर्द्वावेव मतौ।

| | | |
|---|---|---|
| √इ ( इण् ) २/३४<br>श | गतौ ( प )<br>क्षी-मै-सा-च-जै-काकृ-<br>कात-शा-हे-वो । | √गा ( गाङ् ) १/९३५<br>गतौ ( आ ) ।<br>√इ २/३६ स्मरणे ( प ) ।<br>√अय् १/४७० वत् (शेषः) ।<br>एति-( निघण्टौ २/१४ ) । |

क—एइ् =गतौ । लिथु -एइमि ( एइनु ) गतिकर्मा ।
ख—अवे अएइति । पु. पर्सि.-ऐतिय् =गतौ-वा. पॉकर्नी. ।
ग—एति-ऋ १, २३, ११ । इनोति ऋ. ८, ३९, ५ ।
ङ—√इ ( सक )=गतौ, ( २ ) ज्ञाने । एइ ( कुमा ) ।

| | | |
|---|---|---|
| १+√इ ( इङ् )२/३५<br>श<br>अधि+इ | अध्ययने ( आ ) क्षी-मै-<br>सा-च-जै-काकृ-कात-शा-हे ।<br>-वो । | √इ ( इक् ) २/३६ स्मरणे<br>( प ) । अधि+√इ<br>( इण् ) २/२४ गतौ (प) । |

ग—अधीते-ऐआ. ३, १, ६ ।
घ—अधीयति-विनय. १, २७० ।

| | | |
|---|---|---|
| √इ ( इक् ) २/३६<br>श<br>अधि+√इ<br>,, ,, | स्मरणे ( प ) क्षी-मै-सा-<br>च-जै-कात-शा-हे ।<br>स्मरणे-काकृ ।<br>स्मृत्याम्-वो । | √इ ( इण् ) २/३४<br>इत्यस्यैवार्थभेदार्थं प्रपञ्चः । |

१ ग-अध्येति-ऋ. ४,१७,१२, मै ३, ३, ६ । अध्येति-मभाष्ये ६. ४. २२. ३/३०, १.३.१. २५/६६ ।

| | | |
|---|---|---|
| +√इख् ( इख ) १/१४०<br>मै-श-च-<br>जै-काकृ-कात-शा× | गत्यर्थः ( प )<br>क्षी-सा ।<br>गतौ-हे-वो । | <√इङ्ख् ( इखि ) गत्यर्थः<br>( प ) इत्येके-क्षी ।<br>√ईङ्ख् ( ईखि ) १/१४१<br>गत्यर्थः (प) । √इ ( इण् )<br>२/३४ गतौ ( प ) ।<br>√इ १/३२० गतौ ( प ) मै ।<br>√रिङ्ख् ( रिखि ) १/१५३<br>गत्यर्थः ( प ) । |

√इ १/३२० इत्यनेन व्यञ्जनद्वितीयाक्षरयोगे सति √इख् धातुः सानुनासिकत्वे >√इङ्ख् निष्पद्यते ।

| | | |
|---|---|---|
| +√इङ्ख् (इखि) १/१४० गत्यर्थः (प) इत्येके- शX | क्षी क्षी-मै-सा-च-कात। गतौ—जै-काकृ-शा-हे-वो। | <√इख् (इख) गत्यर्थः (प)। √ईख् (ईख्) १/१३९ गत्यर्थ (प) √ईङ्ख् (ईखि) १/१४१ गत्यर्थः (प)। √इङ्ग् (इगि) १/१५२ गत्यर्थः (प)। |

ग—"प्रेङ्खत्काञ्चीकलापाः"-भर्तृ. सु सं. ९७, "प्रेङ्खयन् परिजनापविद्धया"-रघु १९,४४ = चालयन (सं०) इति प्रयोजकप्रयोगमन्तरा च नान्यद् रूपम् अक्षिपथमुपगतम्। ऋग्वेदे-"प्र प्रेङ्ख ईङ्खयान्हे"-७,८८,३ इत्यत्र प्र+√ईङ्ख् धातुर्भवितुमर्हति, उभयत्रापि तथा। ततोऽपि वेदेषु√ईङ्ख् धातोः (प्रयोजकस्य) प्रयोगाधिक्यात् तत्र प्राय उपसर्गराहित्याच्च सोपसर्गे प्रयोगे√इङ्ख् धातोरौचिती। एवमपि √इङ्ख् √ईङ्ख् इत्युभयोर्मिथ' सुनिर्भरं संक्रान्तेः कारणात् पृथक्कृतौ सन्दिहन्त्येव मनीषिणः।

| | | |
|---|---|---|
| √इङ्ग् (इगि) १/१५२ गत्यर्थः (प) शX | क्षी मै- सा-च-कात। गतौ—जै-काकृ-शा-हे। | √इङ्ख् (इखि) १/१४० गत्यर्थः (प)। √ईङ्ख् (इखि) १/१४१ गत्यर्थ. (प)। √एज् (एजृ) १/२३० कम्पने (प)। |

क—ऐग् = दोलने, प्रस्पन्दने। पु उत्त. जर्म. एइकेन्न = ग्राम्यम् (:), क्रोधिन्, धर्मध्वजिन्। लिथु ऐक्स्टिस् = उत्कण्ठा, क्रोधः। पु. च. स्ला. इग्र=क्रीडा—वा. पॉकर्नीः।

ग—इङ्गयन्ति—ऋ. १, १६४, ४५, इङ्गते—छाग. २५ : ९, गी. ६, १९, इङ्गति—म० भार० ३, ८७५६।

| | | |
|---|---|---|
| √इट् (इट) १/३१५ गतौ (प) शX | क्षी-मै-सा च-जै-काकृ-कात-शा-हे। गत्याम्—वो। | √अट् (अट) १/२९२ गतौ (प)। √इण्ड् १/१८३ √हिंसागत्योः (प) काकृ। √ईट् १/११३ गतौ (प) काकृ। √इ १/३२० गतौ (प) मै। √इड् १/२१६ धारणे (प) काकृ। |

ग—त्वमित्टतो रथमिन्द्र प्रावः सुतावतः—ऋ. १०, १७१, १। इटस्य ते—अ. वे. ९, ३, १८। वैतस इटसून—शब्रा. १३, २, २, १९।

+√ इन्त् ( इति ) १/६० बन्धने ( प ) <√ अन्त् (अति) बन्धने (प)।
मै-सा-श-च-जै- अन्ये—क्षी।
काकृ-कात-शा × क्षी-हे-वो।

अत्र धनपालः—तान्तं द्रविडाः पठन्ति। आर्यास्तु दान्तमिति। उभयमिति मैत्रेयस्वामिकाश्यपसम्मताकारादयः ( धा वृ. ५३ पृ )।

+√ इन्द् ( इदि ) १/६१ परमैश्वर्ये ( प ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो। √ इन्त् ( इति ) १/६० बन्धने (प) √ इण्ड् १/१८३। हिमागत्योः (प) काकृ।
श ×

क—नेर-अनेर् ( एनेर ? ) = मनुष्यः, पतिः। जर्म नेरथुम्, पु उत्त जर्म. न्जोर्द्र ( = प्रसेवः )-जू. पॉकर्नीः।

ग—शरद इन्दुरिन्द्रः-ऋ ६, ३९, ३, आपच्छ्योकमिन्द्रियं पूयमानः-ऋ ९, ९२,-१। इन्द्रियम् ( = रसः ) ऋ ९, १३, ५, ( = सोमः ) ऋ १०, ६५, १०।

√ इन्ध् ( ञिइन्धी ) ७/११ दीप्तौ ( आ ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे। द्युतौ—वो। √ इन्द् ( इदि ) १/६१ परमैश्वर्ये (प)। √ एध् १/२ वृद्धौ ( आ )।
श ×

क—( ऐ ) ऐदू-, ऑइदू-, ऐध्, इ-ध्, नासिक्यम्-इन्ध् = दीप्तौ-जू. पॉकर्नीः।

ग—इन्धते-ऋ. १, ४४, ८, ईधे-ऋ. १, ३६, ११, इध्यते-जै १, २, १०, एधस् ( : )—मा २०, २३। इध्मः-पन्ना. ३, ८।

√ इन्व् ( इवि ) १/८२ व्याप्तौ ( प ) क्षी-मै-सा-च-काकृ-कात-शा। व्याप्तौ प्रीणने च—हे। व्याप्तिप्रीणनयोः—वो। √ ई २/३८ कान्तिगतिव्याप्तिक्षेपप्रजनखादने ( प ) वो। √ इन्वति (निघण्टौ २/१४) गतिकर्मा। इन्वति ( निघण्टौ २/१८ ) व्याप्तिकर्मा। √ इ १/३२० गतौ ( प ) मै।
श-जै ×

क—ऐ = ग्रहणे, कम्पने, विदारणे।

ख—इनओइति, ( अएनन्हे ) = बलात्कारे, क्लेशने, पीडने-वा. पॉकर्नीः।

ग—इन्वति-ऋ. १,१८,७, इनोषि-ऋ ४,१०,७।

√ इन्व् ( इवि ) १/५८६ प्रीणने ( प ) क्षी-सा।

साय. पूर्वपक्षत्वेनोपस्थापयति ( धा वृ ११२ पृ. )। — पूर्ववत्।
व्याप्तौ प्रीणने च—हे।
व्याप्तिप्रीणनयोः—वो।
पूर्वधातोरभिन्नोऽयमर्थभेदार्थं पृथगुपन्यस्त।

√इल् ( इल ) ६/७९ स्वप्नक्षेपणयोः ( प )
क्षी-मै-सा-जै-शा।
श × गतौ धारणे च-काकृ।
गतौ च-कात।
गतिस्वप्नक्षेपणेषु-हे।
शये गतौ क्षेपे-क्षी।

√इ १/३२० गतौ ( प )।
√ईर् (ईर) २/८ गतौ कम्पने च (आ)।
√इड् ( इड ) १/२१६ धारणे ( प ) काकृ।
√इल् ( इल ) १०/१२० प्रेरणे ( प )।

क—एल्=विश्रामे, शयने? अल्=पूरणे, भोजने। द्-विस्तारः-ग्रीकभाषायाम् एलैनो=क्षेपणे, वृद्धौ, शक्तिः ( तेजः )—वा पॉकर्नीः।

ग—इळा देवी भारती विश्वतूर्तिः-ऋ. २,३,८, इडाः-ताब्रा. १४,५,३१।
इलयति-मै ३,४,६, शौ १०,७,३७, पै १७,१०८।

छ—{ अडलना * ( उत्=उच्चैः+√इल्=प्रक्षेपणे ) उड़ेलना, ढालना-इति हिन्दी। उड़ेलना

√इष् ( इष ) ४/२० गतौ ( प )
क्षी-मै-सा-च-जै-काकृ-
श कात-शा-हे।

√इ १/३२० गतौ ( प )।
√इष् ( एषृ ) १/६१३ गतौ ( आ )।
√ईष् ( ईष ) १/६०६ गतिहिंसा-दर्शनेषु ( आ )।

क—एइस्=तीव्रम्, क्रोधिन्-वा पॉकर्नीः।
ग—इष्यसि-ऋ ९,६४,९, इष्यति-शब्रा ६,१,२५।

√इष् ( इषु ) ६/७२ इच्छायाम् ( प )
श क्षी-मै-सा-च-जै-काकृ-
कात-शा-हे।
वाञ्छे-वो।

√इ ( इक् ) २/३४ स्मरणे ( प ) +ष्>छ्।
√इष् ( इष ) ४/२० गतौ ( प )।
√इष् ( इष ) ९/५३ आभीक्ष्ण्ये ( प )।
इषति ( निघण्टौ २/१४ ) गतिकर्मा।

क—ऐस्=इच्छायाम्। पु बुल्गारियन्—इस्कति।
ख—अवे. इसैति=अन्विष्यति, इसैति=इच्छति-वा. पॉकर्नीः।

ग—( * is-sk^o^) इच्छन्ति-ऋ ३,२०,१, इच्छते-तै १,६,७,३।

घ—√इस् ( इस ) इच्छायं-धा. पा २९५, इसु इच्छायं-धा म. ३४३, मद्द नी ९८९. इच्छति-संयुत्त १,२१०।

ङ√इच्छ ( सक )=इच्छायाम्। इच्छइ ( उव, महा )।

छ—इच्छना *
ईछना * } =इच्छायाम्।

√इष् ( इष ) ९/५२ आभीक्ष्ण्ये ( प )
श क्षी-मै-मा-च-कात-शा-हे-वो।
अभीक्ष्णे-जै।
अभीक्षणे-काकृ।
आभीक्ष्ण्यम्=पौनःपुन्यम्-क्षी।

√इ १/३२० गतौ ( प ) मै।
√इष् (इष) ४/२० गतौ (प)।
√ईष् ( ईष ) ६/७२ इच्छायाम् ( प )।
√ईष् ( ईष ) १/३०६ गतिहिंसादर्शनेषु ( आ )।
√ईष् ( ईष ) १/६७५ उञ्छे ( प )।

क—इष्यतिवद् बोध्यम्।

ग—इष्णामि-पै. १६,३०,४, इषाण-मा. ३१,२२, का. ३५,२,६, इष्णन्ति-शब्रा. ७,१,१,२४।

+√ई १/३१७ गतौ ( प ) अन्ये 'ई' च
श-च-जै-काकृ- प्रश्लिष्टमाहुः-क्षी।
का-त-शा-हे-वो। क्षी-मै-सा।

√कट् ( कटी ) १/३१७ गतौ ( प )।
√इ १/३२० गतौ ( प )।
√ई (ईङ्) ४/३४ गतौ (आ)।
√अय् (अय) १/८६८ गतौ ( उ )।

ग—उद्यति विततोर्ध्वरश्मिरज्जौ—शिशु व ४/२०। √इ १/३२० गतावित्यस्यैव प्रपञ्चः। उदयन्तं दिनकरं दृष्ट्वा—वा रा. ३,८,४, ( गी. प्रे. सं. )।

√ई २/३८ गतिप्रजनकान्त्यसनखादनेषु ( प )
क्षी-मै-श-च-जै- प्रश्लिष्टनिर्देशात्-सा।
काकृ-शा-हे × गतौ प्रजनकान्त्यसनखादनेषु च-कात।
कान्तिगतिव्याप्तिक्षेपप्रजनखादने-वो।

√वी २/३८ गतिप्रजन...(प)।

ग—ईमहे-ऋ. १,१०,६, खि. ३,१,९, ईयाम्-जैब्रा. १७७।

√ई (इङ्) ४/३४ गतौ (आ)
श
क्षी मै-सा-च-जै-काकृ-कात-
शा-हे।
गत्याम्—वो।

ग—ईयते—ऋ १, ४८, ५, अन्तरीयते—ऋ २, ६, ३, अधीयति—ऋ. १०, ३२, ३।

√ईक्ष् (ईक्ष) १/६०५ दर्शने (आ)
श ×
क्षी-मै-सा-च-काकृ-कात-
शा-हे-वो।
दृष्टौ—जै।

ईष् (ईष) १/६०६ गतिहिंसा-
दर्शनेषु (आ)।
इक्ष् १/५२१ आस्वादने (आ)
काकृ।

क—ऑक्उ=दर्शने। ऑक्उ्-, ऑक्उ्इ-, ऑक उ् (ए) न्—ऑक् उ्-(ए) स्=अक्षि—वा. पॉकर्नीः।

ग—ईक्षते-शब्रा. ६, ३, ३, ४, अभ्यैक्षेताम्-ऋ. १०, १२१, ६, ईक्षेण्यासः-ऋ. ९, ७७, ३।

घ—√इक्ख् (इक्ख) दस्सने—धा. पा १५, दस्सन-अङ्केसु-धा. म १९, इक्खति-जातक ५, १५३।

ङ—√इक्ख (सक)=दर्शने। इक्खइ (उव)।
ङ—√ईह (सक)=दर्शने। ईहए (विसे ५६१)।

छ—ईखनाॐ (<ईक्षणम्)=दर्शने (डिगल)।

+√ईख् (ईख) १/१३९ गत्यर्थः (प) सा। उत्तरधातुवत्।
क्षी-मै-श-च-जै-काकृ- सा।
कात-शा-हे-वो ×

√ईङ्ख् (ईखि) १/१४१ गत्यर्थः (प)
सा-श-काकृ-कात × क्षी-मै-च।
गतौ—जै-शा-हे-वो।

√इख् (इख) १/१४०
गत्यर्थः (प)।
√इङ्ख् (इखि) १/१४०
गत्यर्थः (प) इत्येके।
√ईख् (ईख) १/३३९
गत्यर्थः (प) सा।
ईङ्खते (निघण्टौ) २/१४
गतिकर्मा।

ग—ईङ्खयन्ति—ऋ. १, १९, ७, पै ६, १७, ७, ईङ्खितम्—ऐब्रा १, ११। प्रप्रेङ्ख ईङ्खयावहै—ऋ ७, ८८, ३।

| | | |
|---|---|---|
| √ईज् (ईज) १/१७९ श× | गतिकुत्सनयोः (आ) क्षी-मै-सा-जै-शा। गतौ—च-काकृ-कात। कुत्से गतौ—वो। | ◁√ईञ्ज (ईजि) गति-कुत्सनयोः (आ) इति दुर्गः—क्षी। √एज् (एजृ) १/२३० कम्पने (प)। √इज् (इज) १/४७५ गतौ (आ) काकृ, ३४६ कात। |

ग—अपेजते—ऋ. ६, ६४, ३, ईजते—मै. ४, ५, ६। ईजानाः—मभार. १२, १७, १५=वर्णा—श्रमाद्यभिमानिनः (नील.)।

| | | |
|---|---|---|
| √ईड् (ईड) २/९ श | स्तुतौ (आ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे-वो। | √ई २/३८ गतिप्रजनकान्त्य-सनखादनेषु (प)। ईट् १/२१६b गतौ (प) काकृ। ईळ् २/४१b स्तुतौ (आ) काकृ। ईड् (ईड) १०/१३० स्तुतौ (प)। |

क—ऐस्=पूजायाम्। पु उ ज. एर्, आधु ज. एह्रे, पु. सैक्स. एर्=दया, उपहारः। इ् (द्) -विस्तारः, गॉथि -ऐस्तन्, ऐद्=भये, संकोचे, समादरे। ग्रीक-ऐदोस्=पूजा—वा. पॉकर्नीः।

ग—ईडते—ऋ. १, १५, ७, ईट्टे—ऐआ १, ५, २, ईळे—मा. १३, ४३, का १४, ४, ६।

ज—इक्ड्डुम्=नमस्कृतिवेलायां जानुपातने।

ज—इदु=धर्मोपदेशने।

| | | |
|---|---|---|
| √ईर् (ईर) २/८ श | गतौ कम्पने च (आ) मै-सा-काकृ-कात। गतौ—च-जै-शा। | इर ? (निरुक्त ५/२७)। √ऋ १/९२० गतिप्रापणयोः (प)। |

| | | |
|---|---|---|
| | गतिकम्पनयोः—हे। कम्पगत्योः—वो। | √ईर/३८ गतिप्रजनकान्त्यसनखादनेषु (प) सा। √इल् (इल) ६/७९ स्वप्नक्षेपणयोः (प)। √ईड् (ईड) २/९ स्तुतौ (आ)। ईर्ते (निघण्टौ २/१४) गतिकर्मा। √ईर् (ईर) १०/२६१ क्षेपे (प)। |

क—ऐला=प्रेरणे, कम्पने।

ख—गाथा-अवे. ईरतू=उन्नतौ–वा. पॉकर्नीः।

ग—ईरते–ऋ. १,१४०,५, ईर्ते–शब्रा. १,४,१,१२, जैब्रा. १६४।

ङ—√ईर (सक)–(१) प्रेरणे, (२) कथने, (३) गतौ, (४) प्रक्षेपणे। ईरेइ (विसे. १०६०)।

| | | |
|---|---|---|
| +√ईर्क्ष्य् (ईर्क्ष्य) १/५११ श× | ईर्ष्यार्थः (प) क्षी-मै-सा-च-जै-कात-शा-हे। ईर्षायाम्–काकृ। ईर्ष्ये–वो। | √ईर्ष्य् (ईर्ष्य) १/५१२ ईर्ष्यार्थः (प)। √ईर् (ईर) २/८ गतौ कम्पने च (आ)। √ईर्ष् (ईर्षा) १/५२७ गतिहिंसादानेषु (आ) काकृ। |

√ईष् १/६०६ गतिहिंसादर्शनेषु (आ)>मध्ये रेफप्रवेशे>√ईर्ष्+य> √ईर्ष्य्,√ईर्क्ष्य् इति वागीशः।

| | | |
|---|---|---|
| √ईर्ष्य् (ईर्ष्य) १/५१२ श-जै-काकृ× | ईर्ष्यार्थः (प) क्षी-मै-सा-च-कात-शा-हे। ईर्ष्ये—वो। | √ईर् (ईर)। २ गतौ कम्पने च (आ)। √ईष् १/५२७ गतिहिंसादानेषु (आ) काकृ। √ईर्क्ष्य् (ईर्क्ष्य) १/५११ ईर्ष्यार्थः (प)। |

√ईष् १/६०६ गतिहिसादर्शनेषु (आ)>मध्ये रेफप्रवेशे>√ईर्ष् १/५२७ गतिहिसादानेषु (आ) काकृ। प्रयोगो यथा–"कथमीर्षां न कुरुषे"–वा. रा. ४, २४,

३७, "रक्षेद् दारान् त्यजेदीर्षाम्"-मार्क. पु. ३४,७८। √ईर्ष् + य (दैवादिकः श्यन् प्रत्यय) > (वेदेषु √ईर्ष् धातोः प्रयोगो लुप्तः) √ईर्ष्य् इति व्युत्पत्तिः। विलोमक्रमोऽपि स्यादालम्बनीयः। दैवादिकात् प्रत्ययात् पुनर्भ्वादेर्निदर्शनं यथा-√शुच्य् (शुच्यी) १/५१४ अभिषवे (प), √चुच्य् (चुच्यी) १/५१४ (प), √प्याय् (ओप्यायी) १/४८५ वृद्धौ (आ)।

ख—अवे. अरूष्येइति=ईर्ष्ये-पी. टी. एस. पालि-डिक्श., 'इस्सति' इत्यस्य प्रसङ्गे।

ग—ता ईर्ष्यन्तीः पुनरगच्छन्-तै. २, ३, ५, १।

घ—इस्सति (नामधा.-इस्सा। अर्षतिः √ऋष् (ऋषी) इत्यनेनापि सम्बद्धः। लैटि. एरी तथा सं. इरस्यति=क्रोधे)-जातक ३, ७।

ङ—√ईस (सक)-ईर्ष्यार्थः। ईसाअंति (गा. २४०)।

√ईश् (ईश) २/१० श — ऐश्वर्ये (आ) क्षी-मै-सा-च-जै-काक्र-कात-शा-हे-वो। — √ई २/३८ गतिप्रजनकान्त्यसनखादनेषु (प) सा।

ग—ईशे-ऋ. ३, १६, १, ईष्टे-शब्रा. १, ८, ३, १२, काब्रा. १, ४, २, २, छान्दो. १, ६, ८।

√ईष् (ईष) १/६०६ श× — गतिहिंसादर्शनेषु (आ) क्षी-मै-सा-हे।
गतौ—च।
दृष्टौ गतिहिंसयोश्च—जै।
गतिहिंसादानेषु—कात।
दर्शने हिंसागत्योश्च—शा।
सर्पणे दानेक्षहिंसे च—वो।
काक्र-√ईर्ष् (ईर्षा) गतिहिंसादानेषु—काक्र।
— √ई १/३१७ गतौ (प)। √ईक्ष् (ईक्ष) १/६०५ दर्शने (आ)। √एष् (एषृ) १/६१३ गतौ (आ)। √इष् (इष) ४/२० गतौ (प) ईषते=पलायते (निरुक्ते ४/२)। ईषति (निघण्टौ २/१४) गतिकर्मा।

क—√इष (इष) ४/२० गतौ (प)-स्थले प्रेक्षणीयम्।

ग—ईषते-ऋ. १, ८४, १७, पै. ७, ८, ७, तैआ. १, ३, १, ईषते वयः-ऋ १, १४१, ८।

+√ईष् (ईष) १/६७५ श× — उञ्छे (प) क्षी-मै-सा-च-जै-काक्र-कात शा-हे-वो। — √इष् (इषु) ६/७२ इच्छायाम् (प)। √इष् १/२९१a-उञ्छे (प) काक्र।

√ईष् ( ईष ) १/६०६ गति-
हिंसादर्शनेषु ( आ )।

ग—ईषादण्डौ–शिशु. १८, ४३ = दारुविशेषौ ( सर्वङ्कषा )।

| | | |
|---|---|---|
| √ईहृ ( ईह ) १/६२५<br>श | चेष्टायाम् ( आ )<br>क्षी-मै-सा-च-जै-काकृ-<br>कात-शा-हे।<br>चेष्टे—वो। | √इषृ ( इषु ) ६/७२ इच्छा-<br>याम् ( प )।<br>√इषृ १/२९१ उञ्छे ( प )<br>काकृ।<br>√ईष् ( ईष ) १/६०६ गति-<br>हिंसादर्शनेषु ( आ )। |

चेष्टा = शरीरक्रिया। प्रमाणम्–( पा. अ. २/ ३/ १२ )।

क—इ्अघ् = अनुसरणे, इच्छायाम्।

ख—अवे. इज्येइति = ईहते–वा. पॉकर्नीः।

ग—ईहते–गौडपादकारिका ४, ८५, महा. ३, २३, भव. १, ४२, गी. ७, २२।

घ—√ईहृ ( ईह ) चेटायं–सद्दनी. १०१५ ईहति–विनय ३,२६८।

ङ—√ईह ( सक ) ( १ ) विचारणे, ( २ ) चेष्टायाम्। ईहए (विसे ५६१)।

| | | |
|---|---|---|
| √उ ( उङ् ) १/९३८<br>श×<br><br>( जै-√तु [ तुङ् ] )<br>मुद्रणदोषः। उङ् इति<br>भाव्यम्। | शब्दे ( आ )<br>क्षी-मै-सा- च-काकृ-<br>कात-शा-हे-वो।<br>जै। | √वच् ( वच ) २/५२ परि-<br>भाषणे ( प )।<br>√ऊ ( ऊङ् ) १/५५१ f<br>शब्दे ( आ ) काकृ।<br>√ओ ( ओङ् ) १/५५१ m<br>शब्दे ( आ ) काकृ।<br>√औ ( औङ् ) १/५५१ n<br>शब्दे ( आ ) काकृ।<br>√अव्॰ ( अव ) १/५९६<br>रक्षण श्रवण ( प )। |

ग—ऊवे अम्ब सुलाभिके–ऋ. १०, ८६, ७।

अयं धातुः शब्दानुकृतिर्विद्यते। हर्षे दुःखे वा 'उ'–शब्दः सहसा मुखान्निर्गच्छति। काशकृत्स्नधातुपाठे √ऊ, √ओ, √औ शब्दे इति धातवो विकासं लक्षयन्ति। रोषेऽपि 'उ'–शब्देन स्वतो व्यज्यते रोषः। तदुक्तं मेदिनीकारेण—

> सम्बोधनरोषोक्त्योरनुकम्पानियोगयोः।
> पदस्य पूरणे पादपूरणेऽपि च दृश्यते॥ अव्य. ४–५।

वेदेष्वनेकत्र 'उ' इत्यस्य कृतोऽस्ति प्रयोगः—क उ तच्चिकेत–ऋ. १, १६४, ४८, स उ वायुरेव–केनो. २, अ. वे. ६, २६, २, स उ श्वः—कठोप. ४, १३।

√उक्ष् ( उक्ष ) १/६४८ शX सेचने ( प ) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे। वृषि—वो।

√विष ( विषु ) १/६८९ सेचने ( प )। √वृष् ( वृषु ) १/६९७ सेचने ( प )। √उक्ष् १/५२४ वहने (आ) काकृ। √उच् (उच) ४/११० समवाये ( प )। √वच् ( वच ) २/५२ परिभाषणे ( प )।

क—उएग् उ—ःऊग् उ=आर्द्रीकरणे, सेचने। स्—विस्तारः।

ख—अवे.-वक्स्स् =सेचने—वा. पॉकर्नीः।

ग—उक्षन्ति–ऋ. १,१६६,३, उक्षतु–मै. ४,१४,११, शौ. १२,१,७; पै. ५,६,५।

ङ—√उक्ख ( सक ) सेचने–सूअ. २,२,५५।

छ—ऊकना=विस्सरणे, स्खलतौ ( <क्षरणे<सेचने )।

छ—बु. ख.–उसनवौ (<उसन<उक्सन<उक्षण)=गोधूमचूर्णादिक्लेदने, जलेन मिश्रणे।

+√उख् (उख) १/१२८ शX गत्यर्थः ( प ) क्षी-मै-सा-च-कात। गतौ—जै-काकृ-शा-हे-वो।

√वख् ( वख ) १/१३० गत्यर्थः ( प )। √उङ्ख् ( उखि ) १/१२९ गत्यर्थः ( प )। √वुख् १/४६० a चलने ( आ ) काकृ।

क—अउकु( ह्र )–तथा उएक् उ ( ह्र )=उखा ( स्थाली ) गॉथि. अउह्न्स्=चुल्लिः। लिथु. अउक्स् लर्यस् =पिटः–वा. पॉकर्नीः।

ग—उखा (=मांस्पचनी )–ऋ. १,१६२,१३, यज्ञोखा–निरुक्ते १०,४५, कृत्वाय सा महीमुखाम्–शब्रा. १,७,१,७०, उख्यान् अग्नीन् हस्तेषु बिभ्रतः–अ. वे. ४,१४,२। ( उखायां भवस्तान् )।

"अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु"–( निरु. २,२,८ ) इति इहेह विकृतिः प्रयुक्ता लभ्यते, न प्रकृतिः।

छ—ओखा* = मिषः ।

{ ओख = शोषणम् । औखा = अरालम्, कठिनम्, रूक्षम्, शुष्कम्, अचोक्षम् } [<उष् दाहे]

+√उङ्ख् (उखि) १/१२९ गत्यर्थः (प) मै-श-च-जै-काकृ-क्षी-सा । कात-शा हे× गतौ—वो ।

√उख् (उख) १/१२८ गत्यर्थः (प) ।
√वङ्ख् (वखि) १/१३१ गत्यर्थः (प) ।

न्यूङ्खयन्ति-ऐब्रा. ५,३[५], शांब्रा. २२,६, गोब्रा. २,६,८ ।

"उखिरिदन्तोऽनार्षः, न्यूङ्खा ओङ्काराः षोडशेत्याद्यर्थमुन्नीतः" इति तरङ्गिण्यां क्षीरस्वामिमतेन न्यूङ्खशब्द एवास्य प्रयोगविषयः, परन्तु कथमनार्ष इति न साधितम् । अमरकोशटीकायामसौ न्यूङ्खशब्दस्य व्युत्पत्तिं न दर्शितवान् । भानुजिदीक्षितस्तु—न्युङ्ख्यते । उखि+३/३/११८ घः । न्यूङ्ख इति दीर्घपाठे तु पृषोदरादित्वात् (६/३/१०९), यज्ञकर्मण्यजपन्यूङ्खसामसु (१/२/३४) इति निर्देशाद्वा दीर्घः"—इत्याह । मेदिनीकारोऽप्येनं ह्रस्वोकारं पपाठ—

न्युङ्खः सम्यङ् मनोज्ञे च साम्नः षट्प्रणवेषु च ॥ मे. खे २ ।

वस्तुतोऽयं न्यूङ्खशब्दो दीर्घोकारान्तो वेदे लक्ष्यते । स्वार्थे णिच्त्वात् प्रयोजकत्वाद्वा—न्यूङ्खयतीति प्रयोग उपलभ्यते । क्षीरस्वामी उखिधातुमनार्षमाह । ततोऽपि न्यूङ्खमेव साधयितुं तं पपाठापि । एतत् सर्वं न सध्रीचीनम्, पठितेऽप्युखिधातौ दीर्घकल्पना करणीया भवत्येव । मन्ये, अतो हेतोः "उखिरनार्षः" इति स्वामिनः पूर्ववर्तिना केनचन विदुषा प्रतिपादितं वचनं स्वामिना समुद्धृतं स्यात् । अस्मन्मतेन √ऊङ्ख् (ऊखि) धातुः स्यात् समीचीनः । उखिरपि देशप्रयोगभेदात् स्यादिति वक्तुं न प्रभवामि, प्रयोगानुपलब्धेः । मेदिन्यादिपठितं प्रमाणं चेदस्त्येव ।

√उच् (उच) ४/११० श समवाये (प) क्षी-मै-सा-च-जै-काकृ-कात-शा-हे । समवायने—वो । प्रसन्नतायाम्—ह्वि. । (सेवने) वि. ब. शा. ।

√वच् (वच) २/५२ परिभाषणे (प) ।
√वज् (वज) १/२५० गतौ (प) ।

समवायः = ऐक्यम्—क्षी ।

क—एउक् = परिचये, अभ्यासे । अर्मे. उसनिम् = अध्ययने, अभ्यासे । गॉथि. बि-ऊह्त्स् = परिचये, अभ्यासे । लिथु. ज्—उंक्स्तु, जुंक्ति-वा. पॉकर्नीः ।

ग—उवोचिथ हि मघवन्-ऋ. ७,३७,३, अभ्युच्यति-मै. १,८,९। उग्रम् ( उच्यति=क्रुधा सम्बध्यते। उणा. २/२८ )-ऋ. १,८४,९, खि. १,११,५। हिंसायां वृद्धौ प्रभृ. वृत्तिर्द्रष्टव्या।

उग्रः शूद्रासुते क्षत्राद् रुद्रे पुंसि त्रिषूत्कटे।
स्त्री वचाक्षुद्रयोः ॥ ( मेदि. रे, ९-१० )

+√उछ् ( उछी ) १/२१३ विवासे ( प )
श-जै-शा-वो×
क्षी-मै-सा-च-हे।
विपाशे—काक्-कात।
निवासे—ब्योथ-रॉथ।

√वस् ( वस ) १/९८९
निवासे ( प )।
√उष् ( उष ) १/६८७
दाहे ( प )।
√उज्झ् ( उज्झ ) ६/२५
उत्सर्गे ( प )।

विवासः=विनाशः, समाप्तिः-क्षी।

क—अउएस् =द्युतौ।*उस्-, अथवा *उस्-स्, स्—स्त्।

ख—अवे. उसैति=दीप्तौ-वा. पॉकर्नीः।

ग—उच्छन्तु-ऋ. १,१२४,९, मा. ३४,४०, शौ. ३,१६,७, पै. ४,३,१,७। स्वरभेदार्थं तुदाद्यतिरिक्तो भ्वादिपाठः।

√उछ् ( उछी ) ६/१६ विवासे ( प )।
श
क्षी-मै-सा-च-जै-शा-हे।
विपाशे—काक्-कात।
बन्धसमापने वर्जनेऽति-क्रमे—वो। दीप्तौ—ह्वि.।

पूर्ववत्।

क—,ख—,पूर्ववत्।

ग—उच्छन्ती-कौ. १,३०३, जै. १,३२,१।-नुमभावरूपं नोपलभ्यते।

√उज्झ् (उद्झ) ६/२५ उत्सर्गे ( प )
श-जै काक्-कात-शा×
क्षी-मै-सा-च-हे।
त्यागे—वो।

उज्झ् (उज्झ)६/४३ उत्सर्गे-( प )।
क्षी-मै-सा-च-हे-वो×
श ?
जै-काक्-कात-शा।

उद्+√हा (ओहाक्) ३/८
त्यागे ( प )=√उज्झ्।
घञर्थे कः ( वा. ३/३/५८ )। सोपसर्गकमिमं धातुं ज्ञात्वा 'उज्झित्य' इति दे० भा० ७, ३९, २५ प्रयोगः।

ग—उज्झता-संन्या. २, ४१, उज्झितम्-अन्न. ४, ६८, उज्झाञ्चकार-रघु. ५, ७५, उज्झति-नैष. २, २७।

ङ—√उज्झ ( सक ) उत्सर्गे। उज्झइ ( महा )।

छ—बुं. ख.-औझवुँ ( ओझना )=उदकुम्भे पात्रकमप्रवेश्य घटं न्युब्जीकृत्य पात्राद्यन्तरे जलपातने।

उत्+√हा ( ओहाक् ) ३/८ त्यागे ( प )-"घञर्थे कः" (वा. ३/३/५८)=√उज्झ् धातुः। ननु (झयो हः ८/४/६२) पूर्वसवर्णत्वाद् उद्ध् इति भाव्यम्, उज्झ् कुत इति चेन्न, भिद्योद्ध्यौ नदे ( ३/१/११५ ) इति सूत्रेण झकारस्य धत्वनिपातनात् क्यपश्च सत्त्वाद् यथा 'उद्ध्य' इति प्रयोगो भवति 'उज्झ्य' इति भवितव्ये, तथात्रापि विपरीतं जातम्, सूत्रस्य दिङ्मात्रदर्शकत्वात्।

+√उञ्छ् (उछि) १/२१२ शा-वो× उञ्छे ( प ) क्षी-मै-सा-च-जै-काक्-कात-शा-हे। <उत्+√चि=उञ्चि—न्यासः (पा. ४, ४, ३२)।

ग—उञ्छन्-मभार. ३, १५४२३, १४, २७१८। शिलानप्युञ्छतः—मनु. ३, १००, कथमुञ्छेन वर्तयेत्—वा. रा. २, २४, २। इति पादेन लिखितं प्रोञ्छति-मृच्छ. १४०, २३।

घ—√उञ्छ् ( उञ्छ ) उञ्छे-धा. पा. ५२, सद्दनी. १७२, उञ्छने-धा. म. ६६, उञ्छति-विसुद्धिमग्ग ६० (=गवेसति)।

छ—√ऊँछना (<उञ्छनम्=उच्चयनम्) कङ्कतिकया केशप्रसाधने।

√उञ्छ् ( उछि ) ६/१५ जै-शा× उञ्छे ( प ) क्षी-मै-सा-च-काक्-कात-हे-वो। <उत्+√चि (चिञ्) ५/५ चयने ( उ )।

ग—पूर्वधातुवदुदाहरणानि बोध्यानि।

+√उठ् ( उठ ) १/३३५ श-च-काक्-कात× उपघाते ( प ) क्षी-मै-सा-जै-शा-हे-वो।

√ऊठ् (ऊठ) १/३३८ उपघाते ( प ) इत्येके-सि. कौ.।
√रुठ् (रुठ) १/३३५ उपघाते ( प ) इति दौर्गाः-क्षी।
√लुठ् (लुठ) १/३३५ उपघाते ( प ) इति दौर्गाः-क्षी।
√उट् १/११३J गतौ ( प ) काक्।
√उड् १/ संहतौ ( प ) सौ. धा.—वो।

√उद् आघाते–सौ धा –वो।
√उण्ड् १/१८३ हिंसागत्यो॰
(प) काक्र।

नास्य धातो प्रयोगोपलब्धि। सम्बन्धकल्पना तु–√उट् १/११३ गतौ–काक्र।>√उठ् १/३३५ उपघाते>√उड् १/ सहतौ–वो,>√उण्ड् १/१८३–काक्र, >√उद् आघाते–वो, इति स्यात्। अत्र √उट्, √उड्, √उण्ड् धातूना विकृतयो लभ्यन्ते। तद्यथा—

ग—उटज (उट =तृणपर्णादि [देशीकोश॰]। उटाज्जायते–३/२/९८ इति ड)–वा रा १, ४८, २२, मभार् १३, १४७। ब्रह्मोडुपेन प्रतरेत–श्वेताश्व २, ८ (अत्र यद्यपि–डयते–डु, उश्च डुश्च इति व्युत्पत्तिर्भवितु शक्यते, तथापि सारल्याद् √उड् धातुरङ्गीकरणीय)। सहिताश्चोड्रकेरालै –मभार २, ११७४, सपौण्ड्रोड्रान्–मभार ३, १९, ८८। केशोण्डुक०–(√उण्ड् धातु)–सुश्रु १, १०१, १५, १, ३२७, १७, २, १८, ७। उण्डेरकस्रज्–याज्ञ १, २८७।

छ—ओट (<उट =तृणपर्णादि)=रोध, व्यवधानम्।

| | | |
|---|---|---|
| +√उध्रस् (उध्रस) ९/५४ उञ्छे (प) मै श च-जै काक्र कात शा× (क्षी) मै-सा हे वो। (क्षी-हे) | | <उद्+√ह्रस् इति वागीश। √ध्रस् (ध्रस) ९/५२ उञ्छे (प)। |
| √उन्द् (उन्दी) ७/२० श | क्लेदने (प) क्षी मै-सा-च-जै-काक्र कात-शा हे। क्लेदे—वो। | √उन् १/२२०f सभक्तौ (प) काक्र। √उण्ड् १/१८३ हिंसागत्यो (प) काक्र। |

क—उएद्=आर्द्रीकरणे, सेचने। r/n-st उ॒एदोऱ्–, उ॒ओदॉर्, उदेन् (इ), उद्नेस्=वारि।

ख—अवे वैदि=जलमार्ग –वा पॉकर्नी.।

ग—अभ्युन्दत –ऋ ९, ६१, ४, अभि उनत्त–ऋ ५, ४२, ३।

[ "उन्नं क्लिन्ने च सुरते स्यात्" (मेदिनी, ने २) ]

| | | |
|---|---|---|
| √उब्ज् (उब्ज) ६/२४ श | आर्जवे (प) क्षी-मै-सा च-जै-काक्र- कात-शा-हे-वो। शक्तौ—ह्वि। | उद्+√जन् (जा)= √उद्‌ज्। |

| | |
|---|---|
| √उद्ज् ( उद्ज )- | सा । |
| उपध्मानीयोपध - | क्षी-सा । |
| आर्जवम्= | स्पष्टता-क्षी । |

क—उब्=प्रेरणे, उत्तेजने, शक्तौ । लिथु उब्यूति=प्रेरणे उत्तेजने ।

ख—उब्ज्याइते=सत्तायाम् , वृद्धौ । योग्यत्वे-वा पॉकर्नी ।

ग—उन्जन्तु त सुभ्व पर्वतास-ऋ ६, ५२, १, इन्द्राणी रक्ष उब्जतम्-ऋ १, २१, ५ ।

[ ओज उब्जेर्बले बलोपश्च ( उ ४/१९० ) ] ।

छ—बु ख -औजबो ( ना )=बले, शक्तिप्रदर्शने ।

| | | |
|---|---|---|
| √उभ् ( उभ ) ६/४० | पूरणे ( प ) | √उम्भ् ( उम्भ ) ६/४१ पूरणे ( प ) । |
| श | क्षी मै सा-च-काकृ | |
| | कात-शा-हे । | |
| | पूर्तौ—वो । | |
| | निगडे—ह्वि । | |
| जै-√तुभ् (तुभ) | पूरणे—जै । | |

मुद्रणदोष । उभ् इति भाव्यम् ।

ग—अरज्जौ दस्यून् समुनप्—ऋ २, १३, ९ ।

| | | |
|---|---|---|
| √उम्भ् ( उम्भ ) ६/४१ | पूरणे ( प ) | √उभ् ( उभ ) ६/४० पूरणे ( प ) । |
| श | क्षी मै सा-च काकृ कात-शा हे । | |
| | पूर्तौ—वो । | |
| (जै—√तुम्भ् [तुम्भ]) | पूरणे—जै । | |

मुद्रणदोष , √उम्भ् इति भाव्यम् ।

क—उएभ्=तन्तुसन्ताने । वेष्टने, योजने ।

ख—अवे उब्दएन=ऊतम् , तन्तुसन्तत वस्त्रादि—वा पॉकर्नी ।

ग—उब्ध गा येमानम्—ऋ ४,१,१५, क्रैयादिकोऽपि—औभ्नाद् उशमान ओज —ऋ ४,१९,४ । अपौम्भत्—मै ९,१,१२, काठ ११,४, अपोम्भत्—शौ ८,८,११, पै १६,३०,१ ।

ङ—√उभ ( सक ) पूरणे-राज ।—'पाइअ-सद्द महण्णवो'—ग्रन्थेऽस्य देशी ख्यापित' । तन्निरस्तम् ।

छ—√ऊमना=वेगात् प्रवर्तने ( उमड़ना – इति हिन्दी )।

+√उर्द् ( उर्द ) १/२० माने क्रीडायां च (आ)
श-कात-वो×
क्षी-मै-सा-काक्ट-शा।
माने—च-जै।
मानक्रीडयोश्च—हे।
कात-वो √ऊर्द् (ऊर्द) माने क्रीडायां च—कात।
मितिक्रीडास्वादे—वो।

√उर् गतौ – सौ धा —वो।
क्+√उर्द=√कुर्द् १/२१ क्रीडायामेव ( आ )।
ख्+√उर्द=√खुर्द् १/२२ क्रीडायामेव ( आ )।
ग्+√उर्द=√गुर्द् १/२३ क्रीडायामेव ( आ )।

मिति =मानमिति मुख्योर्थ —क्षी।

चकाराद् आस्वादनेऽपि इति दुर्ग'—क्षी।

चकाराद्-आस्वादनेऽपि—सा। आस्वादने—हे।

इह मानम्=सुखम् इति सम्मतायाम्—सा २०।

ग—तमूर्दर न प्रणता यवेन—ऋ २,१४,११ ( ऋ स २,६,१४,५ )।

निरुक्ते—ऊर्दर कुदरमित्यावपनस्य। ऊर्दरमुद्दीर्णं भवति, ऊर्जे दीर्णं वा-२,२०। ऊर्दर-शब्द इह मानार्थक कुशूलादिवाचक। अस्मादेव शब्दादय धातुर्निष्कासित स्यात्। ऊर्दरमुद्दीर्णं भवतीति व्युत्पत्तिदर्शनान्नूनमेष√उर्द् मूलधातुर्नास्ति। माने उत्थापन-स्थापनाभ्या क्रीडा भवतीति गौण क्रीडार्थ। व्याकरणे 'उपधायां च' ( पा ८/२/७८ ) इति दीर्घत्वात् √ऊर्द्। व्युत्पत्तीनां वैविध्यादस्मादपि धातो' ऊर्दर-शब्द शक्य साधयितुम्।

+√उर्व् (उर्वी) १/५६७ हिंसार्थ (प)
श-जै×
क्षी-मै-सा-च।
हिंसायाम्—काक्ट-कात-शा-हे।
हिंसे—वो।

√अर्व् (अर्व) १/५८०
हिंसायाम् (प)।
त्+√उर्व्=√तुर्व् (तुर्वी) १/५६८ हिंसायाम् (प)।
थ्+√उर्व्=√थुर्व् (थुर्वी) १/५७० हिंसायाम् (प)।
द्+√उर्व्=√दुर्व् (दुर्वी) १/५६९ (प)

धू+√उर्व्=√धुर्व्
(धुर्वी) १/५७०
हिंसायाम् (प)।

क—रेउ=चूर्णने, गर्तस्य खनने, त्रोटने, दारणे। लिथु.—उर्वस, उर्व=गह्वरम्, रन्ध्रम्—वा पॉकर्नी।

ग—ऊर्व इव पप्रथे-ऋ ३,३०,१९। ऊर्व=अग्नि (निरुक्तभाष्ये दुर्गा ६/६)।

(१) समानमूर्वं नद्य पृणन्ति-ऋ २,३५,३।

(२) प्रात सवन ऊर्वा माध्यन्दिने—ऐब्रा ७, ३४, शाङ्खश्रौ ७,५,२४।

√उष् (उष) १/६८७ दाहे (प)
श-जै काकृ-शा× क्षी-मै-सा-च-वो।
(कात-हे—टीकायामेव)
वधे दहि—वो।

√वष् (वष) १/६८१
हिंसार्थ (प)।
√वस् (वस) १०/२०४ स्नेहच्छेदापहरणेषु (प)।
√उल् (उल) १/ दाहे
(प) सौ वा—वो।

√उष् (उषु) दाहे (प)
क्षी-मै-सा-श-च कात (जै) काकृ-(टीकायामेव)
×(जै) शा हे।
(जै—√तुप्) वधे दहि—वो।

क—एउस्=दाहे। लैति उस्तुम्=(उष्टम्) उषितम्—वा पॉकर्नी।

ग—ओषति-ऋ १,१३०,८, उष्णाति-पै ९,१६,५।

छ—√ऊकना-दाहे, तापे। "लूकैं वसन्त की ऊकन लागीं"-पद्माकर।

+√उह् (उहिर् १/७३० अर्दने (प)
श-च काकृ-कात-× क्षी-मै सा च-जै शा हे।
अर्हे—वो ?

√दुह् (दुहिर्) १/७३०
अर्दने (प) इति
चन्द्रदुर्गौ—क्षी।
√उष् (उष) १/६८७
दाहे (प)।

क—एउएगुह्=विकत्थने (प्रसन्नम्)। एउगुह्-, उएगुह्

ख—अवे-अओग् (ज्)—(अओजैते, अओक्स्त्, अओगुद्)=घोषणे, प्रकाशने—वा पॉकर्नी।

ग—नैशमेनो व्यपोहति—मनु २, १०२=नाशयति (मन्वर्थ)।

वेदे भिन्नार्थक उभयपदी च—

ओहते—ऋ ५,४२,१०, ७,६६,१२, ७,१६,११, ५,५२,१० ।

अत्यौहीत्—मै ४,३,८ ।

+√ऊय् ( ऊयी ) १/४८० तन्तुसन्ताने ( आ ) √वे ( वेञ् ) १/९९० तन्तुसन्ताने ( उ ) ।

श× क्षी-मै सा-च जै काकृ कात-शा हे ।

सेवने—वो ।

अय धातु' √वे ( वेञ् ) १/९९० तन्तुसन्ताने ( उ ) धातो कर्मणि प्रयोग रूप । तस्यात्र कर्तरि सक्रान्तिर्भाति । दिवादावित्थ बाहुल्येन लभ्यन्ते निदर्शनानि ।

ग—[ उपोयते ( वेञ' कर्मणि )म भाष्ये १ १ ५. ८ ११ / ७४ ] ।

√ऊर्णु ( ऊर्णुञ् ) २/२८ आच्छादने ( उ ) √वृ ( वृञ् ) ५/८ वरणे (उ)- वृणु (ते) > ऊर्णु ।

श क्षी मै सा च-जै-काकृ-कात शा-हे-वो । √वृ ( वृञ् ) ९/१४ वरणे(उ) ।

क—ऊल् = केश , ऊर्णा-जू पॉकर्नी' ।

ग—अपोर्णुते-ऋ १, १५६, ४, अभ्यूर्णोति-ऋ ८, ७९,२, ऊर्णोति-शौ १८, ४, ५९ ।

छ—√ओढना = आच्छादने । हिन्दीशब्दसागरकारोऽस्य व्युत्पत्ति कृतवान्-उपवेष्टन > प्रा ओवेड्डन > ओढना, इति, तन्न समीचीनम्, क्लिष्टकल्पनत्वात् ।

छ—√ओड़ना-वारणे, छादने ।

√ऊष् ( ऊष ) १/६७४ रुजायाम् ( प ) √वष् ( वष ) १/६८१ हिंसार्थ. ( प ) ।

श-कात-× क्षी मै-सा च जै-काकृ शा हे । रोगे—वो ।

√उष् ( उष ) १/६८७ दाहे ( प ) ।

√उष् ( उष ) १/७२३ रुजायाम् ( प ) कात ।

√ऊष (ऊष) १०/३८५ क्षुरणे ( प ) क्षी-हे ।

ग—ऊष इवैष पिस्यति-शब्रा ९, ५, १, १७, तस्मात् पशव्यमूषरमित्याहु - शब्रा २, १, १, ६ ।

छ—√ऊकना-द्र √उष् ।

| | | |
|---|---|---|
| √ऊह् ( ऊह ) १/६४० श× | तर्के ( आ ) क्षी-शा-हे वो । वितर्के—मै-सा च-जै-काकृ-कात । | √वह् (वह) १/ प्रापणे(उ)। √उह् ( उहिर ) १/७३० अर्दने ( प )। |

क—ऊह्=प्रेरणे, रेखायाम्-वा पॉकर्नी ।

ग—( ऊहति-ऋ ५, ३४, ३ ), ऊहे—ऋ ५, ३, ९, १, १८१, ४ ?

ङ—√ऊह ( सक )=तर्के, ( २ ) विचारणायाम् । ऊहइ ( त्रिसे ८३१ )

छ—√ऊढना (<ऊहनम् )=तर्के, ( २ ) विचारणायाम्, ( ३ ) अनुमाने ।

| | | |
|---|---|---|
| √ऋ १/९२० श | गतिप्रापणयो ( प ) क्षी मै-सा । | |
| | गतौ प्रापणे च—नै काकृ-शा हे-वो । | √ऋ १/५५१ शब्दे ( आ ) काकृ । |
| | प्रापणे—च कात । | √ऋ १/३५१ ( प ) काकृ-अरति । |
| काकृ-२५० | –( गतौ ) प्रापणे-च-कात । | √री ९/३० गतिरेषणयो (प) |
| ( काकृ कात- | गतौ—काकृ कात । | |

√ऋच्छ् [ ऋछ ] )

क—एर्=अपनये, कम्पे । -स्कु( ह् )ऑ-( स ऋच्छति )-वा पॉकर्नी ।

ग—अ+यारु -ऋ ३, १, ४, ऋच्छ-मा १२, २४, का १३, २, ७, तै ४, २, २, २ । अर्पयति-तै २, ६, ४, ४, मै २, २, ३ । क २९, ७ ।

ङ—√रि ( सक ) गमने । कर्मणि-अज्जए ( त्रिसे १३६९ ) ।

ङ—√उप्पि ( सक ) दाने । उप्पिउ ( कप्प ) ।

छ—√अरपना॰ = अर्पणे, उपहारे ।

एष धातुरेषु धातुष्वनुगत सम्प्राप्यते-√ऋक्ष्, √ऋच्, √ऋच्छ्, √ऋण्, √ऋत्, √ऋद् ( वेदे ), √ऋध्, √ऋन् ( वोपदेव ), [ √ऋप् ( अर्प्-अर्पय् ) ] √ऋफ्, √ऋम्फ्, √ऋष्, √ऋह् ।

| | | |
|---|---|---|
| √ऋ ३/१६ श | गतौ ( प ) । क्षी-मै सा-जै-काकृ शा हे-वो । | पूर्ववत् । |
| | प्रापणे—च कात । गत्याम्—वो । | इयति ( निघण्टौ २/१४ ) गतिकर्मा । |

क—द्रष्ट √ईर (ईर्) २/८ गतौ कम्पने च (आ)।

ग—इयर्ति वाचमरितेव नावम्-ऋ २, ४२, १, १, ७, ८, मा ३३, ७८।

√ऋ ५/२९ हिंसायाम् (प) इत्येके- ऋणोति (निघण्टौ २/१४)
मै सा च जै काक्र कात क्षी गतिकर्मा।
शा× क्षी हे।
हिंसे—वो।

क—√ऋ गतिप्रापणयो' (प) इति द्रष्टव्यो धातु।

ग—यदीमृण्वन्ति वेधस-ऋ ९,७,५, अभि ऋणोति-ऋ १,३५,९। वेदेष्वय गत्यर्थको भाषाया च हिंसार्थक' स्यात् परन्तु भाषाप्रयोगो न दृश्यते।

√ऋक्ष् ५/२९ हिंसायाम् (प) दुर्गस्तु—क्षी √ऋ५/२९ हिंसायाम् (प)
मै सा-श-जै-काक्र- क्षी-च हे। इत्येके—क्षी।
कात शा× वधे—वो √ऋष् (ऋषी) ६/गतौ (प)।
√ऋमुक्ष् १/५१८ घातने (आ) काक्र।
√ऋक्ष् (ऋक्षि) ५/२९ हिंसायाम् (प)।

ग—ऋक्ष (√ऋक्ष्+अच्)=पर्वतविशेष -इति सिद्धान्तशिरोमणि।

ऋक्ष'=भल्लूक -मनु १२, ६७।

ऋक्षम् (√ऋष् ६/७ गतौ+उणा ३/६६-इति स) = नक्षत्रम्। यथा-मनु २,१११।

+√ऋक्ष् (ऋक्षि) ५/२९ हिंसायाम् (प)
मै-सा च-जै-काक्र- क्षी। पूर्ववत्।
कात शा-हे-वो× पुरुषकार (२४ पृष्ठे)।

√ऋच् (ऋच) ६/२३ स्तुतौ (प) √अर्च् (अर्च) १/२०१
श क्षी-मै-सा च-जै-काक्र- पूजायाम् (प)।
कात-शा-हे। √अर्क् (अर्क) १०/१०३
नुत्याम्—वो। स्तवने (प)
दीप्तौ स्तुतौ—ह्नि।

ग—आनृचु'-ऋ ८, ५१, १०, खि ३, ३, १०, ऋच्यन्ते-ऋ ७, ७०, ६।

√ऋच्छ् (ऋछ) ६/१७ इन्द्रियप्रलयमूर्त्तिभावयोः (प) √ऋ १/९२० गतिप्रापणयो।
श क्षी-जै शा-हे। (प) >√ऋच्छ्।

| | | |
|---|---|---|
| | गतीन्द्रियप्रलयमूर्त्तिभावेषु- मै सा काक्र कात । गतौ—च-हे-ह्वि । मूर्त्तौ गमनमोहनयो —वो । | √ऋष् ६/७ गतौ (प)। √ऋच् (ऋच) ६/२३ स्तुतौ (प)। ऋच्छति (निघण्टौ २/१४) गतिकर्मा । ऋच्छति (निघण्टौ ३/५) परिचरणकर्मा । |

क—√ऋ १/९२० धातुर्विलोकनीय ।

ग—ऋच्छतु-ऋ १०, १६४, ५, सह वाव तामार्तिमृच्छति-ऐमा २, ३१ आर्छेवा बाहुसरम्भात् केशाकेशि रथारथि-मभार ४, १०५६ ।

| | | |
|---|---|---|
| √ऋज् (ऋज) १/१७३ श× | गतिस्थानार्जनोर्जनेषु (आ) क्षी सा हे । गतिस्थानार्जनोपार्जनेषु—मै-सा । गतिस्थानोर्जनेषु—जै । गतौ—च काक्र-कात । गतिस्थैर्योर्जनार्जने—वो । | √ऋ १/९२० गतिप्रापणयो॰ (प)। √ऋच्छ् (ऋछ) गतीन्द्रिय-मूर्तिभावेषु (प) मै । √अर्ज् (अर्ज) १/२१९ अर्जने (प)। भ्+√ऋज=√भृज् (भृजी) १/१७४ भर्जने (प)। |

क—रेगु्=परिवर्तने, आदेशे, निर्देशने, विस्तारे ।

ख—एुरुजु=ऋजु, समीचीनम्, सरलम्, साधु—वा पॉकर्नी ।

ग—मनुष्य ऋञ्जते गिरा-ऋ ७ २, ५, ६, १५, १, ऋज्यन्तो वहेयु'-ऋ ६, ३७, ३, ऋञ्जति प्रसाधनकर्मा । ऋजुरित्यप्यस्य भवति—निरु (६/२१)। अवार्जति-काठ २८, १, अवार्जेयु'-तै ७, ५, ३, २, काठ ३३, ५, यद्घमर्जति-नैष ५, ८४ ।

| | | |
|---|---|---|
| √ऋञ्ज् (ऋजि) १/१७४ श× | (भर्जने आ) क्षी-मै सा च-जै काक्र कात-शा हे । भृजि—वो । | √ऋ १/९२० गतिप्रापणयोः (प)। √ऋज् (ऋज) १/१७३ गतिस्थानार्जनोर्जनेषु (प)। |

भर्जनम् = पाकप्रकार —क्षी ।

क—पूर्ववत् ।

ग—निरुक्तव्याख्यात प्रसाधनकर्मा (६/२१) √ऋञ् धातु शब्दशस्त्वत्र दृश्यते। स गतिप्राप्तिकर्माप्यस्ति-ऋ ४, ४८, ५, ३, ८७, ५। पाकप्रकारोऽपि सूक्ष्मदृशा प्रसाधनमेव। इदमेव प्रसाधन भाषाया पाकप्रकारेण विकसितम्। नन्वय पाकप्रकारो यास्केन कुतो नोल्लिखित, निरुक्तस्य भाषाविषयत्वाभावात्। ननु पाणिनिना प्रसाधनमर्थं कुतो नोद्धृत, पाणिनिसगृहीतधातूना प्रामुख्येन वेदविषयत्वाभावात् तदानीन्तनप्रचलितभाषाविषयत्वाच्च। यास्केन निरुक्तोपोद्घाते भाषासम्बन्धे प्रतिपादितम्-"अथापि भाषिकेभ्यो धातुभ्यो नैगमा कृतो भाष्यन्ते दमूना क्षेत्रसाधा इति (२/२/६)। "अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु। शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते। विकारमस्यार्येषु (जनपदेषु) भाषन्ते—शव इति। दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु (२/२/८)। इत्थ प्रचलितसस्कृतभाषा सक्षेपेण परिचाय्यापि विषयवर्णने नैतदीय वर्णनीय किमपि प्रतुष्टाव, तस्य भाषाविषयत्वाभावात्। एवमेव पाणिनिनापि सक्षेपेण वैदिकधातून् निर्दिश्य जुहोत्यादौ स्वादौ च, बहव सन्तोऽपि, वेदधातवो न विवृता, प्राधान्यन तस्य तद्विषयत्वाभावात्। विविधप्रदेशप्रचलितसस्कृतभाषासगृहीतत्वादेव दृश्यन्ते धातुपाठे भूरिपाठभेदा।

ग—पिष्टपचनार्थकम् ऋजीष तान्त्रिका पठन्ति-इत्यमरकोशे क्षीरस्वामी (२, ९, ३२)। इत्ययमर्थस्तात्कालिको भाति धातो। क्षीरतरङ्गिण्याम् ऋजीकम् इति पाठ। उणादौ तु-"अर्जेर्ऋजश्च" ४/२२ इतीषन् भवति। सिद्धान्तकौमुदीतत्त्वबोधिन्याम्-"उद्धृतरस सोमलताया शेषोऽपि 'ऋजीषम्'। एतच्च 'ऋजीषिण वृषणसश्चत श्रिये' 'आसत्यो यातु मघवाँ ऋजीषि' इत्यादिमन्त्रभाष्ये स्पष्टम्"-५४९ पृ। तुलनीय'-ऋबीस (निरु ६/३६)-शब्द पृथ्वीवाचक।

| | | |
|---|---|---|
| √ऋण् (ऋणु) ८/४ | गतौ (उ)। | √ऋन् ८/ गतौ (उ) वो। |
| श | क्षी-मै-सा-च जै कात-शा हे वो। | √ऋ १/९२० गतिप्रापणयो' (प)। |
| | दुर्गतौ—काक्ष। | ऋणोति-(निघण्टौ २/१४) गतिकर्मा। |
| | | ऋण्वति-(निघण्टौ २/१४) गतिकर्मा। |

क—√ऋ १/९२० धातुर्दर्शनीय।

ग—अय सौवादिक प्रपञ्च। अभि ऋणोति-ऋ १, ३५, ९, भौवादिकोऽपि प्रयोग -ऋण्वति (रिण्व्?)-ऋ १ १४४, ५, कौ १, ८३, जै १, ९, ३।

| | | |
|---|---|---|
| √ऋत् ( ऋत ) ७/१ | घृणायाम् (आ) सौ धा —सा । पा सू ३, १, २९। च सू १, १, ४८। | |

द्रष्ट० उत्तरधातु ।

| | | |
|---|---|---|
| √ऋत् ( ऋत ) १/७९२ | घृणागतिस्पर्धनेषु ( प आ ) शा । घृणागतिस्पर्धेषु—हे । स्पर्धनैश्ययोर्घृणागत्यो — वो । | √ऋ १/९२०+क्त=ऋत >√ऋत् । ऋतम्=उञ्छशिलम्-मनु ४, ४-५ । |

ग—ऋतीयते-शब्रा ३, ४, ७, ३ । अन्वर्तिता-ऋ १०, १०९, २ । ऋतनामान स्त्वनेके प्रयोगा -ऋतयन्-ऋ १, ११३, १२, मै ४, १४, १५, ऋतायते-( चतुर्थी )- बृहदारण्यकोप ३, ६, ६, मना ७, ३९ ।

| | | |
|---|---|---|
| √ऋध् ( ऋध ) ४/१३२ श | वृद्धौ ( प ) क्षी-मै सा-च कात शा हे-वो । वर्धने—जै । | √ऋ १/९२० गतिप्रापणयो ( प ) । ब् + √ऋध्=√वृध् (वृधु) १/७५१ वृद्धौ ( आ ) । |
| काक-√रुध् [ रुधु ] स्याल्लैपिकी त्रुटिर् ऋधुस्थाने । | वृद्धौ—काक । | |

क—अल्ह = वृद्धौ ।-ध्-विस्तार । स्वीडिश्-अल्द = फलाना स्थिति (छवि ), पु आइस् अल्दिन=वृक्षफलम् ।

ख—अवे अरूदत्, एरदात् =वृद्धौ-वा पॉकर्नी ।

ग—ऋध्यन्ते-साब्रा ३, ४, ८ । ( कर्मणि कर्तरि वा ? )"।

घ—रिज्झति ( वैदि ऋध्यते )=सफलतायाम्-सयुत्त १,१७५ ।

ङ—रिज्झ ( अक ) १ वृद्धौ ( २ ) प्रसादे । रिज्झइ ( भवि. ) ।

ड—√गीझना=प्रसादे, मोहने ।

| | | |
|---|---|---|
| √ऋध् ( ऋधु ) ५/२५ श | वृद्धौ ( प ) क्षी-मै सा-च-कात शा हे-वो । | पूर्ववत् । |
| (काक-√रुध् [रुधु] ) | वृद्धौ—काक । | ऋध्नोति (निघण्टौ ३/५) परिचरणकर्मा । |

क—ख—पूर्ववत् ।

ग—ऋध्नोति-ऋ १,१८,८, मनु ९,३३२। अर्धयन्ति-अ वे ७,८०,४, जयग्रति-काठ ८,१५। भौवादिकोऽप्ययम्-ऋधते-जैब्रा १५६ ? ऋधद्वागायाग्नये ददाश-ऋ ६,३,२।

| | | |
|---|---|---|
| +√ऋफ्(ऋफ) ६/२८ प× | हिंसायाम् ( प ) क्षी मै-सा-च जै-शा ।<br>कत्थनयुद्धहिंसादानेषु-हे ।<br>भर्त्सनहिंसयो —काकृ ।<br>कत्थनयुद्धनिन्दाहिंसादानेषु-कात ।<br>दानश्लाघननिन्दाहिंसाजौ-वो । | √ऋ१/ गतिप्रापणयो (प)।<br>√५/२९ हिंसायाम् ( प ) इत्येके-क्षी ।<br>√ऋक्ष् ५/२९ हिंसायाम् (प) दुर्गस्तु-क्षी ।<br>√ऋड्क्ष् ५/२९ हिंसायाम् ( प ) ।<br>√ऋम्फ् ६/२९ हिंसायाम् ( प ) ।<br>√ऋह् ६/२७ कत्थनयुद्ध-हिंसादानेषु ( प )-क्षी ।<br>√रिफ् ६/२६ कत्थनयुद्ध-हिंसादानेषु ( प )-मै हे । |
| +√ऋम्फ् (ऋम्फ) ६/२९ | हिंसायाम् ( प ) क्षी-मै सा च-जै-कात-शा-हे ।<br>भर्त्सनहिंसयो'-काकृ । | √ऋफ् ( ऋफ ) ६/२८ हिंसायाम् ( प )।<br>अन्ये ध्वनय पूर्व-वज्ज्ञेया ।<br>√रिम्फ् १/२०२1 हिंसायाम् ( प ) काकृ ।<br>√रिम्फ् ६/६६ हिंसायाम् ( प ) हे । |
| √ऋष् ( ऋषी ६/७ श<br>( काकृ-√झष् ( झषी ) सम्भवतो मुद्रणदोष ऋषी-स्थाने ।<br>( कात-√रिष् [ रिषी ] ) | गतौ ( प ) क्षी-मै-सा-च-जै शा हे-वो ।<br>काकृ ।<br>कात । | √ऋ १/९४० गतिप्रापणयो' ( प )।<br>√ऋक्ष् ५/२९ हिंसा-याम् ( प )।<br>√ऋप् १/५७६-b सवरणे आदाने च ( उ ) शा । |

√ऋश् १/ गतिस्मृत्यो (प) सौ धा—वो। ऋश्य—ऋ ८,४,१०। ऋश्य–मृगविशेष–इति शब्दरत्नावली।

क—ऐरस्-(ऐर्स्, रस्)=प्रवाहे, धावने, तथा रेस्=मार्गप्राप्त्यर्थमितस्ततो भ्रमणे। ❀ एर्स्, ऋस्, पु उ ज उर्, ऊर्गोहसो, म उ ज–ऊर्हन्।

ख—पु पर्सि–अर्स्न्=मनुष्य, पति–त्रा पॉकर्नी।

ग—श्रृङ्गाम्या रक्ष ऋषति–अ वे ९,४,१७, अर्षति–ऋ ९,३,९, मा ३३,५५।

+√ऋहू (ऋह) ६/२७ कत्थनयुद्धहिंसादानेषु (प) क्षी। मै-सा श-च-जै- काकृ कात शा- हे वो ×

>√रिहू (रिह) ६/२७ कत्थन युद्धहिंसादानेषु (प) इति द्रमिडा–क्षी।

√रिफ् (रिफ) ६/२६ कत्थनयुद्धहिंसादानेषु (प) मै हे।

√ऋफ् (ऋफ) ६/२८ हिंसायाम् (प)।

√अर्हॅ (अर्ह) १/७३१ पूजायाम् (प)।

क—लेगुह्न–सरलम्, स्वतन्त्रम्, प्रेरणे, उत्तेजने। नासिक्यम्–लेंग् उह्।

ख—अवॆ एरूयन्त्=भयपूर्णम्, भयानकम्–वा पॉकर्नी।

ग—आनृहु–तै ३,२,८,३। [सपा आनृहु >आनृधु <>आनशु इति पाभे० ]ऋहते–ऋ १०,२८,९। [धातु कृशभावे वृत्ति। विप =ह्रस्व-([निघ ३/२ तु तत्रैव बृहन्तम्])। WAG (१,२१४ a) MVG (५८, १ a) <ऋघ् √रघ् इति दे <√रुहू इति वा√रहू (त्यागे) इति वा, GW √रहू (गतौ) इति च]।

+√ऋ ९/२६ गतौ (प) क्षी-मै सा- च-जै काकृ-कात-शा हे। गत्याम्—वो। श

√री ९/ गतिरेषणयो (प)। √रिणाति (निघण्टौ २/१४) गतिकर्मा।

√ऋ १/९२० गतिप्रापणयो (प)।

√ऌ १/५५१ Jशब्दे (आ) काकृ।

| | | |
|---|---|---|
| +√एज् (एजृ) १/१७६ दीप्तौ (आ) श× | क्षी-मै-सा-च जै-काक्र-कात-शा-हे—वो। | भ्+र्+√एज्=√भ्रेज् (भ्रेजृ) १/१७७ दीप्तौ (आ)। र्+√एज्=√रेज् (रेजृ) १/१७८ दीप्तौ (आ)। √अस् (अस्) १/८७७ दीप्तौ (उ)। √इन्ध् (ञिइन्धी ७/७ दीप्तौ (आ)। |

( ग—एजयतेऽक्षिणी मे- भा पु ५,२, १४ )

| | | |
|---|---|---|
| √एज् ( एजृ ) १/२३० कम्पने ( प ) श | क्षी-मै-सा-च जै-काक्र-कात शा हे। कम्पे—वो। | √इङ्ग् (इगि) १/१५७ गत्यर्थ (प)। √इख् (इख) १/१४० गत्यर्थ॰ (प)। √ईर् (ईर) २/८ कम्पने (आ)। √एजति ( निघण्टौ २/१४ ) गतिकर्मा। |

क—ऐज्=इतस्ततो दोलने, कम्पने–वा पॉकर्नी।
ग—एजति–ऋ ५,७८,८, मा ८, २८, का ९,५,१, तै ४,७, १५, १।
ङ—√एय ( अक ) ( १ ) कम्पने, ( २ ) चलने। एयइ ( कम्प )।

| | | |
|---|---|---|
| +√एठ् (एठ) १/२६४ च=विबाधायाम् ( आ ) श× | क्षी-मै-सा-च-जै-काक्र-कात-शा हे। बाधने—वो। विबाधनम्=शाठ्यम्। | ह+√एठ्=√हेठ् (हेठ) १/२६३ विबाधायाम् (आ) ह्+√एट्=√हेट् (हेट) १/५८६ विबाधायाम् (आ) जै-शा हे। ह्+√एड्=√हेड् (हेड) १/१९३ विबाधायाम् (प) हे। √एड् १/२१६० धारणे (प) काक्र। |

विपूर्वोऽयमिति स्वामिकाश्यपौ। मैत्रेयादयस्तु केवलमेवोदाजह्न'–सा१/२६४।

[ छ—√ऐंठना=(<वेष्टनम् ?)=तथा भूताया क्रियाया जीवेषु सत्या शाठ्य भवति । ]

√एध् ( एध ) १/२ श — वृद्धौ ( आ ) क्षी मै सा च-जै-काकृ-कात शा हे-वो । — √ऋध ५/२५ वृद्धौ (प)।
व् + √ऋध्=वृध् ( वृधु ) १/७५१ वृद्धौ (आ)।
√इन्ध् (इन्धी) ७/२ दीप्तौ ( आ )।
√अस् ( अस ) २/५४ भुवि ( प )।

क—ऍस्=सत्तायाम्–वा पॉकर्नी ।

ग—एधते-ऋ २,२५,५, खि ५,१०,४, नेहासौ सुखमेधते-मनु ४/१७०= सुखयुक्तो वर्तते ( मन्वर्थ ) ।

घ—√एध् ( एध ) बुड्ढिय-धा पा १६५, धा म २४०, बुड्ढिय लाभे च-सद्द=नी ५०४, एधति-सयुत्त १,२१७, सुत्तनिपात २९८ ।

ङ—√एह ( सक )=वृद्धौ । एहता-( दस ९ ) ।

+√एव् ( एवृ ) १/४९७ मै-सा श-च जै काकृ-कात शा-हे-वो× — सेवने ( आ ) क्षी । — क्+√एव्=√केव (केवृ) सेवने (आ), सेचने-काकृ-कात ।
क्+ल्+√एव्=क्लेव् ( क्लेवृ ) सेचने ( आ ) सा ।
इत्थमेव—√खेव् सेवने ( आ ), सेचने-मै ।
√गेव् सेवने ( आ ) चृ-जै । सेचने-मै ।
√ग्लेव् सेवने ( आ ), सेचने-मै ।
√ग्रेव् सेचने ( आ ) काकृ ।

अत्र सर्वत्र ध्वनिषु√एव् धातुरनुसगत' । इह १/४९७ धातुस्थाने स्वामिनमतिरिच्य सर्वे√गेव् धातु पठन्ति ।

ग—रामस्तु भरते पाप कुर्यादेव न सशय'—वा रा २,८,३२, एवं ते–वा रा २,८,३४ ।

अवधारणार्थक 'एव'-शब्दस्तु—√इ ( इण् ) २/३४+इण्शीभ्या वन् ( उणा १/१५२ ) इति सिद्ध्यति। इवार्थक 'एवम्'-शब्दसाधने तु—

१—'ए' इत्थ भवति। टुवम् उद्गिरणे ( ३,२,७५ ) विच्।

२—√इ ( इण् )+बाहुलकाद् वम् इति भानुजिदीक्षितो नैकमत्य भजते। क्षीरस्वामी व्युत्पत्तिमेव न दर्शयति। स्वीकार एव प्राय' सेवनम् इति स्यादनेन शब्देन √एव् १/४९७ धातो सम्बन्ध । धरणिकोशे 'एवम्'-शब्दार्थ —

एव प्रकारोपमयोरङ्गीकारेऽवधारणे।

| | | |
|---|---|---|
| √एष् ( एषृ ) १/६१३ शX | गतौ ( आ ) क्षी-मै-सा च-जै-काकृ कात शा-हे वो। | √इष् ( इष ) ४/२० गतौ ( प )। √इषु ( इषु ) ६/७२ इच्छायाम् ( प )। √ईष् ( ईष ) १/६०६ गतिहिंसादर्शनेषु (आ)। √इषति ( निघण्टौ २/१४ ) गतिकर्मा। |
| √इष् १/ | अन्वेषणे—( उ ) ह्वि । | |

क—√इष् ४/२० धातु प्रेक्षणीय ।

ग—एषति ( गतौ प्रेरणे बले प्रभृ धा वृत्ति ) पै ३,४०,१, ऐब्रा १,३०, एषतु-खि ५,२,३१ शौ ६,६७,३। पर्येषते भक्तम्, पर्येषमाण -सद्ध पुण्डरीक - ४,३४ ( b )।

घ—√एस् ( एसु ) सद्दनी ९३६, ९७७ एसति [आ+√इष-वागीश ]= अन्वेषणे-सुत्तनिपात ५९२।

| | | |
|---|---|---|
| +√ओख् (ओखृ) १/१२१ शX | शोषणालमर्थयो (प) क्षी-मै-सा-च जै काकृ-कात-शा-हे। शोषणे—च। शोषालमर्थयो'—वो। | √उष् ( उष ) १/६८७ दाहे ( प )। √उख् ( उख ) १/१२८ गत्यर्थ ( प )। √उ शोषणे—काकृ। |

अलमर्थे=भूषणे सामर्थ्ये निवारणे।

ङ—ओखा*( <√ओख्=वारणे )=मिष ।

छ—ओखा ( वि ) ( <√ओख्=शोषणे। पाञ्चालभाषायाम्-ओखा= जिह्मम्, कठिनम् )=( १ ) रूक्षम्, शुष्कम्, ( २ ) कठिनम्, अरालम्, ( ३ ) अचोक्षम्, ( ४ ) विरलम्।

+√ओण् (ओणृ) १/४४६ श-काक× | अपनयने (प) क्षी-मै-शा-च-जै-कात-शा-हे। अपसारणे—वो। | √ऊन् (ऊन) १०/परि-हाणे (प)।

ग—ओण्यौ-(द्यावापृथिव्योर्नामधेयम्-निघण्टौ ३/३०)। [√ओण् १/४४६+सर्वधातुभ्य इन् (उ ४/११४), कृदिकारादक्तिन (४,१,४५ वा)-इति ङीष्। अपनयत स्वाश्रिताना क्लेशान् इति दुर्गाचार्य।] अभित्य देव सवितारमोण्यो (वा स ४,२५)। प्र ते सोतार ओण्य -ऋ९,१६,१।

घ—ओणि [(तुलनीय -ऋ ९,१६,१)=सोमपात्रविशेष।] ओणिरक्ख=निक्षेप-(=धरोहर—हि)-सरक्षक -विनय ३,४७, ५३।

छ—√ओडना-(<ओणनम् =अपनयनम्)=रोके, वारणे।

ठ—ओना=तडागादिभ्यो जलादिनिष्कासनाय वर्तनी (प्रणाली)। अस्य उद्गमनम् >ओना इति व्युत्पत्ति सुतरामसङ्गता।

ठ—बु ख -औड़ा=भित्तिभेदनम्।

+√कस् (कसि) २/१४ श | गतिशासनयो (आ) क्षी-सा। गतिनिशानयो —मै। गतिसततानयो —जै। गतौ—च-काक-कात। गतिशातनयो —शा-हे। गतौ शाते च—वो। | घ—अवकंस (अवकर्ष (ति))-दीघ १,५४। √कश् (कश) २/२४ गति-शासनयो -(आ) सा।

ग—शत कसा शत दोग्धार -अ वे १०,१०,५, ऐब्रा ८,१०। औदुम्बरे कसे चमसे वा-शब्रा १४,९,३,१।

[कसम् =(कामयते काम्यते वा अनेन (अस्मात्—क्षीरस्वामी) पातुमिति शेष'। उणा ३/६२ इति स)=पानभाजनम्। पित्रादिबन्धुवर्गान् अभिभूय पापात्मक राज्यविषयादिभोग कामयते य। √कम् +स =कस — कृष्णमातुल। एव व्युत्पत्तिदृशाऽय √कस् (कसि) धातु "शत कसा शत दोग्धार" अ वे १०, १०, ५ प्रभृतिगतकसशब्दैर्न सम्बध्नाति।]

ङ—कसिआ (<कसिका) (१) ताल, (णाया १, १७), वाद्यविशेष (आचा २), कस=महाग्रहविशेष' (ठा २, ३—पत्र ७८)।

+√कक् (कक) १/८७ लौल्ये (आ)
श ×
क्षी-मै-सा-च-जै-काकृ-कात-शा हे।
इच्छागर्वचापले—वो।
इच्छा = इह तृष्णा—दुर्गादास।

√कर्क् (कर्क) १/४०९c लौल्ये (आ) काकृ।
√कक्क् (कक्क) १/४०९b लौल्ये (आ) काकृ।
√कक्ख् (कक्ख) १/११९ हसने (प) मै।
√कग् (कगे) १/५१७ हसने (प) कात।

लौल्यम् = गर्व, चापल्य च—क्षी।
क—कॅक् = बुभुक्षायाम्—वा पॉकर्नी।

ग—ककुहास—ऋ स १, ३, ३३, ३।—ककुह इति महन्नाम (निघ ३/३)। दुर्गाचार्य √कक् (कक) सहने इति धातुत 'उह'-प्रत्यय कल्पयति, तन्न विचारसहम्, एतादृशधातोरेवासत्त्वात्। महेच्छस्तु महाशयो महान् भवत्येव। ककुह सोम्यो रस—ऋ ९, ६७, ८, ककर्दवे वृषभो युक्त आसीत्—ऋ १०, १०२, ६ (ककर्दवे = शत्रूणा हिसनाय—सायण)। ककजाकृता-अ वे ११, १०, २५, ककरघाट—सुश्रु २, २५१, १४, ककर०—वा स २४, २०।

√ककधातोरुपोत्तमे रेफे सति लौल्यार्थक √कर्क् १/४०९ c काकृ-धातुनिष्पद्यते। पुन स एव सयोगे गुरुत्वात् ककारता प्राप्तो रकार पालिप्राकृतवत्—४०९ b कक्क, इत्येतेषामस्ति कश्चन विकाससम्बन्ध। हसन चापल्यमेवाङ्गस्य-(मुखस्य) इति स एव √कक्क् धातु काशकृत्स्नीयो लौल्यार्थकोऽन्त्ये बलाघाते सति हसनार्थक √कक्ख् सवृत्तो मैत्रेयेण (१/११९) पठित। इत्थमेष √कक् १/८७ वेदप्रयुक्तो धातुरेतज्जातीयकाना हसनार्थकाना समग्राणा धातूना मूलाधार। नन्वय विकासो विलोमोऽपि भवितुमर्हतीति चेन्न, √घग्घ् √गग्घ् √खक्ख् √कख् इति धातूना वेदे तदनुवर्ति साहित्ये वा प्रयोगानुपलम्भात्। √कक् धातोस्तु तथा सत्त्वात् तत एव विकास आस्थेय।

+√कक्ख् (कक्ख) १/११९ हसने (प) मै।
क्षी-सा श-जै-काकृ कात ×
मै-च-शा-हे।
हासे—वो।

√कक् (कक) १/८७ लौल्ये (आ)।
√कर्क् १/४०९ c लौल्ये (आ) काकृ।
√कर्क् हासे—सो धा—वो।
√कक्क् १/४०९ b लौल्ये (आ) काकृ।

√कक्क १/३७b हसने (प) कात।
√खक्ख् (खक्ख) १/१२० हसने (प) क्षी।
√खर्ख् (खर्ख) १/१७० हसने (प) क्षी।
√कग् (कगे) १/५१७ हसने (प) कात।

क—ख ख—शब्दात्मकोऽय हसने (समीचीनतरम्-हह, हु अथवा क्स्)। अर्मे क्सक्सक्क, पु च स्ला छोछोतति=हसने, लिथु किक्नोति=अट्टहासे, उपहासे। पु उ ज हुआँहोन=उपहासे-वा पॉकर्नी।

[ग—"कक्खट कठिन क्रूरम्" (अ को ३/७६)-√कक्ख्+अटन्। हासा भवन्ति विविधा। राक्षसादीनामट्टहासेन क्रूरताभिव्यज्यते। अतस्ते कक्खटा कर्कशा।]

घ—कक्खळ (<कक्खट)। कक्खळता=कठोरता—धम्मसगणि ८५९, विभग ८७।

ङ—√खिख (अक)=खिखिं-शब्दे। खिखेइ-सुख ७, ३३।
विशेष √खक्ख् धातौ द्रष्टव्य।

+√कख् (कखे) १/७७८ हसने (प)।
श× क्षी मै-सा च-जै-काकृ-शा हे।
हासे—वो। पूर्ववत्।
(कात√कग् [कगे]) हसने— कात।
√कख् (कख) इत्यतिरिक्त सायणीय पाठ—११७।

क—पूर्ववत्। लिथु किकेन्ति, किक्नोति=अट्टहासे। लैति चछिन्नरे, इँग्लि कस्क्ल—जू पॉकर्नी।

ग—किखि=लोमश-भोजीयोणादौ (स क २/१/१६६), त्रिका ७, ५, ७।
ग—किखि'=लोमासका, हेमोणादौ (६/७६ सू)।
ग—किखी=अपचितपरिमाण शृगाल—इति हरदत्त (पदमञ्जरी ७/१/६)।
शब्दानुकृति।

८

ङ—पूर्वधातुर्विलोकनीय ।

ज—किकि=ह्वेषायाम् (ब हिन्हा)। तुलनीय—किखि, किखी (ग—कोष्ठे)।

+√कग् (कगे) १/७८५ नोच्यते (प)।
श-च-जै-शा-हे× क्षी मै-सा-कात।
गतौ—काकृ।
क्रियासु—वो।

अस्यायमर्थ इति नोच्यते, अनेकार्थत्वात्-क्षी। 'नोच्यते' इति योऽर्थस्तत्रार्थे कगिरित्येके-क्षी। अस्यायमर्थ इति नोच्यते-मै=क्रियासामान्यमर्थ इत्यर्थ -सा। "इह शास्त्रे कगे नोच्यते" इत्येके-सा ७७९।

अय धातु क्रियासामान्यार्थक सकलानर्थानभिधातुमर्हति। √कृ (डुकृञ्) धातोरप्यस्ति क्रियासामान्यार्थवाचकता-(वाक्यपदीये, उपग्रहे प्रकीर्णटीकाया १४) तन्नेवाभिव्यनक्ति वोपदेव 'क्रियासु' इत्यर्थमास्थाप्य। दुर्गादासस्तु तट्टीकाया क्रियामात्रे-कगति="लोको गच्छति" इति प्रत्यपादयत् (श क द्रु), काशकृत्स्नोऽपि तथा। एव सत्यपि नैतस्य प्रयोगोपलब्धि क्वापि मन्मार्गिता। कातन्त्रे एष हसनार्थकोऽपि १/५१७। नूनमेष हसनार्थकै √कक्क् √कक्ख् √खक्ख् √गग्घ् प्रभृतिभिर्धातुभि सम्बध्नाति तत्सक्रान्त ।

+√कङ्क् (ककि) १/९१ गत्यर्थ (आ)
श× क्षी मै-सा-च-कात।
गतौ—जै का-काकृ-शा हे।
व्रजने—वो।

√कक् (कक) १/८७
लौल्ये (आ)।
√कन् (कनी) १/४५८
दीप्तिकान्तिगतिषु (प)।
√कङ्ख् १/४६० ते
चलने (आ) काकृ।
√खिङ्ख् १/४१७ ते
गतौ (आ) काकृ।

क—केक्=दहने, शुष्कतायाम् (यथा-कङ्काल)। क्राक् (अथवा-कौंक्?), नासिक्यम्-कंक्=शाखा-वा पोंकर्नी ।

ग—कङ्कत०-ऋ १,१९१,१। (कङ्क+बाहुलकादतच्), (२) अ वे १४,२,६८। कङ्कतान्-वा रा २,९१,७७=केशमार्जनानि (तिल), कर्णाभ्या ते कङ्कुषेभ्य कर्ण-

शूल विशल्यकम्-अ वे ९,८,२, कङ्कवासस-वा रा ६,११,६३, तरक्षव कङ्का-वा रा ३,४६,३०।

[ कङ्कश्छद्मद्विजे ख्यातो लौहपृष्ठकृतान्तयो ॥ मेदि के १९।

=(कङ्कते=उद्गच्छति, कङ्क=पक्षिविशेष।)] कङ्कट-(√कङ्क्+शकाद्यटन्)-वर्मसन्धिषु-वा रा ५,८०,३२, कङ्कचित्-शब्रा ६,७,२,८, कङ्का=गोशीर्षम्-भा पु ९,२४,२४, (कङ्कते=चापल्य गच्छति या पित्रायादरवशात्-√कङ्क्+अच्)=उग्रसेनराजकन्या, वसुदेवानुजपत्नी-भा पु ९,२४,२५, गज कङ्कणभूषण-मभार ३,१५७/२७।

ठ—{कगाल / कग} (<कङ्कट)=कवच (डिंग)।

छ—कगन, कँगना, ककना†(<कङ्कणम्)।

छ—खख (<कङ्क)=रिक्तम्।

ठ—{कगाल / खक†} (<कङ्काल)=बुभुक्षित, दुर्बल।

| | | |
|---|---|---|
| +√कच्(कच) १/१६६ शX | बन्धने (आ) क्षी-मै-सा-च जै काकृ शा-हे बन्धत्विषो—वो। शब्दे (प)-क्षी। | √कच्(कच) शब्द उदात्तेत् (प) क्षी। √खच्(खच) इति लौकिकोऽप्यस्ति-क्षी। |
| कात-√कञ्च्[कचि] | बन्धने—कात। | √कञ्च् (कचि) १/१६७ दीप्तिबन्धनयो (आ)। √खच (खच)१०/३८४ बन्धने (प)। |

क—केक्=बन्धने-वा पॉकर्नी।

ग—कचेषु च निगृह्यैतान्-मभार १,४९८२, कचग्रहै-रघु १०,४८, १९,३१।

घ—कच (सज्ञा)-दाठावस ४, ५१।

(छ—√कचोना=कोषणे, प्रवेशे)।

ज—√कच्-कच्=पीडायाम्, (२) ऊर्णाशणयो साधने (शोधने)।

| | | |
|---|---|---|
| +√कच्(कच) १/१६७ | दीप्तिबन्धनयो (आ) इत्येके-क्षी। | √कञ्च् (कचि) दीप्तिबन्धनयो (आ)। |
| मै श च जै-काकृ कात-शा-हे | क्षी सा। बन्धत्विषो'—वो | |

क—पूर्ववत्।

ग—काचानावयन्ति-शब्रा १३,७,६,८, काचस्फटिकपात्रेषु (√कच् दीप्तौ+घञ्)-सुश्रु १,७४०,१६।

+√कज् (कज) १/७७७ मदे (प)
मै-श-च-जै काक कात क्षी सा।
शा-हे-वो×

√खज् (खज) १/७७८ मन्थे (प)।
√गज् (गज) १/७४९ मदने, च=शब्दार्थे (प)।
√कड् (कड) १/३५५ मदे (प)।
√कण्ड् (कडि) १/३५५ मदे (प)।
√कञ्ज् १/३१३ d हिंसागत्यो (प) काक।
√कर्ज (कर्ज) १/७७३ व्यथने (प)।

ग—कजिङ्ग० (im Ind कजिङ्ग०) M Pl N eines volkes VP 196, N 163 (व्योथ-रॉथ)।

+√कञ्च् (कचि १/१६७ दीप्तिबन्धनयोः (आ)
श×
क्षी-मै-सा।
दीप्तौ—च-काक कात।
बन्धने दीप्तौ च—जै शा हे।
बन्धत्विषो'—वो।

>√कच् (कच) दीप्ति बन्धनयो (आ) इत्येके-क्षी।
√कन् (कनी) १/४५४ दीप्तिकान्तिषु (प)
√कञ्च् नहे—सौ धा—वो।

क—केक्=वेष्टने-वा पॉकर्नी।

ग—कञ्चुकोष्णीषिणस्तत्र-वा रा ६,९९,७३, विनैव कञ्चुलिकया धत्से मनाहारिणीं लक्ष्मीम्-अमरु २३,।

ठ—√कॉछना (<कञ्चनम्)=बन्धने।

ज—√काजु=गर्तपतने, जालबन्धे।

+√कट् (कटे) १/७९१ श
वर्षावरणयो (प)
क्षी-मै सा-जै-काकृ-कात-शा हे।
√चट् (चटे) १/७९१ वर्षावरणयो (प) सा।
√कट् (कटी) १/३१७ गतौ (प)।
कृत् (कृती) ७/१० वेष्टने (प)।
वरणे—च।
वृतौ वृषि—वो।
√कट्ट्=राशौ, (७)
√भूद्वारके आवरणे—मॉनियर-विलियम।

क—कॆट्, कॆराट्=वेष्टने—वा पॉकर्नी।

ग—काटे निबाळ्ह ऋषिरह्व दूतये-ऋ स १७,२४,६ =कूप-निघण्टौ ३/२३ (कट्यते=आव्रियते जलार्थिभि-दुर्गाचा)। कत् > काट इति प्राकृतरूपम्-ब्योथ-रॉथ। वर्षासु क्लिन्नकटवत्तिष्ठन्-मभार ७,१९७३। बद्धकूटाम्-वा रा ७,६,७१=बद्धकवाटाम्। छान्दसो वर्णलोप।—यद्वा बृहच्छदिषम्। बद्ध कटो वर्षावारको यस्यामित्यर्थात् (तिल)। कटिश्च तस्यातिकृतप्रमाणा-मभार ३,१००५४, कटीदेशे-मभार १,६७९३। कट (कटति=मदवारि वर्षति य)=हस्तिगण्डस्थलम्-रघु ७,३७। कट्वर, कट्वरी (उ ३/१) > कढी (हि)—

दध्न ससारकस्यात्र तक्र कट्वरमुच्यते। वैद्य (श क द्रु)

कट्वराणि-सुश्रु १,७४०, १३, कटु (कटति=तीक्ष्णतया रसना मुख वावृणोति-उ १/९)-मभार १,७,१६, भा पु ३,७६,४७, कटोरा (कट्यते=वृष्यते=दीयते स्थाप्यते वा भक्ष्यद्रव्यादिकमस्याम्—√कट्+ओलच्। लस्य रत्वम्)=स्वनामख्यातपात्रम्—ब्र वै पु (श क द्रु)। शब्दे शब्दानुकृतिर्नाम धातु—कटकटाय्य-वा रा ७,३५,१।=कटकटाशब्दवत कृत्वा (तिल)।

घ—कटकटायति=निष्पीडने, चूर्णे, नाशे-विसुद्धिमग्ग ७६४।

+√कट् (कटी) १/३१७ मै-श काकृ कात × (मै-कात-हे-वो-√कट् [कट]) ३१९
गतौ (प)। क्षी-सा च जै-शा-हे। गत्याम्—वो। गतो (प) मै। मै कात-हे। गत्याम्—वो।
>√कण्ट् (कटि) गतौ—अन्ये इदितमेनमाहु—क्षी। विकटो विक्रान्तगतिरित्यौपमन्यव—(निरु ६/३०)।

बु ख—छ—√कड़ना-(<कटनम्)=गमने, निर्गमने।

ज—√काटाओ=हस्तपादक्षेपणे।

+√कठ् (कठ) १/३३१ श

कृच्छ्रजीवने (प)। क्षी-मै-सा-च काकृ-कात शा- हे। कृच्छ्रजीवे—जै। तङ्कने—वो।

√कट् (कटे) १/ वर्षावरणयो (प)। √कण्ठ् (कठि) १/ शोके (आ)।

क—कर्-, द्वित्वे सति—कर्कर्=कठोरम्। केर्ट्=बन्धने, दाढर्ये-वा पॉकर्नी।

ग—कठिनम् (√कठ्+उणा २/४९ इनच्)-वा रा ७, ४०, १५, ७, ५५, १७=खनित्रम् (तिल)।

[ कठमर्द (<कठमुल्ला हि)—(कठम् =कष्टजीवन मृद्नाति इति √कठ+ √मृद्+अण्)=शिव इति त्रिकाण्डशेष। महाराज-शब्दादिवदय विपरीतार्थं भेजे हिन्द्याम्। "कठो मुनौ तदाख्यातवेदाध्येतृज्ञयो स्वरे"–त्रिकाण्डशेष —७, ७, ७। ]

छ—कठमुल्ला (<कठमर्द ? कठम् =कष्टजीवन मृद्नातीति, कठ+ √मृद्+अण्)=शिव।

ज—√कठुआओ=शीतकठोरतायाम्।

+√कड् (कड) १/३५५ शा हे वो×, श

मदे (प) इति दुर्ग-क्षी क्षी-मै सा-च-जै काकृ-कात।

<√कण्ड् (कडि) मदे (प)। √गड् १/ सेचने (प)। √कट् (कटे) १/ वर्षावरणयो (प)। कटस्य = हस्तिगण्डस्थलस्य मदवर्षकत्वाल्लक्षणया कटोऽपि मद — कट>√कड्। √कल् १/ शब्दसख्यानयो (आ)। √कज् (कज) १/ मदे (प)। √गज् (गज) १/ मदने (प)। √कडम्ब् १/७०६ cc मर्दने (प) काकृ।

क—कॆल्=उच्चैर्गमने, कॆला=ताडने। ड्-विस्तार'-वा पॉकर्नी'।

[ ग—कड (>कडा-हि ?) [ कडति=माद्यति इति । √कड्+पचाद्यच् =मूर्ख—हलायुध । कडम्ब=नालीशाक (अ को २, ९, ३५)। कडम्ब-उ ४/८२-इत्यम्बच । काशकृत्स्ने-√कडम्ब् १/२०६०० मर्दने (प)। कडार-"गडे कड च"—दशो ८/६५। कलत्रम्—गडेरादेश्च क-उ ३/१०६। √गड् धातोरेव सिद्धे √गड् सेचने धातोर्गकारस्य ककारे को हेतु ? नार्थाधारका ह्यत्र सर्वत्र व्युत्पत्तय । मद सेचनेऽपि वर्तते वर्षकत्वादित्यर्थसमानतापि विद्यते । पर्यन्ते, एतयोर्मिथो विकसन-सम्बन्ध सुतरा सिद्ध्यति ]।

यथा कडा (काण्व-कला) अवदन्तो वाचा-शन्ना १४, ९, २, ८।

छ—√अकड़ना (<आकडनम्)=गर्वे।

उ—अकड (<आ+√कड्)=गर्व, दर्प, (२) धृष्टता, (३) आग्रह ।

| | | |
|---|---|---|
| +√कड् (कड) ६/१०० च×श | घसने (प)। (यु मी स एव)। मदे— क्षी-मै-सा-जै-काकृ कात-शा हे। अदने दर्पे च—वो। | √कट् (कटी) १/ गतौ (प)। √कुड् ६/ घसने बाल्ये च (प) जै-कात-शा-हे। √कुड् ६/९७ घसने (प) काकृ। √कूड् ६/ घसने इत्येके (प) सा। |

कुटादौ फलाभावाद् यूथभ्रष्टोऽयम्-क्षी।

कुटादिभ्योऽन्यत्र शक्यते पठितुम्। अय भ्वादौ च। पुन पाठफलमुञ्छति-वत्-सा ९८। प्रयोगादर्शनात् शीनद्योर्नुम्विकल्पार्थं स्वरार्थश्च पाठो विचिकित्स्य ।

ग—कडङ्करीये (=बुसार्हैर्महिषादिभि )-रघु ५, ९।

| | | |
|---|---|---|
| +√कड्ड् (कड्ड) १/३५५ श× | कार्कश्ये (प)। क्षी-मै सा-च-जै-काकृ कात शा हे-वो। | √कड् (कड) १/ मदे (प)। |
| (कदुड) | इत्येके (यु मी स एव)। | √कठ् (कठ) १/ कृच्छ्र-जीवने (प)। |
| √कड्ड् (कड्ड) १/३५१ | अभियोगे (प) मै। | √कल्ल् (कल्ल) १/ अशब्दे (आ)। |

छ—अकडना (<आकड्डनम्)=दृढीभावे, वक्रीभावे।

छ—कडा=कठोरम्, कर्कशम्।

छ—कर्रा (बु ख)=कठोरम्।

| | | |
|---|---|---|
| +√कण् (कण) १/४४१ श× | शब्दार्थ (प)। क्षी मै सा-च। | √कल (कल) १/ शब्द-सख्यानयोः (आ)। |

शब्दे—जै-काक्ष-कात-शा-हे । √कल्ल (कल्ल) १/ अशब्दे (आ)।

आर्त्तस्वरे—वो । √कण् (कण) १/४४२ शब्दार्थ (प)।

√अण (अण) १/ शब्दार्थ (प)।

√घण् १/२०७ u शब्दे, घण्टानादे (प) काक्ष।

√घण् १/२०७ JJ शब्दे, घण्टानादे (प) काक्ष।

ग—कणति शब्दाणूभावे भाष्यते ऽनुकणतीति वा-निरु ६/३०। कण्वतमो नाम गृणाति नृणाम्-ऋ स १, ४, ३, ४ ( कणति=स्तोत्रलक्षण शब्द करोति, कण्यते स्तूयते वा-दुर्गाचार्य )-निघ ३/१५।

ङ—√कण (सक)=शब्दे। वक्क-कणत-सुर १०, २१८, वज्जा ६६।

ङ—√कणकण=कणकणशब्दे-(आवम)-शब्दानुकृति।

ङ—कणकणकण=कणकणशब्दे। कणकण कणति-पउम २६, ५३।

छ—कडकड़ाना=शब्दे।

+√कण् (कण) १/७८८ श× गतौ (प) मित्त्वम् क्षी-मै-सा-च-जै काक्ष कात-शा-हे-वो। √कट् (कटी) १/ गतौ (प)।

√कण्ट् (कटि) १/ गतौ (प)।

√कन् (कनी) १/ दीप्ति-कान्तिगतिषु (प)।

√कर्ब् (कर्ब) १/गतौ (प)।

√कल (कल) १०/ गतौ सख्याने च (प)।

क—कॅन्ऱ्=उच्चैर्गमने-वा पॉकर्नी।

ग—अकणीत्-महाभाष्ये ७,२,३ २८०,[१६] (कणति=अतिसूक्ष्मत्व गच्छति। पचाद्यच्) कण (=धान्याश)-मनु ११,९२, कणूकयन्तीर्नृमेध'-ऋ १०,१३२,७।

छ—कनूका (बु. ख)=कणिका।

| | | |
|---|---|---|
| +√कण्ट् (कटि) १/३१७ श-च-जै-काकृ-कात शा× | गतौ (प)-अन्ये इदि-तमेनमाहु —क्षी। क्षी-मै-सा हे। गत्याम्—वो। | <√कट् (कटी) गतौ (प)। √कण् (कण) १/७८८ गतौ (प)। √कन् (कनी) १/ दीप्ति-कान्तिगतिषु (प)। √कण्ट् १/१०० वेदना-याम् (प) काकृ। कण्टति (निघण्टौ) २/१४ गतिकर्मा। |

क—स्केर्, केर्=कर्तने। स्केरे-ट् (*कृन्तक-)-स कण्टक-वा पॉकर्नी।

ग—कण्टक कन्तपो वा, कृन्ततेर्वा, कण्टतेर्वा स्यादु गतिकर्मण-निरु ९/३२, अकण्टका वृक्षाश्चौषधयश्च-अ कौशि ८३, कात्या श्रौ २२,३,२२, मृद्नन्ती कुशकण्टकान्-वा रा २,२७,७। कण्टक (=सूच्यग्रम्, क्षुद्रशत्रु)-मनु ९,२५२, वि पु १,१९,३१।

ड—कटग (<कण्टक)=सूच्यग्रम् (कस), रोमोद्गम -(गा ६७)। सूच्यग्रभाग सर्वत्र गच्छति (प्रविशति) इत्यय गतिकर्मा।

| | | |
|---|---|---|
| +√कण्ठ् (कठि) १/२६१ श | शोके (आ) क्षी-मै-सा-च जै-काकृ-कात-शा-हे। आध्याने—वो। | √कठ् (कठ) १/कृच्छ्र-जीवने (प)। √कण्ट् (कटि) १/ गतौ (प)। √कण्ठ् (कठि) १०/ शोके (प) आधृषाद्वा। √कण्ठ् (कठि) १/१४६ गिळने (प) काकृ। |

शोक[१] = आध्यानम्-क्षी।

आध्यानम् = उत्कण्ठापूर्वक स्मरणम्।

ग—उत्कण्ठितुम्-वा रा २,५३,२। =नगरादि स्मर्तुम् (तिल)। चेत समुत्कण्ठते-का प्र १,१।

[उणादौ 'कण्ठ'-शब्द √कण् शब्दार्थकधातुतो व्युत्पाद्यते-'कणेष्ठ' १/१०३। अय शब्द शोके सक्रान्त स्यात् कालक्रमेण। शोकेऽपि क्रन्दनादिध्वनिर्भवत्येव। अत्र शोकपदेन क्रन्दनादिव्यापाराणा सूक्ष्मतमो व्यापारोऽभिप्रेयते। ध्वनौ कण्ठशब्दो यथा—

कण्ठो गले सन्निधाने ध्वनौ मदनपादपे॥ विश्वः।

ध्वनियन्त्रस्य बहिर्भागाभिप्रायेण होमकुण्डाद् बहिरङ्गुलिपरिमितस्थानार्थक एष जात –"खाताद् बाह्येऽङ्गुल कण्ठ"–इति तिथ्यादितत्त्वम् >कॉठा (हि)। गलस्य मुखसामीप्यादेष सामीप्यार्थको जात, ध्वनियन्त्राकृतेन शब्दार्थक, स्मराशयेन च मदनपादपार्थक ।]

ङ—कठ=गले (कुमा), (२) समीपे, (३) अञ्चले (दे २,१८)।

ङ—कटी=उपकण्ठे, कण्ठिकायाम्, पर्वतसमीपवर्तिन्या भूमौ (उपत्यकायाम्)–गउड ।

छ—कटीर*(<कण्ठीरव)=सिंह (डिंग)।

+√कण्ड् (कडि) १/२०८ मदे (आ) >√कड् (कड) मदे (आ)
सा×,श क्षी-मै-च-जै-काकृ इति दुर्ग—क्षी।
कात-शा-हे। √गण्ड् (गडि) १/वद-
दर्पे—वो। नैकदेशे (प)।

√कण्ड् (कण्ड) १/७७९ मदे—सा।

क—(स) केल्=खण्डने (स कण्डु)–वा पॉकर्नी ।

ग—कण्डुर्नामर्षिविशेष –विष्णुपु १,१५,११।

मदस्थान गण्डस्थलम्। तात्स्थ्याद् गण्डोऽपि मदे। √गण्ड><√कण्ड् इति विकास । उणादौ—कण्डु प्रयोग (कण्डते=शरीर माद्यति, अस्मादुष्णशोणित त्वात्। यद्वा कण्डयति=कण्डयुक्त करोति शरीरम्। √कण्ड्+उणा १/३८ इति कु)]।

छ—√कल्लाना (<कण्डनम्–श्लेपने)=चपेटाहतिवत् सदाहपीडायाम्, (२) असह्यभावे।

+√कण्ड (कडि) १/३५५ मदे (प) >√कड् (कड) मदे (प)
मै-श-च जै क्षी-सा-शा हे। इति दुर्ग-क्षी।
काकृ-कात× दर्पे—वो। √कण्ड् १/१७७ मासपृथुळे
(प) काकृ।
√काण्ड् १/१७८ परिच्छेदे
(प) काकृ।
√गण्ड् (गडि) १/३५६
वदनैकदेशे (प)।

पूर्वधातोरेवाय प्रपञ्च । सर्वे वैयाकरणा मैत्रेयादयो नेहैकमत्य भजन्ते। परस्मैपदाय निमित्ताय पृथक् कृत स्यात् तदपि न हृदयावर्जकम्, उभयपदस्य विधानीयत्वात्।

√कत्थ् (कत्थ) १/३६ श्लाघायाम् ( आ ) √कथ ( कथ ) १०/२९७ वाक्यप्रतिबन्धे ( प )।

शX क्षी मै-सा-च-जै-काकृ-कात-शा-हे। श्लाघे—वो। विकत्थने—ह्वि। कथ्यते>कत्थते ?-इति वागीश। ड-कत्थ(<कथ्य)-(ठा ४,४-पत्र २८७)।

नामधातुरय प्राकृतस्वरूप॰, परन्तु मूलशब्दव्युत्पत्तिरस्पष्टा-ह्वि।

क—केत्- (?), कोत्-, कूत्=गल्पे, प्रलापे। लिथु कतिलिन्ति= सभाषणे, प्रलापे, गल्पे-वा पॉकर्नी।

ग—कत्थनम्-१ योत ३०, १ सन्या २,८६। कत्थसे यच्च वीर्येण रामम्-वा रा ३,५५,८। कत्थयन् कत्थसे च यौ-मभार १६, १५८, कत्थेथा -मभार १,५९९५, वा रा ६, ३६,७३,।

घ—√कत्थ् ( कत्थ ) सिलाघाय-धा पा १२८, धा म १८२, सद्दनी ४१९, कत्थति-सुत्तनिपात ७८३।

√कद् (कद) १/५६५ मै-श-च-जै-काकृ-कात शाX वैक्लव्ये ( आ ) इति नन्दी-क्षी। क्षी-सा-हे-वो। नाशे ( वधे )-ह्वि। <√कन्द् ( कदि ) वैक्लव्ये ( आ )।

क—कद्, काद्=वञ्चने, लोपे-वा पॉकर्नी॰।

ग—कदनम्-मभार ७,१,७५ =पीडनम् ( नील ), वा रा ६,२८,२०= मर्द। कदनम्-भा पु ७,९,१६=पापम्, भा पु ७,२,१३=युद्धम्। कदनम्-भूरिप्रयोग, जटाधरश्च=मारणम् ( श क द्रु )।

√कन ( कनी ) १/४५४ दीप्तिकान्तिगतिषु ( प )।
शX क्षी-मै-सा जै-कात शा-हे। दीप्तौ—च। व्याप्तिकान्तिगतिषु—काकृ। श्रीगतिद्युतौ—वो।

√कन् ८/१९ शोभायाम् ( उ ) काकृ।
√कम् ( कमु ) १/ कान्तौ ( आ )।
√कञ्च् ( कचि ) १/ दीप्तिबन्धनयो ( आ )।
√चन्द् ( चदि ) १/ ह्लादने दीप्तौ च ( प )।
√कनति, चाकनत्, कानिषत् ( निघण्टौ २/६ ) कान्तिकर्मा।

क—कॆ‌न्=पलायने, मुक्तौ, प्रक्रमे।

ख—कइन्या=कन्या, कइनी, कइनीन=कनीन-( कानीन- )-वा पॉकर्नी।

ग—अकानिष पुनर्येन्-ऋ ४,२९,९, तृतीये सवने हि कानिष. पुरोडाशम्-३,२८,५। सद्यो हि जातो वृषभ कनीन-ऋ ४,४८,१।

नूनमत्र√कम् (कमु) कान्तौ इति धातो सक्रान्ति.। तथाहि निरुक्ते—कनीनके कन्यके। कन्या कमनीया भवति। क्वेय नेतव्येति वा। कमनेनानीयत इति वा। कनतेर्वा स्यात् कान्तिकर्मण-४/१५। जनिष्ट योषा पतयन् कनीनिका-ऋ १०,४०, ९।

+√कद् (कदि) १/६७ शX

आह्वाने रोदने च (प) क्षी मै सा-कात। आह्वानरोदनयो—जै शा। रोदनाह्वानयो—हे। आह्वाने—च। रोदने आह्वाने—वो।

√कद् (कद) १/वैक्लव्ये (आ)। √कन्द् (कदि) १/वैक्लव्ये (आ)। √क्रद् (क्रद) १/वैक्लव्ये (आ)। √क्रन्द् (क्रदि) १/आह्वाने रोदने च (प)। √क्लद् (क्लद) १/वैक्लव्ये (आ)। √क्लन्द् (क्लदि) १। वैक्लव्ये (आ)। √स्कन्द् (स्कन्दिर् १/गतिशोषणयो (प)।

क—कॆ‌न्=दमने, निश्च्योतने। कॉन्दॉ( <स कन्द )। लिथु कन्दुऑलस्=कन्द, सार, मृद्वन्तर्भाग-वा पॉकर्नी।

ग—[ कन्द -( कन्दति-कन्दयति=जिह्वाया वैक्लव्य जनयति, रोदयति, वा भक्षयन्त जनम् )=सूरण—कन्दोऽस्त्री सूरणे शस्यमूले जलधरे पुमान्॥मेदि दे, ३। <कॉदा ( हि )] कन्दमूलफलाशिन.-मभार १३,७१२, प्राय कन्दुकपातेन पतन्नार्ये पतन्नपि-कुमा स ७,२९, कथास सा २०, २१३। गतिशोषणार्थकेन √स्कन्द् धातुनास्य सम्बन्धो ज्ञायते-कन्दु०—सुश्रु १,२३०, १७। स्कन्दे सलोपश्च-उणा १/१४।

घ—कन्दति-जातक ६,१६६।

ङ—कद्इ—पि २३१।

छ√कॉदना=रोदने—सदलमिश्रप्रयोग.।

+√कन्द् (कदि) १/७६५ वैक्लव्ये (आ)
श-जै काकृ×
क्षी मै सा च कात शा हे वो।

>√कद् (कद्) वैक्लव्ये (आ) इति नन्दी-क्षी।
पूर्ववत्।

पूर्वस्यैव धातो प्रपञ्चोऽयमात्मनेपदार्थ स्यात्।

+√कब् (कबृ) १/३७७ वर्णे (आ)
श×
क्षी मै सा-च-काकृ-कात-शा हे।
स्तुतौ वर्णे—वो।
जै-√कव् (कवृङ्) वर्णे—जै।
पवर्गादौ व्यवस्थापि तोऽय√कब् इत्येवावगन्तव्य।

√कव् १/ वर्णे (आ) वो।
क+√वृ ५/वरणे (उ)।
√कर्ब् (कर्ब) १/ गतौ (प)।
√कम्ब् १/ गतौ (प) वो।

वर्णनम् =वर्ण, शुक्लादिश्च-क्षी।

क—केर्बेरॉ = कर्बुरम्-वा पॉकर्नी।

ग—(ओदनस्य) कब्रु पलीकरणा शरोऽभ्रम्-अ वे ११,३,६, कबिल (√कब्+इलच्)=कपिलवर्ण -इति भरतो द्विरूपकोशश्च (श क द्रु.)। शबलार्थकेन कर्बुर-(कुमा स ४,२७)-शब्देनापि सम्बध्नात्यय धातु।√कब्, रेफोपान्त्यत्वात् √कर्ब् इति जात।

√कम् (कमु) १/४३६ कान्तो (आ)
श
क्षी मै सा च-जै काकृ कात शा-हे।
स्पृहि—वो।

√कन् (कनी) दीप्तिकान्तिगतिषु (प)।

न कम्यमिचमाम् १/८०३z।

श-जै-शा हे वो×

क—का = इच्छायाम्, कम्, काम् = इच्छायाम्। लेट्टि -कामेत् = बुभुक्षायाम्-जू पॉकर्नी।

ग—कामयते-ऋ ६,७५,६, मा २९,४३, अचीकमत-खि ५,७,४,१६, कामयन्तु-पै २,६२,२, कामयेत्-साब्रा २,६,६।

घ—कामेति-थेरगाथा १,६३।

ङ—√कम (सक) = इच्छायाम्। कवकृ-कम्ममाण-दे २, ८५। कृ-कमणीय-सुपा ३४, २६२।

√कम्प् (कपि) १/३७२ चलने ( आ )
श काक्र×
क्षी मै-सा च-जै-कात-शा-हे।
चाले—वो।
कम्पने—ह्वि ।

√कप् १/चलने (प)
सौ धा —वो।
√केप् ( केपृ ) १/ कम्पने गतौ च ( आ )।
√कम्प् १०/३५ c क्षान्तौ ( प ) काक्र।
√कम्ब् १/ गत्याम् (प) वो।
√कम्पते ( निघण्टौ २/१२ ) =कुध्यतिकर्मा।

क--कम्प्=न्युब्जीभावे, कौटिल्ये। लैति कम्पुस्=क्षेत्रम्, परिधि । लिथु कम्पस्=कोण । लेट्टि -कम्पिस्=घर्षणे, लिथु कुम्पि=न्युब्जीभावे, कौटिल्ये-वा पॉकर्नी ।

ग--कम्पते-षब्रा ५,१२, प्रश्नोप ५,६, ह १८, वा रा २,९७,२५=चलति, आगच्छति ( तिल ), कम्पति-षब्रा ५,७, कम्पन्-पै २,४५।

ङ--√कप ( अक )=कम्पने। वक्र-कपत, कपमाण ( महा, कप्प )।
छ--√कँपना
छ--√काँपना } =चलने, कम्पने, ( २ ) भये।

+√कर्ज् (कर्ज) १/२२३ व्यथने ( प )
श-च×
क्षी मै-सा-जै-कात-शा हे।
पीडे—वो।
काक्र-√तर्ज् व्यथने—काक्र। ( तर्ज )।

√कज् (कज) १/ मदे (प)।
√खज् (खज) १/ मन्थे (प)।
√खर्ज् ( खर्ज ) १/ व्यथने मार्जने च ( प )।

क—क्रॆग्( ज् )-( तथा-कॆर्ग्( ज्- ) ? )=यातनायाम् = ?, पु आइस् ह्रेक्ज=यातनायाम्-जू पॉकर्नी ।

+√कर्द् (कर्द) १/५७ कुत्सिते शब्दे ( प )
क्षी-मै-सा-च-जै काक्र-कात-शा हे।
कुत्सिते रवे—वो।

√गॄ ९/ शब्दे ( प )।
√गर्द् (गर्द) १/ शब्दे (प)।
√गर्द् १/३९४ c कुत्सिते शब्दे ( आ ) काक्र।
√शर्द् १/३९४ d कुत्सिते शब्दे ( आ ) काक्र।

कुत्सितशब्द॰ =इह कौक्ष॰-सा।

[–कर्दनम्–( कर्दते इति । √कर्द्+ल्युट् )=उदरशब्द —हेमचन्द्र १४०३। दर्कनम्>दॉकना, दलॉकना=गर्जने ( बु ख )। दर्कनम्>डकनम्>( डिक्कइ-प्रा धा ) डॉकना=गर्जने ( हि )। दर्कनम् >दकरना>डकरना>डकारना (हि ) =उदरशब्दे।>डकराना=गर्जने। ]

ग—रसाना कर्दमा नद्यो बभूवु–मभार १४,७६८३, कर्दम—कात्या श्रौ २५,८।

ड—कद्दम (<कर्दम )=कर्दम –( पण्ह १,४)–( २ ) देवविशेष, नागराज-विशेष –( भग ६,३ )।

| | | |
|---|---|---|
| +√कर्ब्( कर्ब ) १/४१३<br>श च× | गतौ ( प )<br>क्षी-मै-सा-जै-कात शा-हे-वो। | √कब् ( कब्र ) १/ वर्णे ( आ )।<br>√खर्ब् ( खर्ब ) १/ गतौ ( प )।<br>√गर्ब् ( गर्ब ) १/ गतौ ( प )।<br>√घर्ब् ( घर्ब ) १/ गतौ ( प )।<br>√कम्ब् ( कम्ब ) १/ गतौ ( प ) वो।<br>√गम्ब् ( गम्ब ) १/ गतौ ( प ) वो।<br>√घम्ब् ( घम्ब ) १/ गतौ ( प ) वो।<br>√कम्ब् १/२०६e मर्दने (प) काक। |
| ( काक—√कर्व्<br>[कर्व] ) | काक। | |

( क—केर्बेरॉ=शबलम्-वा पॉकर्नी )

ग—कर्बुर० (कर्बति=नानावर्णतां गच्छति। √कर्ब्+उणा १/४२ उरच्=किर्मीर०— कुमा स ४,२७। (रश्मय॰) सितासिता कर्बुनीला॰ कपिला पीतलोहिता –याज्ञ ३,१६६।

[ कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसो ।
कर्बुरा कृष्णवृन्तायां शबले पुनरन्यवत्॥ मेदि रे १२२ ]

कर्बूर =नदीनिष्पावधान्यम्–राजनिर्घण्ट ( श क द्रु )। कर्बूरा–सुश्रु १,४०,१२।

अस्य विकासक्रम॰–√कब् वर्णे>√कम्ब्>√कर्ब्। उपान्ते मकार-रकारागमबाहुल्यम्। द्दश्येयाताम्–√अर्ब् गतौ,√अम्ब् गतौ।

+√कर्व् ( कर्व ) १/५८१ दर्पे ( प )
क्षी श-जै× मै सा-च-कात-शा हे वो ।
( काकृ√कर्ब् [कर्ब] दर्पे—काकृ ।

कर्वतीतीदित्स्वपि पठ्यते-सा ५७३ ।

√गर्व् (गर्व) १/ दर्पे ( प )।
√खर्व् (खर्व) १/ दर्पे ( प )।
√कॄ ६/ विक्षेपे ( प )।
(किरति=विक्षिपति चित्त विषयेषु—
√कॄ+उणा १५५ व )
कर्व =काम ।
√कर्ब् ( कर्ब ) १/ गतौ ( प )।

[ कर्बुरम् (कर्वति=गर्वत्यस्मात्, यस्मिन् सति वा गर्वो भवति कर्वत्यनेन वा। √कर्व्+उणा १/४२ उरच्)=स्वर्णम्, धुस्तूरवृक्ष -अ को २,९,९४। ]

ग—कर्वट (√कर्व्+अटन्)=चतुश्शतग्रामसंग्रहस्थानम् इति सार सुन्दरी। तथाहि याज्ञवल्क्य —२,१६७, ( =देशभेद )-मभार २,३०,२०, कर्वर कथितो व्याघ्रे शिवायामपि कर्वरी—मेदि रे १२४।

+√कल् ( कल ) १/४९३ शब्दसंख्यानयो (आ)
श× क्षी मै-सा शा हे ।
संख्याने—च काकृ कात।
शब्दे—च ।
संख्यारुतो —वो ।
जै√कल्ल् (कल्लै) संख्याशब्दयो —जै ।
मुद्रणदोष √कल् इति भाव्यम्। प्रेरणे उत्पादे—ह्वि ।

√कृ ( डुकृञ् ) ८/ करणे ( उ )।
√कण् ( कण ) १/ शब्दार्थ ( प )।
√कल् १/२४६० धारणे (प) काकृ ।
√गण (गण) १०/ संख्याने ( प )।
√कड् (कड) १/ मदे (प)।
√गॄ ९/ शब्दे ( प )।

ग—कलये ( प्रे ) तैब्रा ३,४,१६,१। कालयते—ताब्रा ८,३,२, जैब्रा ४६। कला—शाआ ७,२१, तैआ १०,१,२, कलय—जैब्रा ४७, कलम्—वा रा २,७१,२७=अव्यक्तम् ( तिल ), कलकण्ठै—सार २२८ ५।

[ कला स्यान्मूलवृद्धौ शिल्पादावंशमात्रके।
षोडशांशे च चन्द्रस्य कलनाकालमानयो ॥ मेदि ले, ५।
कोलाहल कलकल ( =कलादपि कल )-अ को १,७,२५। ]

छ—√कलकना*=( <कलकल ) तारस्वरे, चीत्कारे।
ज—काक्ला=सम्भाषणे, ( २ )तारस्वरे, ( ३ ) शब्दने।

| | | |
|---|---|---|
| +√कल्ल् ( कल्ल ) १/४९४ श× | अशब्दे ( आ ) क्षी-हे वो। अव्यक्ते शब्दे— मै-सा-च काकृ-कात। अव्यक्तशब्दार्थे—हे। सख्याशब्दयो —जै। शब्दे—शा। कूजने शब्देऽशब्दे—वो। | √कल् (कल ) १/ शब्द-सख्यानयो ( आ )। √कल्ल् १/५४४dधारणे (प) काकृ। |

अशब्दे=तूष्णीम्भावे—क्षी।

नूनमय धातु √कल् १/शब्दसख्यानयो ( आ ) धातुतो विकास प्राप्त। धातोरन्त्यलकारे द्वित्वप्रवृत्ति साधारणी। समीक्ष्यन्ताम्—√तिल् १/ गतौ (प) —√तिल्ल् १/ गतौ ( प ), √भल् १/परिभाषणहिंसादानेषु( प ), √भल्ल् परिभाषणहिसादानेषु ( प ) प्रभृतय। √कल्ल् धातु कचित् प्रदेशविशेषेऽशब्दार्थको जात क्षी-हे-वो मतेन।

| | | |
|---|---|---|
| +√कव् ( कव ) १/७१९ मै-सा-श-च-जै-काकृ-कात-शा वो× | शब्दे ( प ) क्षी-हे। | >√कश् ( कश ) शब्दे ( प ) इति कौशिक —क्षी। √कु ( कुङ् ) १/ शब्दे ( आ )। √कु २/ शब्दे ( प )। √कु ६/ शब्दे ( आ )। √कू ( कूङ् ) ६/ शब्दे ( आ )। इत्येके—क्षी। √कव् १/ स्तुतौ वर्णे ( आ ) वो। |

अय धातु'√कु ( कुङ् ) १/९३७ इत्यस्यैव प्रपञ्च क्षीरहेमाभ्यामेवाङ्गीकृत।

| | | |
|---|---|---|
| +√कश् ( कश ) १/७१९ मै-श-च-जै काकृ-कात शा× | शब्दे ( प ) इति कौशिकः—क्षी क्षी-हे-वो। गतौ—इति कचित्पठ्यते सा। तत् "प्रतिष्कशश्च कशे" इत्यत्र वृत्तौ कश गति- | <√कव् (कव) शब्दे (प)। √कश् १/३७० दीप्तौ ( प ) काकृ। √कश् ( कश ) २/ गति शासनयो ( आ )। √कस् ( कसि ) २/ गति-शासनयो' ( आ )। |

| | |
|---|---|
| शासनयोरित्यादादिक-स्योपादानादनार्षमिव प्रतीयते—सा ७१२। | √कस् ( कस ) १/ गति शासनयो ( प ) मै। √कस् ( कस ) २/१४ (आ)। इत्येके क्षी। |

क—केक् = नकुल'–वा पॉकर्नी।

ग—रथीव कशयाश्वाॅ अभिक्षिपन्–ऋ ५,८३, ३। ( कशति = शब्दायते ताडयति वा। ताडयत्यनया वा ) = अश्वादेस्ताडनी–अ को २,१०,३१, मभार १,१७७, १०। भानुजिद्दीक्षित आदादिकेन भौवादिकेन चोभयथा√कश् धातुना 'कशा' शब्द साधयति। वस्तुतो लक्ष्य दृष्ट्वैव लक्षणे प्रवर्तन्ते लक्ष्यैकचक्षुष्का। लक्ष्यस्थले यादृशमर्थादिकमनुभवन्ति तादृश लक्षणस्थले निबध्नन्ति, वैयाकरणाना प्रयोगशरणत्वात्। ऋग्वेद प्रयुक्त-कशाशब्द निदिध्यासनेन केचन

प्राप्तापराधास्ताड्या स्यू रज्ज्वा वेणुदलेन च॥ मनु ८,२९९।

इति कशादण्डस्य शासने प्रयुज्यमानत्वात् √कश् धातो' शासनार्थ-कत्व मन्वते। केचिच्च तस्यास्फालनेन शब्दत्वात्√कश् धातो शब्दार्थ कत्वमामनन्ति। एव सत्यप्यस्य भ्वादिगणगतत्वमदादिगणगतत्व वा तावत् सन्दिग्ध यावत् प्रयोगोपलब्धिर्न जायते, भवेन्नामाय क्वचित् प्रदेशविशेषे प्रयुक्त-पूर्वोऽपि। केचन√कष् इत्यपि पठन्ति—जघ्नुर्दण्डकषाकुशै'–गोरामायणे–६,३७,४१। मैत्रेयस्तु√कस् १/७२२ इत्युल्लिलेख। इमे पाठभेदा सस्कृतभाषाया लोकप्रियता-मभिव्यञ्जन्ति।

| | |
|---|---|
| +√कश् ( कश ) २/१४ गतिशासनयो ( आ ) क्षी मै-सा-च जै-काकृ- सा। कात शा हे वो× इत्येके- ( छ ह ले। | <√कस् ( कसि ) गतिशासनयो ( आ )। पूर्ववत्। |

अन्ये तु व्याख्यान्तरेऽमु ( कसिम् ) तालव्यान्तमनिदित मन्यन्ते। तथा च "प्रतिष्कशश्च कशे." ( ६/१/१५२ ) इत्यत्र वृत्ति., 'कश गतिशासनयो.' इति सूत्रे सुधाकरश्च। पारायणिकैरयमिदिद् दन्त्यान्त्य उदाहारि। अन्यैस्तु "प्रतिष्कशश्च कशे:" ( ६/१/१५२ ) इति दर्शनात् तालव्यान्त । "घृतस्य धारा अभिचाकशीमि" इत्यत्र भट्टभास्करश्च कशेर्गतिकर्मणोर्यङ्लुकि रूपम्—सा २/१४। व्याख्याशेषः पूर्वधातौ द्रष्टव्य।

| | | |
|---|---|---|
| √कष् ( कष ) १/६७६ श× | हिसार्थ' ( प ) क्षी-मै सा कात। | √कृ ( कृञ् ) ५/ हिसायाम् ( उ )। |

हिंसायाम्—
च-जै काक्त-शा-हे।
वधे-वो।
कषणे, कोषणे—ह्वि।

√कृष् १/विलेखने (प)।
√कष् १/ ६७६ आदानसंवरणयो (उ) काक्त
√कष्ट् १/५९७ प्रतिघाते (आ) काक्त।
√खष (खष) १/ हिंसार्थ (प)।
√कह् १/३१६1 हिंसागत्यो (प) काक्त।
√कश् २/गतिशासनयो (प)।

अयमुभयपदीति चतुर्भुज जुमरौ—दुर्गादास।

क—कस् = कषणे, लुञ्चने-वा पॉकर्नी।

ग—अपाकषन्-शौ १०,७,२०, कषते-गोभ्रा १,३,२१, कषाम-मभार १२, १८०, १३ = नाशयाम (नील)। पामान कषमाणम्-छान्दो ४,१,८, छदहेम कषन्निवालसत्-नैषध २,६९।

ङ—√कस (सक) = हिंसायाम्, (२) कोषणे, घर्षणे, (३) मालिन्ये। कसति (पण्ण १३)।

छ—√कसना<br>√किसना (बु ख) } = कषणे।

ज—√खिसाओ = क्रोधे।

+√कस् (कस) १/७२२ गतिशासनयो (प) मै क्षी-सा-श-च जै काक्त- मै। कात शा हे-वो×

√कसति (निघण्टौ-२/१४) गतिकर्मा।
√कश् १/७१९ धातुर्द्रष्टव्यः।

√कश् १/७१९ धातोर्व्याख्यान पठनीयम्, √कस् (कस) २/१४ इत्यस्य च।

√कस् (कस) १/८४५ श×

गतौ (प)
क्षी-मै सा-च काक्त कात-शा-हे वो।
गमने—जै।

√कसति (निघण्टौ २/१४) गतिकर्मा।
√कह् १/३१६1(हिंसागत्यो (प) काक्त।

| | | |
|---|---|---|
| | विकसने—ह्वि । | √कस्त् १०/४५ आमोदे (प)काक्ष । |

[विपूर्वोऽय फुल्लीभावे। तथा च—फुल्लश्चैते विकसिते-अ को २,४,७–८।]

ग—उत्कसन्तु हृदयान्यूर्ध्वं प्राण उदीषतु-अ वे ११,९,२१ = विकसने। विकसन्—सुश्रु १,२४७,१२। चकास-नलोदये २,२ = शशुभे।

| | | |
|---|---|---|
| +√कस् ( कस ) २/१४<br><br>मै-श च-जै-काक्ष-<br>कात शा हे × | गतिशासनयो ( आ ) इत्येके-क्षी।<br>क्षी सा-वो।<br>गतिशासनयो -इत्यन्ये ( छ ह ले )।<br>गतौ शाते च—वो। | <√कस् ( कसि ) १/ गतिशासनयो ( आ )।<br>द्र √कश्।<br>√कस १/८४५ गतौ ( प )। |

ग—कसना-सुश्रु २,२१६,१३, २,२९८,१०। शेषः √कश् धातौ प्रेक्ष्य'। विकस्तम् ऋ १,१७७,२४ = शाते।

छ—√कसना }
छ—बु ख √गसना, √गसाना } = दृढीकरणे, शासने।
ज—√कसाओ = दृढीकरणे।

| | | |
|---|---|---|
| अ+√कह् ( कह ) १/३१६ 1<br>पा<br>णि<br>नी<br>य | हिंसागत्यो॰ ( प ) काक्ष ( छर्दने ? ) | √कष् ( कष ) १/ हिंसार्थ ( प )।<br>√कस् ( कस ) १/ गतौ ( प )।<br>√कस् ( कस ) १/ गतिशासनयो॰ (आ)। |

ग—कह कह—वप ३१२ ५ [ लोटि मपु ]।

| | | |
|---|---|---|
| +√कास् (कासि) १/६३७<br><br>√कास् ( कास ) | दीप्तौ ( आ ) अन्ये-सा सा।<br>अपरे—सा।<br>इमौ धातू पल्सुले-मतेन।<br>वस्तुत एनौ न स्त॰। | <√काश् ( काशृ ) दीप्तौ ( आ )। |

अत्र वा ग पल्सुले-महोदयो भ्रान्त । तथा हि-धातुवृत्तौ १/६३७—"काशृ गतिशासनयो -इत्यादादौ"-इति पाठे मुद्रणदोषः स्पष्ट'। तत्र √कश् ( कश ) गतिशासनयो इति भाव्यम्। इतोऽग्रे धातुवृत्तौ—"अन्ये दन्त्यान्त्यमिदित पठन्ति"। वा ग पल्सुले महाशयो मुद्रणदोषदुष्ट काश्टृ धातुमभिलक्ष्य दन्त्यान्तेदित्त्वेन

कासि √कास् इति निर्णीतवान्। परन्त्वत्र भाव्यम्—कसि √कस् इति। सोऽपि गतिशासनार्थको न तु दीप्त्यर्थक । यत "कस गतिशासनयो" इत्येव पाठ शुद्ध । तस्य च दन्त्यान्तेदितकलेवर कसि √कस् इत्येव स्यान्न तु कासि √कास् इति। अत्र काशृ दीप्तौ इति धातुव्याख्यानेऽस्य समुल्लेखस्तु ध्वनिसादृश्यदर्शनाय। ततोऽग्रे "अनिदितमित्यपरे"—इत्यनेन √कस् इति ग्राह्यम्, न तु √कास् इति। औपरिष्टौ धातू ब्योथ रॉथ-पत्सुले मतेन। एव ह्यनेकै सस्कर्तृभिर्भ्रान्त्या धातूपन्यासेनोत्तरोत्तर धातुपाठो वृद्धिं नीत । अतो वय निश्चेतु न पारयाम—कियन्तो धातव पाणिनेरिति।

√काङ्क्ष् (काक्षि) १/६५८ काङ्क्षायाम् (प) श
क्षी मै सा-च-जै-काक्र-कात-शा हे।
काङ्क्षणे—वो।

√कन् (कनी) १/ दीप्तिकान्तिगतिषु (प)।
√कम् (कमु) १/ कान्तौ (आ)।
√जाङ्क्ष् १/२८३० काङ्क्षायाम (प) काक्र।

क—कँक्=(दाहे, शुष्कतायाम्), बुभुक्षायाम्। लिथु ककिन्ति=यातनायाम्, कँक्ति=हानौ-जू पॉकर्नी ।

ग—काङ्क्षति-नाद ४२, [काङ्क्षते इति अड्या] महा २, ६०, गी ५,३, १२,१७। काङ्क्षाम-वा रा ४,४७, १८, काङ्क्षते-मण्डलब्राह्मणोप २,४,२, काङ्क्षे-गी १,३२, आकाङ्क्षमाणा-वा रा २,६,१९, काङ्क्षन्ते-१ योत ६१।

घ—कखति-दीघ १,१०६=सदेहे । कखा (<काङ्क्षा) =सुत्तनिपात—५४१,११४९।

ज—काकि = नयनमेक निमील्य दर्शने।

+√काञ्च् (काचि) १/१६८ दीप्तिबन्धनयो (आ) क्षी मै-श-च-जै-काक्र-सा।
कात-शा-हे-वो×

√कञ्च् (कचि) १/ दीप्तिबन्धनयो (आ)।
√कच् (कँच) १/बन्धने(आ)।

ग—काञ्चनम् (काञ्चते=दीप्यते इति+ल्यु) मनु २,२३९=स्वर्णम्।
छ—√कॉछना=बन्धने।

√काश् (काशृ) १/६३९ दीप्तौ (आ) श-कात×
क्षी मै-सा च-जै-काक्र-शा हे।
द्युतौ—वो।
प्रकाशने—ह्वि।

√कश् १/३७० दीप्तौ (प) काक्र—चाकश्यन्ते-शब्रा २,३,२,१३।
√कास् (कासृ) १/ शब्दकुत्सायाम् (आ)।

√चकास् (चकासृ)२/दीप्तौ (प)।
√कास्( कासृ )१/ दीप्तौ
( आ ) सा।

क—क् उएकु -,क् उओकु -,उएकु स् = दर्शने, प्रकाशने।

ख—न पर्सि आगाह = ज्ञातम्, प्रसिद्धम्। निगाह–जू पॉकर्नी।

ग—आप इव काशिना सगृभीता–ऋ ७, १०४,८, काशते–नृउ ७,५, ससा १,२८। वदनानि चकाशिरे–वा रा ३,५५,२५, प्रसुप्ता सम्प्रकाशते–वा रा ५,१०,३७।

ज—√काजि ( बेङ्गा ) = प्रकाशने।

+√काश् (काशृ) ४/५१ दीप्तौ ( आ ) पूर्ववत्।
काकृ कात ×, श क्षी-मै-सा-च-जै-शा-हे।
द्युतौ–वो।
√काश् ( काश ) दीप्तौ–इत्येके—क्षी।

ग—काशते–ससा १,२८, ( काश्यते इति निसा मुपा यनि सुशोध' ( तु अङ्ख्या, वैतु आन 'प्रकाशते' इति। )

√कास् (कासृ) १/६१६ शब्दकुत्सायाम् ( आ )
श क्षी-मै-सा-जै काकृ-
कात-शा-हे।
शब्दे—च।
कुशब्दे—वो।
कफे—ह्वि।

√कश् (कश) १/ शब्दे (प)।
√कस् ( कस ) १/ गति-
शासनयो ( प ) मै।
√कस् ( कस ) ७/ गति-
शासनयो ( आ ) इत्येके-
क्षी।
√कस् (कस) १/ गतौ (प)।

क—कुआस्- कुएस् = कासने–वा पॉकर्नी।

ग—कासते–सुश्रु १,३८,१३, कासेत्–२,५०२,१९, श्वासकासविनाशन०–भा पु ३०,३०,१७। स्याच्छब्दानुकृति।

ङ—√कास ( अक ) = (१) कुशब्दने, ( २ ) कासने, ( ३ ) कफनिष्कासने, ( ४ ) छिक्कायाम्। वकृ–कासत, कासमाण–पण्ह १,३–पत्र ५४, आचा।

ङ—√खास ( अक ) = कासने। खासइ ( तदु १६ )।

छ—√खाँसना = कासने।

+√कास् (कासृ) १/६३८ दीप्तौ ( आ )
क्षी-मै श च-जै-काकृ- सा कात।
शा-हे-वो ×

√काशृ ( काशृ ) दीप्तौ
( आ )।
√कास् ४/१०२ दीप्तौ (आ)
काकृ, १०५ कात।

√चकास् (चकासृ) २/ दीप्तौ (प)।

√कि ३/१८ ज्ञाने (प) √चित् (चिती) १/ सञ्ज्ञाने
श-जै काकृ-शा× क्षी-मै सा च कात-हे-वो। (प)।
चि ३/ ध्याने—ह्वि।

ग—अचिकेत्-ऋ १०,५१,३, काठ ८,१०, क ७, ६, चिकेतु-तै ३,३,११,५।

+√किट् (किट) १/२९९ त्रासे (प) मै √किट्ट १/१२४ चूर्णे (प)
क्षी मै श-च-जै-काकृ- मै-सा। काकृ।
कात-शा× उत्त्रासे—हे। √खिट् (खिट) १/उत्त्रासे (प)
कटवत् (=गत्याम्)-
भयभीमयो [च]—वो।

√खिट् धातो प्रादेशिक प्रयोगोऽयम्। चतुर्भिरेव वैयाकरणै स्वीक्रियते।

+√किट् (किट) १/३१६ गतौ (प) √कट् (कटी) १/गतौ (प)
श× क्षी-मै-सा-च-जै-काकृ-
कात शा-हे। √केण् १/२१३f गतिप्रेषण-
गत्याम्—वो। श्लेषणेषु (प) काकृ।

क—केइ (ए ?) =प्रेरणम्, उत्तेजनम्- वा पॉकर्नी।

ग—[किटि - (√किट् + इगुपधात् [उणा ४/१०२]) =सूकर -अ को २,५,२। किट्टम् (केटति(स्म)=लौहादिधात्ववयवत्वान्निर्गच्छतीति। गत्यर्था०-३,४,७२। इति क्त। आगमशास्त्रस्यानित्यत्वान्नेट्)=मलम्-अ को ६,२,६५] तथा च भावप्रकाशे पूर्वखण्डे प्रथमे भागे-"शेष किट्टञ्च यत् तस्य" (श क द्रु)।

√कित् (कित) १/९७८ निवासे रोगापनयने च (प) √कि ३/ज्ञाने (प)।
श× क्षी-मै सा-काकृ कात। √कित् (कित) ३/
निवासे—च जै शा हे। ज्ञाने (प)।
सशयेच्छावासारोग्ये—वो। √केत् (केत) १०/
विश्रावणे (प)।
√चिन् (सन्नन्त.) ज्ञाने—ह्वि। एव सति कुत्व √चित् सदेहे
न स्यात्। काकृ।

ग—अपचिकित्सति-शौ १३,२,१५, चिकित्सतु-शौ ६,१४१,१, पै १६,४२,५, अचिकित्सन्—तैब्रा ३,७,६ १२, चिकित्स्यते—अन्न २,१, चिकित्स्यम्—योशि ६,५९।

| | | |
|---|---|---|
| √कित् ( कित ) ३/७० सा श जै-शा × | ज्ञाने ( प ) क्षी-मै-च-काक्र-कात हे । मतौ—वो । | √कि ३/ ज्ञाने ( प ) । √चित् (चिती) १/ सज्ञाने ( प ) । |
| √चित् | ज्ञाने—ह्वि । | √कित् ( कित ) १/ निवासे रोगापनयने च ( प ) । |

ग—चिकेतति-ऋ १,४३,३, कौ १,४२४, जै १,४१,६, चिकिद्धि-ऋ ५,२२,४, तै २,१४,४। अति चेकिते-ऋ १,५५,३, [ कोऽत्र धातु कतम च तदीय रूपमित्यत्र भवन्ति बहवो वादा -√ १ कितेर्यङि कर्मणीति सा । २ चेर् वा चितेर् वा इत्यर्गो्क्ष प्रत्यक्ष । यतु २ √चि च √चित् च । ] चिकितान -ऐब्रा ५,४, तैआ ४,५,५ [चानशि न गुण शित्त्वेन ङित्त्वात्, चेकितानम्—मभार ७,७०१,६३ = चेतयन्तम् ( नील ) ।

√चित् धातुस्वीकारे कुत्व न स्यात् ।

| | | |
|---|---|---|
| +√किल् ( किल ) ६/७४ श (काक्र - √क्लिल्) मुद्रणदोष । √किल् इति भाव्यम् । | श्वैत्यक्रीडनयो॰ ( प ) क्षी-मै-सा शा-हे । क्रीडने—च । श्वैत्यक्रीडनयो -जै कात । शौक्ल्ये । क्रीडे—वो । शैत्यक्रीडनयो —काक्र । | √केल् ( केल ) १ / चलने ( प ) । √कैल् १/२४७ गतौ ( प ) काक्र । √खेल् ( खेल ) १/ चलने ( प ) । |

ग—अनीनशत् किलासम् [ केलनम् । बिदाद्यङ् ३/३/१०४ । किलेन = श्वैत्येन, असति = दीप्यते ।√अस्+अच् ( ३/१/१३४ )]-अ वे १,२४,२, किलास सिध्मे—अ को २,६,५३ । किलासम् = सिध्म (>सेहुआँ-हि ) रोग श्वेतो भवतीति धातो श्वैत्यमर्थो घटते । किलासम्-वा स ३०,२१ । यद्युयुक्ष्रे किलास्य -ऋ ५,५३,१ । न किल्विषादीषते वस्व आकर -ऋ ५,३४,४ । ( केलयति = क्रीडयति विषयेषु ।√किल्+किलेर्बुक्च-उणा १/५० इति टिषच् , वुगागमश्च ) । [किल्विप पापरोगयो । अपराधेऽपि-मेदि षे ३४ । इत्थमेष क्रीडनेऽर्थेऽपि चरितार्थो भवति ]

| | | |
|---|---|---|
| +√कील् (कील) १/५२४ श-जै × णिचि-कीलयति-क्षी १/५२४ | बन्धे ( प ) क्षी च काक्र कात-हे वो । बन्धने—मै सा शा । | √कीट् (कीट) १०/वरणे (प), बन्धने-मै-कात । √टीक् १०/ ८० बन्धने (प) काक्र । |

क—गोइ- गी=अङ्कुरणे, उद्भवे। पु म उ ज खिल्, म उ ज किल्=पलाण्डु। न उ ज कील्-वा पॉकर्नी।

ग—कीलय-पी ४२२ २, व ४३६ १४। कीलयेत्-शि ६,१२९। कील-रापू ४,४।

ङ—√खिल्ल (सक)=रोधे। खिल्लेमि-सुपा १३७।

छ—√कीलना=(१) कीलने, (२) वशीकरणे।

छ—√किलना=(कर्मवाच्ये प्रयोग)।

छ—√खीलना=(१) कीलने, (२) तृणशकलै पुटकबन्धने।

यद्यपि ऋग्वादे प्रयोगो न लभ्यते तथापि कीलशब्दसाधनाय प्रेरकक्रिया-साधुत्वाय च धातुरावश्यक।

+√कु (कुङ्) १/९३७ शब्दे (आ) शX क्षी मै सा च जै काकृ-कात शा-हे। आर्तस्वरे—वो।

√कवते (निघण्टौ २/१४) गतिकर्मा।
√कु २/ शब्दे (प)।
√कु (कुङ्) ६/ शब्दे (आ)।
√कू (कूङ्) ६/ शब्दे (आ) इत्येके-क्षी।
√कूज् (कूज) १/ अव्यक्ते शब्दे (प)।
√कु (कुङ्) १/ गतिशोषणयो (आ) देवराज-यज्वा।

क—कॉइ-स्कॉइ=श्रवणे, प्रतीतौ। लेट्टि कवेत्, सर्बि-चुवति (čuvati)-वा पॉकर्नी।

ग—विश्वा रूपाणि प्रतिमुञ्चते कवि-ऋ स ४,४,२४,२। अत्र निरुक्तम्-"मेधावी कवि क्रान्तदर्शनो भवति, कवतेर्वा" १२,१३-द्विधा व्युत्पत्तिं प्रस्तौति। तत्र 'कवते' इति शब्दार्थको नास्ति, पाणिनेर्धातुपाठे च 'कवते' इति गत्यर्थको नास्ति। श्रीमद्देवराजयज्वना (निघण्टौ २/१४) 'कवते=गतिकर्मा' इत्यत्र पाणिने √कु (कुङ्) १/गतिशोषणयो (आ) इति धातुर्दर्शित। एवमर्थको धातु प्रस्तुतेषु सर्वेष्वपि धातुपाठेषु क्वापि नास्ति। देवराजेन कुत प्रस्तुत इति रहस्य प्रमादो वा। वेदे गत्यर्थक'=ज्ञानार्थकोऽय कालक्रमेण लोके शब्दार्थको जात स्यात्। ज्ञानानन्तर-मुपदेशार्थं भाषणादिक भवति। मुनय (मननशीला) पश्चाद् वक्तारो जाता। भवेन्नाम किमपि। शब्दार्थकोऽय पाणिनेर्धातु √कु (कुङ्) तु विकासपरम्परामत्र-

लम्बते—√कु २/३१>√कु ६/१२०>√कू ६/१२०>√कूज् १/२१८ अव्यक्त शब्दे। इमे सर्वे शब्दानुकृतिकल्पा धातवो निश्चप्रच तन्नुरूपमर्थं प्रस्तुवन्ति।

कवि शब्द षट्स्वर्थेषु भवति–कविर्वाल्मीकिशुक्रयो। सूरौ काव्यकरे पुंसि स्यात् खलीने तु योषिति–मेदि, वे ४। तिङन्तरूप नाधिगम्यते। ५/२६ निरुक्त-प्रयुक्त शब्दकर्मा कोकूयते तौदादिकस्य √कू ६/१२० इत्यस्य यङन्तरूपम्। भौवादिकस्यादादिकस्य वा।

| | | |
|---|---|---|
| +√कु २/३१<br>श | शब्दे (प)<br>क्षी-मै सा-च-जै-काकृ-<br>कात-शा-हे।<br>आर्तस्वरे—वा। | √कु (कुङ्) १/ शब्दे (आ)।<br>√कू (कूङ्) ६/शब्दे इत्येके-क्षी।<br>√कव् (कव) १/ शब्दे (प)।<br>√गु (गुङ्) १/ अव्यक्ते शब्दे (आ)। |

क—कउ, काउ-केउ, केउ-, कू=शब्दे-वा पॉकर्नी।

ग—(कवीति-काशिका ७,३,९५)

न्यासे त्रयाणां√कु १/ √कु २/ √कू ६/ इत्येषां प्रयोगविषय प्रस्तुतो लभ्यते "कवतिस्तावद् अव्यक्ते शब्दे वर्तते–'उष्ट्र कोकूयते' इति। कुवतिरप्यार्तस्वरे–'चोकूयते वृषल' इति=पीडित इत्यर्थ। कौतिस्तु शब्दमात्रे" (न्यासे ७/१४/६२)।

ज—कु-उ'=कासे।

| | | |
|---|---|---|
| √कु (कुङ्) ६/१२०<br>श× | शब्दे (आ)<br>क्षी-मै-सा च-जै काकृ<br>कात शा-हे।<br>आर्तस्वरे—वो। | कोकूयते (निरुक्ते ५/२६) शब्दकर्मा।<br>पूर्ववत् |
| √कु,√कू ६/ | रचनायाम्, चिन्तने-ह्वि | |

ग—आ वा अग्ने कुवते यजेयेति–शब्रा ३,१,४,६।

| | | |
|---|---|---|
| +√कुक् (कुक) १/८८<br>श× | आदाने (आ)<br>क्षी मै-सा-च-जै काकृ-<br>कात शा-हे वो।<br>गृहीतौ—जै। | √कुर्क १/४१०c आदाने (आ) काकृ। (तु —कुर्क-[तुर्की भाषा]>कुर्की-ह्वि)<br>√कुक्क १/४१० b आदाने (आ) काकृ।<br>√कुक्क् १/४१०f गतौ (आ) काकृ। |

क—कुकु=शब्दानुकृतिरेषा। लिथु कुकुओति, लेट्टि -कूकुओत्=कोकिल-शब्दे—वा पॉकर्नी।

क—म इरि =कूअख्-वा पॉकर्नी ।

ग—कोकिल (√कुक्+उणा १/५८ लच) तात कूजति-वा रा ७,५०,७ =सुकृष्णो विहग काक कोकिलपालकत्वात् कोकिलपदेनोक्त ( तिल )। सर्वत आदानत्वात् स कोकिल [ कोक (√कुक्+३/१/१३४ अच्)-अ को ७,५७ =ईहामृग । वृक सर्वतो वत्सादीन् गृह्णात्येत्र । तथैव कुक्कुर -( कोकते=आदत्ते, इति कुक्=यत् किमपि गृह्णन्त जन दृष्ट्वा, कुरति=शब्दायते-√कुर्+क )= सारमेय -इति राजनिर्घण्ट । ]

ङ—√कुक्क-कुक्कड ( पि १९७,४४८ )।

ङ—√कोक्क-( सक )=आह्वाने। त्रक्क-कोक्कंत-कुमा ।

| | | |
|---|---|---|
| +√कुच् (कुच) १/१८१ शब्दे तारे (प) | क्षी-मै सा शा हे। | √कु (कुङ्) १/ शब्दे (आ)। |
| श× | शब्दे—च। | √खु (खुङ्) १/ शब्दे (आ)। |
| | उच्चै शब्दे —जै। | √गु (गुङ्) १/ शब्दे (आ)। |
| | शब्दोत्तरे—काकृ कात। | √कच् (कच) १/ शब्दे (प)। |
| | तारशब्दे—वो। | |

| | | |
|---|---|---|
| +√कुच् (कुच) १/८४४ सम्पर्चनकौटिल्यप्रतिष्टम्भ-विलेखनेषु (प)। | क्षी-मै-सा-जै काकृ कात शा हे। | √कुट् ( कुट ) ६/ कौटिल्ये (प)। |
| श× | कौटिल्ये—च। | √ककुप् च कुजते. (=कौटिल्यार्थस्य-दुर्गा )—निरु ७/१०/७। |
| | रोधपर्ककौटिल्यलेखने—वो। | |

छ—√कोचना
छ—√कोचना } =विलेखने ( गोदना, गडाना-इति हिं )।

छ—खोचा (<कोच )=पक्षिणा ग्रहणाय ससक्तप्रान्तनिर्यासको व्याधाना वेणुदण्ड ।

छ—खोच (<कोंच ) त्वगुत्पाटनाघात, ( ७ ) कीलकादिघट्टनेन वस्त्रादि भेद, विलेखनम्।

| | | |
|---|---|---|
| √कुच् (कुच) ६/८८<br>श | सकोचने (प)<br>क्षी मै सा च-जै काक्र<br>कात-शा हे।<br>सकोचे—वो। | √कुच् (कुच) १/ शब्दे<br>तारे (प)।<br>√कुच (कुच) १/ सम्पर्चन-<br>कौटिल्य (प)। |

क—कॉइ-कू—स्लॉवे -कुचति = कुचति।

ख—न पर्सि कोज़्=कोच -ज़ू पॉकर्नी।

ग—सकुचत्यम्बुज यथा-सुश्रु १,३२१,८, उत्कुचतीषु स्नावरज्जुषु-अकौशि १५।

छ—कुचना॰=सकोचने, प्रत्याहरणे।

| | | |
|---|---|---|
| +√कुज् (कुजु) १/१९६<br>श×<br>(काक्र-√कुच्<br>[कुच]) लैपिकी<br>स्खलति।<br>√कुज् इति स्यात्। | स्तेयकरणे (प)<br>क्षी मै सा-जै कात शा।<br>स्तेये—च-हे वो।<br>स्तेयकरणे—काक्र। | कुजय>√कुज्–वागीश। ङ–<br>कुजय=द्यूतकार<br>(सूअ १,७,२)।<br>√ककुप च कुजते<br>(=कौटिल्यार्थस्य-<br>दुर्गा) निरु ७,१२,७<br>√खुच् १/५०f स्तेय<br>करणे (प) काक्र।<br>√खुज् (खुजु) १/<br>स्तेयकरणे (प)।<br>√गुज् १/५०c स्तेय-<br>करणे (प) काक्र।<br>√ग्रुच् (ग्रुच) १/<br>स्तयकरणे (प)।<br>√ग्लुच् (ग्लुच) १/<br>स्तेयकरणे (प)। |

१ ङ (कुजय=द्यूतकार - सूअ १,७,७)<कु+√जि।

| | | |
|---|---|---|
| √कुञ्च् (कुञ्च) १/१८३<br>श जै काक्र×<br>सा–√कुञ्च् (कुचि) | गतिकौटिल्याल्पीभावयो (प)<br>क्षी (यु मी स)।<br>कौटिल्याल्पीभावयो –<br>मै-सा कात शा ह।<br>कौटिल्ये—च। | √कुच् (कुच) १/ सम्पर्चन-<br>कौटिल्य० (प)।<br>√कुच् (कुच) ६/ सको-<br>चने (प)। |

वक्रणे तौच्छये—वो ।
अल्पीभावे—ह्रि ।
कौटिल्याल्पीभावयो —सा ।
गते कौटिल्ये द्रव्याल्पत्वे
च—क्षी ।

क—द्रष्ट √कुच् ६/८८ ।

ग—कुञ्चनेन—शाण्डिल्यो १,७,१२, योशि १,१११, यो १,५२, कुञ्चितम्
गरु ५, कुञ्चमानम्-सुश्रु २,३४,९ ।

ङ—√कुच ( सक )=१-गमने, २-अल्पीभावे, ३-वक्रगतौ-कुमा , गउड ।

| | | |
|---|---|---|
| +√कुट् (कुट) ६/८६ श | कौटिल्ये ( प ) क्षी-मै सा-च जै-काकृ काश-शा हे वो । | √कुच् ( कुच ) १/ सम्पर्चन-कौटिल्य० ( प ) । कुटतेर्वा स्याद् विपरीतस्य विकुटितो भवति ( निरु ६/३० ) । विकुटित =कुब्जीभूत ( कुत्सीभूत )-दुर्गा । |

क—द्रष्ट √कट् १/२९१, स्केल्—, केल्=न्युब्जीभावे, कौटिल्ये-वा
पॉकर्नी ।

ग—पिता कुटस्य चर्षणि -ऋ १,४६,४=कौटिल्ये । कुटी कृत्वा वने वसेत्-
मनु ११,७२ ।

| | | |
|---|---|---|
| +√कुड् (कुड) ६/१०१ श× | बाल्ये ( प ) क्षी मै सा-काकृ । बाहुल्ये—च । घसने बाल्ये च—जै-कात शा हे । बाल्येऽदने—वो । | √कुट् (कुट) ६/ कौटिल्ये (प)। विकुटित ( =कुब्जीभूत - दुर्गाचार्य )-निरु ६/३० । |

क—केर्त् , केरात्=वेष्टने । (*कुत्य )=कुड्यम् , पार्थक्यम् ,-वा पॉकर्नी ।

ग—नियतमय √कुट् धातुतो विकासमाप्त । कुड्य-(मभार १,१४५,१०)—
शब्दसाधनाय वैयाकरणा ( कुटया साधु । तत्र साधु ४/४/९८ इति यत् । पृषोद
रादि० ६,३,१०९ । ) मूले √कुट् धातु दर्शयन्ति । पुनररुचौ सत्या "कुड्यते वा
कुड्यम्"-इत्याह भानुजिदीक्षित । तत्र स "कुडि (√कुण्ड ) कार्कश्ये" इति धातु-

मुदाहरत्, तन्न समीचीनम्, कार्कश्यार्थक कुडिधातोरभावात्। कुडति = अत्ति वज्रलेपमिष्टकादीश्चेति ण्यत्-३/१/१२ इति नो मतम्। एवमेव "कुड्मलाम्बुरुहाकारो" मभार ४,३९३। कुडग०-सुश्रुत २,१७५,१५, मभार १४,२७२२, कुडी (कुटयर्थे)-मभार १३ ६४७१, कुडिश (=कुडयते=भक्ष्यतेऽसौ। √कुड्+बाहुल्कात् श, तत इट्)=मत्स्यविशेष -इति राजवल्लभ। ६/३० निरुक्तेऽपि कुन्जीभूतार्थकस्य त्रिकुटितशब्दस्य विद्यमानत्वादय बालयत्राहुरदघसनार्थक √कुट् धातु कुतो नानुवदेत्।

| | | |
|---|---|---|
| +√कुण् (कुग) ६/५५ श | शब्दोपकरणयो (प) क्षी मै-सा जै काकृ कात-शा-हे। शब्दे—च। उपकरणे शब्दे—वो। सकोचे—भानुजिदी० २,४, १०८। | √कण् (कग) १/ शब्दार्थ (प)। √कण (कण) १/ शब्दार्थ (प)>√कुण्। √कल् (कल) १/ शब्द-सग्यानयो (आ)। √गुण् १/२०७ m शब्दे (प) काकृ। √कुर् (कुर) ६/ शब्दे (प) काकृ। √घुर् (घुर) ६/ भीमार्थ शब्दयो (प)। कुणारुमिति—निरु ७/७/५ √कण् शब्दार्थ -दुर्गाचार्य। |

क—द्रष्ट -√कुट् ६/८६।

ग—स पिणक् कुणारुम्-ऋ ३,३०,८, कुणीनामिव निलयानि-मभार ३,१२७०। कुणप०-अ वे ११,९,१०, कुणपे-तै ७,२,१०,२, पुरुषकुणप०-शब्रा ४,१,३,८, कुणपदुर्गन्ध०-मभार १४,४८। [कुणपशब्द √कण् धातुतो व्युत्पाद्यत-"क्वणे सम्प्रसारण च"-उणा ३,१४३ इति कपन्। नूनमय √कण् धातुना सम्बध्नाति —√कण् √कुण्। उपकरणार्थे तु-कोण (वीणादि वाद्यते येन धनुराद्याकृतिना स कोण। >√कुण्+हलश्च ३/३/१२१ इति घञ्)—अ को १,७,६। शब्दानुकृतिरेष.।] कोण-सघट्टित पुन -वा रा २,७१,२९—काण =भेर्यादिवादनदण्ड (तिल)।

ङ—√कुणुकुग (अक)=शीतकम्पे सति दन्तादिशब्दे। वकृ-कुणुकुणंत-सुर २,१०३।

छ—√कुनकुनाना (बु ख)=शिशोर्निद्रात्यागलक्षणाव्यक्तध्वनौ, श्वशावकाना शीताद्यार्तारावे।

+√कुण्ट् (कुटि) १/३१९ वैकल्ये (प) <√कुण्ड् (कुडि) वैकल्ये।
मै श कात × क्षी सा च-जै-शा-हे वो। √कुट् (कुट) ६/ कौटिल्ये (प)।
गतिवैकल्ये—काक्र। √कुट्ट् १/११७ वैकल्ये (प) काक्र।
√कुण्ठ् (कुठि) १/ ३०० वैकल्ये (प) मै।
√क्लन्द् (क्लदि) १/ वैक्लव्ये (आ)।

ड—कुटार = म्लानम्, शुष्कम्, मलिनम्। कुट = (१) कुब्ज, वामन — आचार, (२)—करविकल —(पत्र ११०, निचू ११, आचा)।

छ—√कुचना। = प्रमर्दने।
√कुट्>√कुण्>√कुण्ड्>√कुण्ट्>√कुण्ठ्>√कुट्ट १/११७ काक्र।

√कुण्ठ् (कुठि) १/३०० वैकल्ये (प) मे।
क्षी-सा-च जै-काक्र कात- पूर्ववत्
श -हे × खोटनवैकल्यालस्ये—वो।
मन्दे, मूर्खे, कुण्ठिते–ह्वि।

इम ह्विटनार्नामधातुरूप स्वीकरोति तद्रूपानुपलब्धावपि कुन्नाम कुत आगतम्? एवमेव तेन √कुण्ट् १/३१९ प्रभृतय सर्वे क्रियारूपविकला धातव कुतो न स्वीकृता यदा हि निरुक्तकारो बोधयति—अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु–२,२,८।

ड—कुठ = मन्द, अलस — श्रा १६, = मूर्ख — आचा।
ठ—कुद = कुण्ठित।

√कुण्ठ् (कुठि) १/३३९ च = गतिप्रतिघाते (प)
श-जै × क्षी मै सा शा।
आलस्ये, च = गतिप्रतिघाते- पूर्ववत्।
काक्र कात हे।
शेपणे—च।
खोटनवैकल्यालस्ये—वो।
मन्दे, मूर्खे, कुण्ठिते–ह्वि।

क—( स् ) केल्=छेदने-वा पॉकर्नी ।

ग—कुण्ठ०-सुश्रु १,२७,१५=शस्त्र० । शरा' कुण्ठधारा -वा रा ३,३२,१६, [ कुठार "कुण्ठेर्नलोपश्च"-सर कण्ठा -२,३,४३ । ] अत्र√कुठ् धातुनापि भाव्यम् । कालक्रमेणायमस्मिन्नेव सक्रान्त । "आम्र छित्त्वा कुठारेण"-वा रा २,३५,१२, कुठारिका-सुश्रु १,२६,१३ ।

+√कुण्ड् (कुडि) १/२६७ दाहे ( आ )
श× क्षी-मै-सा-च-जै-काकृ-कात-शा हे-वो । पूर्ववत् ।

क—कर् =दाहे । नासिक्यम् । कुर्नो=कुण्ड, जारजात । पु आइस् हातुंग्, पु गॉथि हॉर्नुग्-वा पॉकर्नी ।

ग—कुण्ड –(>गुडा-हि )=जारजात -( कुण्ड्यते=दह्यते कुम्भनेन । √कुण्ड्+करणे घञ् )=पत्यौ जीवति कुण्ड स्यात्-मनु ३,१७४, मभार १,१२३, ६८, प्राक्षिपत् काञ्चने कुण्डे-मभार २,१४३११ ।

उ—√कौरना ( (<कुण्डनम् ) मन्दभर्जने, मन्दपाके ।

उ—कुडमूता=कुण्ड -बु ख ।

उ—कोड़ा (<कुण्डम् )=अग्निसेवनस्थलम् ( अलाव-हि )। "कुण्डमग्न्यालये मानभेदे (<कुडौ ) देवजलाशये"-मेदि डे ४ ।

+√कुण्ड् (कुडि) १/३१९ वैकल्ये ( प )
श च-जै शा× क्षी-मै-सा काकृ-कात-हे-वो । >√कुण्ट् (कुटि) वैकल्ये ( प ) इति । कौशिकदुर्गौ-क्षी । पूर्ववत् ।

ड—कुड=इक्षुनिष्पीडनार्थं वशनिमित जीर्णकाण्डम्-दे २,३३ ४,४५ ।

उ—√कोडना, √कोरना (<कुण्डनम्=वैकल्ये=खण्डने)=भूमिखोडने (गोडना-हि ), अवदारणे ।

√कुथ् ( कुथ ) ४/१० पूतिभावे ( प )
जै ×, श क्षी-च-कात-शा-हे । पूतीभावे—मै सा काकृ । पूतित्वे—वो । दौर्गन्ध्ये—ह्लि । न शुद्धो धातु,—ह्लि ।

√क्वथ् ( क्वथे ) १/ निष्पाके ( प ) ।

क—क् उअत् ( ह्न )=फेनेन पूरणे, फेन॰–वा पॉकर्नी ।

ग—कोथयति–सुश्रु १,३४४,४ ।

कोथ ( कुथ्यति=गुद क्षिणोति । √कुथ्+कर्तरि–अच् )=गुह्यक्षयकारक-भगन्दररोगविशेष –सुश्रु –"तत्र क्षतनिमित्त कोथ उपजाते"। मूत्रपुरीषकोथ॰–सुश्रु १,४१,९ । स्नायुमाससिराकोथ॰–सुश्रु १,९२,४, कुथित॰–सुश्रु २,११५,३ ।

ङ—√कुह ( अक )=दौर्गन्ध्ये । कुहइ–भवि ।

,,√कुत्थ ( सक )=दौर्गन्ध्यापादने–पत्र १५८ टी ।

| | | |
|---|---|---|
| +√कुथ् ( कुथ ) ९/४७ क्षी-मै श च-जै-शा हे-वो× | सश्लेषणे (प) इति दुर्ग -सा । काक्र कात । सम्क्लेशे इत्येके—सा । | <√कुन्थ् सश्लेषणे (प) सा । √कुत् आस्तृतौ—सौ वा —वो । √कुथ् ( कुथ ) ४/पूतीभावे (प) । |

ग—शतशश्च कुथास्तत्र सिंहला समुपाहरन्–मभार २,१८९४, कुथाना कम्बलाना च–वा रा ४,५०,×३४ ।

| | | |
|---|---|---|
| +√कुन्थ् (कुथि) १/४१ श× | हिंसासक्लेशयो (प) क्षी-जे-काक्र कात शा-ह । हिंसासक्लेशनयो –मै-सा । हिंसायाम्—च । व रे क्लेशे च—वो । | √कन्थ् १/७ d सक्लेशे (प) काक्र । √कुथ् (कुथ) ९/सक्लेशे-(प) इत्येके—सा । √किन्थ् १/७ f सक्लेशे (प) काक्र । √क्रुन्थ् ९/ श्लिषि क्लिशि (प) वो । |
| हिसा= | प्राण्युपघात–क्षी | |
| सक्लेश = | बाधा-क्षी । | |

ग—√कुथ् ९/४२, √कुन्थ् चाभिन्नौ धातू । √कुथ्>√कुन्थ् ( द्रष्ट √अङ्क )। अतो वैयाकरणा अनेनैव कुथ-शब्द साधयन्ति नुममकृत्वा । यथा—कुथ ( कुन्थति–अशोभा क्लेश वा । √कुन्थ्+अच् आगमशास्त्रस्यानित्यत्वान्न नुम् । ) [=गजपृष्ठस्थितचित्रकम्बलम्]–मभार ७, ५१, ३६ । कुथोदरी ( कुथम्=हिंसात्मकमुदरं यस्या सा )=निकुम्भदुहिता, कुम्भकर्णपौत्री–कल्किपुराणे, षोडश अध्याय ।

ङ—कुथु= दु खसहनक्षम ।जिनदेवविशेष –सम ४३, पढि । ( २ ) क्षुद्र जन्तुविशेष–उत्त ३६, जी १७ ।

ठ—√कुँथना[1] * ( <कुन्थनम् = सक्लेशे )
छ—√कुँखना ( <कुन्थनम् = सक्लेशे )
छ—√कोथना ( <कुन्थनम् = सक्लेशे )
छ—√कूल्हना ( <कुन्थनम् = सक्लेशे )
} =(१) आर्तरवे, दु खस्वने, (२) कपोतशब्दे ।

+√कुन्थ् ( कुन्थ ) ९/४२ श्लेषणे ( प ) ।
काकृ-कात×, श　क्षी-हे ।
सश्लेषणे—मै सा च ।
सक्लेशे—जै शा ।
श्लिषि क्लिशि—वो ।

>√कुन्थ् (कुथि) श्लेषणे (प) इति दुर्ग —क्षी ।
>√कुथ् ( कुथ ) संश्लेषणे ( प ) सा ।
√क्रुन्थ् ९/ श्लिषि, क्लिशि ( प )—वो ।

√कुन्थ् ( कुथि ) १/४१, √कुन्थ् ( कुन्थ ) ९/४२, √कुथ् ( कुथ ) ९/४२ एते धातव एकमूल्का गणभेदार्थम् , अनुनासिकविकलतार्थम् , किति ङिति नुम्भेदार्थं तत्र तत्र तथा पठिता । उदाहरणानि पूर्ववज्ज्ञेयानि ।

√कुप् ( कुप ) ४/१२०　क्रोधे ( प ) ।
श　क्षी-मै-सा-च जै शा-हे ।
रोषे—काकृ-कात ।
कोपे—वो ।
कोप =　नेत्रलौहित्यादिहेतुश्चित्तविकार —दुर्गादा ।

कु+√पा-घञर्थे क* —( वा ३, ३, ५८ ), कुपानेन क्रोधो भवति—वागीश ।

क—कॉइ ( ए ) प्—,कु ऍप्,—कूप्, कुप् = धूम , क्रोधावेग', उत्तेजने । लैसि कुपिओ = कुप्यति ( लिथु कूपुओति ) पु च स्लॉ क्यपेति = उत्तेजने-जू पॉकर्नी ।

ग—प्रकुप्यन्ति विपर्यये-वा रा २, २६, ३४, दोषा' कुप्यन्ति-सुश्रु. १, २३, ८, कुप्यते-सुबा ९ ।

घ—कुप्पति-अगुत्तर ३, १०१ ( <कुप्यते ? )
ङ—√कुप ( सक ) = कोपे । कुपइ-उव महा ।
ङ—√कोव ( सक ) = दूषणे, ( २ ) कोपने । कोवेइ-सूअनि १२५ ।
ठ—√कुपना *
छ—√कोपना *
} = कोपे ।

| | | |
|---|---|---|
| +√कुम्ब ( कुबि ) १/४०६<br>क्षी-श जै काक्र शा × | आच्छादने ( प )।<br>मै-कात-हे।<br>छादने—सा-च।<br>स्तुत्याम्—बो। | √गुप् (गुपू) १/ रक्षणे (प)।<br>√कुम्प् ( कुपि )१०/ छादने ( प )।<br>√कुम्ब् ( कुबि ) १०/ इति कौशिक —क्षी।<br>√कुम्भ् (कुभि) १०/ छादने ( प ) अपरे—सा।<br>√कुभ् १/३६०g वारणे ( प ) काक्र।<br>√कुम्भ् १/३६१c गर्वे ( प ) काक्र।<br>√कूम्ब् १/२०६bb मर्दने ( प ) काक्र। |

ग—तैत्तिरीयसहितायाम्-"उदीचीनकुम्बा शम्याम्"। कुम्ब चाधिनिध्मसि-अ वे ६, १३८, ३।

| | | |
|---|---|---|
| +√कुर् ( कुर ) ६/६१<br>शा× | शब्दे ( प )।<br>क्षी मै-सा-च जै-काक्र-कात-शा-हे-बो। | √कु ( कुङ् ) १/ शब्दे ( आ )।<br>√कुण् ( कुण ) ६/ शब्दोपकरणयो ( प )।<br>√कण् ( कण ) १/ शब्दार्थं ( प )।<br>√क्वण् ( क्वण ) १/ शब्दार्थं ( प )।<br>√कल् ( कल ) १/ शब्दसख्यानयो ( आ )।<br>√खु ( खुङ् ) १/ शब्दे ( आ )।<br>√खुण् १/२०७J शब्दे (प) काक्र।<br>√गुण् १/२०७m शब्दे ( प ) काक्र।<br>√घुर् ( घुर ) ६/ भीमार्थशब्दयो ( प )। |

क—कॉइ्=विश्लेषणे, शकले–वा पॉकर्नी ।

ग—(कुर्यते। √कुर्+उणा ५/३५ वुन) कुरर –मभार ३, ११५७९। (कुरति–श्वी। उणादौ तु √कु (ड्) शब्दे–कुव क्रन् ३, १३३)। एतेनापि सिध्यति √कु धातुतोऽस्य विकास। कुररीमिवार्त्ताम्–वा रा ४, १८, ३०। कुरीरमस्य शीर्षणि–अ वे ६, १३८, ३, शब्दानुकृतिरेष धातु।

ङ—कुरर=पक्षी, उत्क्रोश –पण्ह १, १, उप १०२६।

ड—√कुरकुर<br>ड—√कुरुकुरु } =कुरकुरशब्दे, प्रलापे। कुरकुराअसि–पि ५५८।

ङ—कुरुल=शब्दे, काकरवे। कुरुलहि–भवि।

ठ—√कुरलना*=खगकलरवे।

इत्थमेष धातु √कु इत्यतो रलयोर्विहितयो सतोर्विकासमाप्त शब्दाधिक्य दर्शनाय क्वचिद् द्वित्वमप्यनुवदति–√कुरकुर, √कुरकुरुप्रभृति। ककार प्रत्याघात सत्येप हिन्द्या जायते—

छ—√खुरखुराना=(१) खुरखुरशब्दे, (२)—गलनलिकाया कफसत्त्वाद् घर्घरशब्दे।

| | | |
|---|---|---|
| √कुर्द् (कुर्द) १/२१ शX | क्रीडायामेव (आ)। क्षी-मै-सा काकृ कात। उपाध्यायास्तु गुदक्रीडायाम्—क्षी। गुदक्रीडा=गुदविहार इति चरके—सा। क्रीडायाम्—च जै-शा हे। गुदक्रीडे क्रीडे—वो। | √उर्द् (उर्द) १/ माने क्रीडाया च (आ)। √खुर्द् (खुर्द) १/ क्रीडायामेव (आ)। √गुद् (गुद) १/ क्रीडायामेव (आ)। √गुध् (गुध) १/ क्रीडायामेव (आ)। √गुर्द् (गुर्द) १/ क्रीडायामेव (आ)। √घुर्द् (घुर्द) १/२९०d क्रीडायामेव (आ) काकृ। √स्कुन्द् (स्कुदि) १/ आप्रवणे (आ)। |

क्रीडानियमोऽत्र धातूनामनेकार्थत्वे लिङ्गम्—क्षी।

क—(स्) के-द् तथा (स्) केद्ँ— लैति कर्दा=परिवर्तने, भ्रमणे। पु उ ज स्केर्दा=उपर्यधो भ्रमणे। म इरिश्—केइद्ँ=लङ्घने—जू पॉकर्नी।

ग—कूर्द -आश्रा १,४४८, बल पृथुश्री स चुकूर्द राम—हरिवंश ८३९८, कूर्दमान०—८३९९। कूर्दन्ति—मभार ६,३,३४=क्रीडन्ति (नील)। चुकूर्द-मभार १,८९,१६=जगौ। √कुर्द् धातुरत्र गानार्थ (नील)। क्रीडानियमोऽत्र धातूनामनेकार्थत्वे लिङ्गम्"—क्षी।

छ—√कूदना (<कूर्दनम्)=उत्प्लवने। √'कूँदना' इति तु (<स्कुन्दनम्=उत्प्लवने √स्कुन्द् धातुत।

+√कुन्स्(कुल) १/८२६ श×

सस्त्याने बन्धुषु च (प) क्षी-मै-सा-कात। सस्त्याने—च। सस्त्यानसन्तानयो—जै। बन्धुसस्त्यानयो"—शा-हे। संख्याने—काकृ। (लैपिकी त्रुटि) 'संस्त्याने' इति स्यात्। बन्धुसहत्यो—बो।

√कल् (कल) १/४९० शब्दसख्यानयो (आ)। √कुल् (कुल) १/२३७ आवरणे (प) काकृ। कुल कुष्णातेर्विकुषित भवति-निरु ६,२०,४। √कूल् (कूल) १/ आव-रणे (प)। √कोल् १/२३७b आवरणे (प) काकृ। √कोल् १/५५०a गति प्रतीघाते (प) काकृ। √कौल् १/-४७h गतौ (प) काकृ।

संस्त्यानम्= सङ्घात—क्षी।

क—कु उएल्=कुल्म्, गण—वा पॉकर्नी।

ग—कुले वसन्ति—शब्रा २,१,४,४, न कुल्म्—वा रा ७,३९,२३=प्रशस्तम् (तिल) कुलत्थ०—मभार १३,५४६८, कुलिन्द० मभार २,५९०, आकुलेन—प ११,७,३। कुले कुले—वा रा ७,८०,३०=गृहे गृहे (तिल), कुलायेऽधिकुलाय काशे कोश समुब्जित—अ वे ९,३,२०, कुलिश इति वज्रनाम कू (कु) लशातनो भवति-निरु ६,१७,११, कुल्माषा कुलेषु सीदन्ति—निरु १,८,१४, कुल्या (निघ १/१३) कुल्ले=पर्वते भवा—४,४,११० यद् इति देवराजयज्वा।

ङ—कुल=कुटुम्ब'—उप ६,७७।

+√कुश् (कुश) ४/१०५ मै-श-च-जै×

श्लेषणे (प) इति दुर्गे-क्षी। क्षी-सा-काकृ कात-शा हे।

<√कुस् (कुस) श्लेषणे (प)। √कुशूल (कुशूल) १०/

श्लिषि—वो । क्रीडायाम् (प) इत्येके-मै ।

√कुन्थ् (कुन्थ) ९/ श्लेषणे (प)।

कुशिक —क्रोशते' शब्द कर्मण । क्र शतेर्वा स्यात् प्रकाशयतिकर्मण साधु-विक्रोशयितार्थानामिति वा—निरु २,२५,१ ।

क—(स्) कॉइ=आच्छादने, आश्रये । कण्ठ्यविस्तार —(स्) कॉइ—कु-वा पॉकर्नी ।

ग—कुश (कु=पापं श्यति नाशयति । कु+√शो+ड । यद्वा—कौ=भूमौ शेते=राजते, शोभते । यद्वा-कुश्यति । √कुश्+३/१/१३५ क )—शब्रा ३,१,२,१६, कोश ( कुश्यते=सश्लिष्यते । अकर्तरि च कारके ३/३/१९ इत्यधिकरणादौ घञ् )=आवरणविशेष —इति भा पु ७,१,३४ ।

छ—√खोसना ( <कोशनम्=श्लेषे)=कस्यचन वस्तुन कचित् स्थिरी करणाय कस्मिश्चिदन्यस्मिन् वस्तुनि तदीपदशप्रवेशने, श्लेपणे ।

√कुष् ( कुष ) ९/४६ श — निष्कर्षे (प) क्षी-मै-सा च-जै-काक्र-कात शा हे-वो ।

निष्कर्ष = इयत्तापरिच्छेद'—दुर्गादास ।

निष्कर्ष = बहिर्निस्सारणम्—सा ।

निष्कर्ष = बहिष्करणम्—क्षी ।

√कृष् (कृष) १/ विलेखने (प)।

√कुच् ( कुच ) १/ सम्पर्चन विलेखनेषु (प)।

क—कउस्—कर्षणे । च स्ला कुसु=अंशे, भागे ( शैथिल्ये ), कुनिति सें=शैथिल्ये—वा पॉकर्नी ।

ग—ममच्चन त्वा कुषवा जगार—ऋ ४,१८,८, जीवन्तमेव कुष्णाति वृकीव कुकुटुम्बिनी—कथासरि २३,७७, अभिकुष्णीयात्—सुश्रु १,१४५,२, गृध्रा रुषा मम कुषन्ति-भा, पु, ३,१६,१० इति तौदादिकोऽपि प्रयोग' । निष्कुषित विहङ्गै-रघु ७,५०=खण्डितम् ( स ) ।

+√कुस् ( कुस ) ४/१०५ श काक्र-कात-शा× — श्लेषणे (प) क्षी-मै-सा-च-जै हे । श्लिषि-वो ।

>√कुश् ( कुश ) श्लेषणे (प) इति दुर्ग-क्षी ।

ग—कुसुमम्-(कुस्यति ।√कुस्+उगा ४/१०६ इत्युम । सञ्ज्ञापूर्वकत्वान्न गुण ) सुश्रु १,१५९,१८ ।

छ—द्रष्ट √कुश् ।

छ—√घुसना=प्रवेशे, श्लेषणे ।

| | | |
|---|---|---|
| √कू ( कूङ् ) ६/१२० च काक्‍-कात×, श | शब्दे ( आ ) इत्येके—क्षी । क्षी मै-सा-जै-शा-हे । आर्तस्वरे—वो । | <√कु ( कुङ् ) शब्दे ( आ ) । |

क—कुआॅ—, कुए--,कूउआ, कुइ--, कुउ ।

ख--अवे --कू=?--वा पॉकर्नी ।

ग—आकुवते—काठ —२३,२, क ३५,८, आकूतम्—खि ३,१५,६, तै ३,४, ४,१, मै १,२,३, आकूतात्—मा १८,५८, का २०,४,१ । आकूतिम्—खिसा ३६,४, शौ ५,७,८ ।

| | | |
|---|---|---|
| √कूज् ( कूज ) १/२१८ श | अव्यक्ते शब्दे ( प ) क्षी मै-सा-च जै काक्‍-कात-शा-हे । हिकने—वो । | √कु (कुङ्)६/ शब्दे (आ)। √कुञ्ज् १/२१३ हिंसागत्यो ( प ) काकृ । √कुञ्ज् १/७४० अव्यक्तेशब्दे ( प ) काकृ । √गुज् ( गुज ) १/ अव्यक्ते शब्दे ( प ) । √गुञ्ज् ( गुजि ) १/ अव्यक्ते शब्दे ( प ) । √कीज् ( कीज ) १/७४७ अव्यक्ते शब्दे (प) काकृ । √क्षीज् (क्षीज) १/ अव्यक्ते शब्दे ( प ) । √कू ( कूङ ) ६/ शब्दे ( आ )इत्येके-क्षी । |

क—काउ-, केउ-, कू=शब्दे । कु-(अथवा),गु्-योजनेन-कूज्-वा पॉकर्नी ।

ग—कूजति-षड्ब्रा ५,७, कूजते-मा २२,७, का २४,३,३, मै १२,३, कुक्कुराविव कूजन्तौ—अ वे ७,९५,२, कोकिलस्तात कूजति-वा रा २,५२,२, भृङ्गराजस्तु

कूजति-सुश्रु. २,२४६,६ । अत्र√कूज् धातु कोकिलकुक्कुरभृङ्गराजादिशब्दे प्रयुक्त इति मधुरामधुरसर्वाव्यक्तशब्दविषय ।

घ—√कूज् ( कूज ) अव्यक्ते सद्दे-धा पा ७८—कूजति-जातक २,४३९ ।

ङ—√कूज ( अक )=अव्यक्ते शब्दे । कूजाहि-चारु २१ ।

√कूय ( अक )=अव्यक्ते शब्दे । वक्त-कूयत, कूयमाण-ओघ २१ भा, विपा १,७ ।

छ—√कूजना<br>
ञ—√कूकना } =शब्दे, मधुरशब्दे

+√कूल्(कूल) १/५७५ आवरणे ( प )<br>
श×<br>
क्षी-मै-सा जै-कात शा हे आवृतौ—वो ।<br>
वरणे—च ।<br>
( काक√कुल्<br>
[कुल] )<br>
लैपिकी त्रुटि ।<br>
आवरणे—काक ।<br>
√कूल् इति भाष्यम्

√कट्(कटे) १/ वर्षावरणयो ( प )।<br>
√कुल्( कुल ) १/ संस्त्याने बन्धुषु च ( प )।<br>
√कोल् ( कोल ) १/२३७b आवरणे ( प ) काक ।<br>
√कोल् ( कोल ) १/७५७a गतिप्रतीघाते ( प ) काक ।<br>
√कोल् ( कोल ) १/७४७b गतौ ( प ) काक ।<br>
√गुण्ड् ( गुडि ) १०/ वेष्टने ( प ) मै ।<br>
√घृ १०/ आवरणे ( प )।

क—केर् = दाहे, औष्ण्ये । लिथु कुरिउ, कुर्ति = औष्ण्ये, कूरेन्ति =अनवरतमौष्ण्ये, कुर्स्त्यर्ति = उत्तेजने, लेटिश्—कुरु ( कुर्स्तु ), कुर्त् =धूमे, वाष्पे । केउ- (*कुेउ-, कू- )=दीप्तौ, दाहे-बा पॉकर्नी. ।

ग—कूलम्—ताम्रा १४,३,१३ । (कूलति =जलप्रवाहमावृणोतीति । √कूल्+अच् )=नद्या जलसमीपस्थानम् । ह्विट्नी √कुड्,√कूल् इति ( प्रयो ) दाहे दीप्तौ पठति । तथा हि-

नेदीयस कूळयात पणीरुत-ऋ ८,२६,१०, ( अग्नि ) तासा भ्राजमानो योनिमकूलयन्, अङ्गारै खादिरैरवकूलयेत्-सुश्रु २,३५०,१८ ।

ङ—कूल = तटम्—णाया १,१९ ।

√कृ ( कृञ् ) १/८८५ करणे ( उ ) √करन्ती—निघ २/१।
मै-श-च-काकृ-कात× क्षी-सा-जै-शा-हे। √कृ ( डुकृञ् ) ८/ करण ( उ )।
कृतौ—वो ?
रचनायाम्—ह्वि। √कृ ( कृञ् ) ५/ हिंसायाम् ( उ )।

क—कुर्ऎर्=करणे, निर्माणे। लिथु कुर्ति, केरेति=करणे,—जू पॉकर्नी।
ख—अेे कृुनओइति(<कृणाति)=करणे-जू पॉकर्नी।

ग—करामहे-मा ९,५, का १०,२,१, तै १,७,७,१। करे—मभार १४,९,२९। =कुर्वे ( नील ) कृञ्छान्दस भौवादिकत्वम्-नील। नीलकण्ठेन च्छान्दसत्वमुक्त तन्न विचारसहम्, प्राकृतहिन्दिभाषयो √कर् धातोरुपलम्भात्।

ङ—√कर ( सक )=करणे, निर्माणे ( करइ )। वकृ-करत, करेमाण-पि ५०९, रयण ७२, से २,१५, सुर २,२४, उवा।

छ—√करना।

धातोरस्य करति-रूप क्वचिल्लेट्-लकारेऽपि सिद्धयति। यथा—करति-शौ १९,१५,५ =कुर्यात्-सायणभाष्यम्। क्वचिन्न-ऋ १,४३,६-व्यत्ययेन शप्-सा भा।

√कृ ( कृञ ) ५/७ हिंसायाम् ( उ ) √कृ(डुकृञ्)८/ करणे (उ)।
श क्षी-मै-सा-च जै-काकृ-कात-शा हे। √कॄ ९/ हिंसायाम् ( उ )।
वरे—वो। √कृण्व् ( कृवि ) १/ हिंसा-करणयोश्च ( प )।
निर्माणे—ह्वि। √कृत् (कृती) ६/ छेदने (प)।

क—(स्) केर्-, (स्) केर्-, ( स ) क्रे=छेदने—जू पॉकर्नी।

ग—आकृणोति—ऋ १,१७३,११। कृधि-ऋ १,१०,११। कृणोति-मा २९, ३९, का ३१,२,३, काठ २१,१३, पै २,३२,४।

+√कृ ( कृञ् ) ९/१३ हिंसायाम् (उ) इत्येके— <√कॄ ( कॄञ् ) हिंसायाम् ( उ )।
मै-सा श-च काकृ कात-शा-वो× क्षी। क्षी-जै-हे। द्रष्ट √कॄ ९/१३।

√कृ ( डुकृञ् ) ८/९ करणे ( उ )
जै-शा-हे×,श क्षी मै-सा-च-काकृ कात। पूर्ववत्।
कृतौ—वो ?
हिंसायाम्—मभार ५, ७८, ५।

क—, ख—द्रष्ट √कृ १/८८५।

ग—'करोति' इति रूपम् ऋग्वेदे मया नाधिगतम्। करोति—खिसा २९, ४२, खि २, ६, १९, शब्रा १, १, १, १०। कुरुते—शब्रा १, १, २, ४।

घ—करोमि-सुत्तनिपात ७८।

ङ—√कुव्व (सक)=करणे। कुव्वइ-भग।

ङ—√कि (सक)=करणे। कुक्किय करणे—विसे ३३००।

| | | |
|---|---|---|
| +√कृड् ( कृड ) ६/१०७ | घनत्वे ( प ) क्षी-सा-हे। | √कड् ( कड ) ६/ घसने ( प )। |
| मै-श × | 'घसने' इत्येके—सा। सा-च कात शा-हे। धान्ये भक्षे—वो। | √कुड् ( कुड ) ६/ घसने बाल्ये च ( प ) जै कात शा-हे। |
| ( काकृ-√क्रुड् [क्रुड] जै-√तड् [ तड ] सभवतो मुद्रणदोष √कृड् इति स्यात् | घसने—काकृ। | √कूड् ( कूड ) ६/ धान्ये भक्षे च ( प ) वो। √क्रुड् (क्रुड) ६/९७ चलने ( प ) काकृ। √क्रूड् ( क्रूड ) १/२१८६ चलने ( प ) काकृ। √घनत्वे ? ह्वि-क्रूडयति-काठ ६,२। |

क—द्रष्ट √क्रूड् धातु। इँग्लि कर्ड=दधि। म इँग्लि क्रुड् ( डे ), क्रुड-केल्टिकमूलम्। तु गऐल —ग्रुथ। इरि ग्रुथ्, क्रुथ्, क्रुथैम्।

महाराष्ट्रिया ऋकारमुकारवदुच्चारयन्ति हिन्द्यामपि क्वचित् तथा। यथा—अमृत-( फलम् ) >अमरुत >अमरूद्। एवमत्र काशकृत्स्न इम धातु √क्रुड् पठति। घसनार्थक √कुड् जै-कात शा हेमै पठित। इत्थमेनस्य विकाससरणिर्भविष्यति-√कड् ६/२०० घसने ( प ) >√कृड् घनत्वे घसने>√कुड् ६/ घसने ( प ) >√कूड् ६/धान्ये भक्षे ( प ) वो, इति। क्रुडति-(महीध) वा स २५, ८।

| | | |
|---|---|---|
| √कृण्व् (कृवि) १/५९४ | हिंसाकरणयोश्च ( प ) | √कृण्व् ५/१७ e जिघासायाम् ( प ) कात। |
| श काकृ कात-हे वो× | क्षी-मै-सा-शा। हिंसायाम्—च। | √कृण्व् ५/२३ हिंसाकरणयोश्च ( प ) शा। |
| | हिंसाविकरणयो,—जै। | √कृण्व् ५/२५ हिंसाकरणयोश्च ( प ) हे। |

√कृण्व् ५/ हिंसे कृतौ च (प) वो।
√कृ (कृञ्) ५/ हिंसायाम् (उ)।
√कृण् १/२०८a अपनयने (प) काकृ।
√कृण्व् ८/१३ —श।

धातुरय नून सौवादिकेन √कृ (कृञ्) धातुना सम्बद्धो वर्तते। यथा–√कृ+णु+अ=√कृण्व्। अत एव वैयाकरणा नैकमत्य भजन्ते (ध्वनिमेलके द्रष्ट)। देशभेदेनैनस्य प्रयोगभेद स्यात्। कृण्वति–ऋ स ३, ३, ११, ४ वेदे करणार्थकस्यापि√कृ धातो कृणोतीति रूप भवति। फलत इह√कृ (डुकृञ्), √कृ (कृञ्) च धातू सक्रान्तौ।

√कृत् (कृती) ६/१५० श — छेदने (प) क्षी मै-सा-च जै, काकृ (उप), कात शा हे। छिदि—वो।

√कृ (डुकृञ्)८/करणे (उ)।
√कृ (कृञ्) ५/ हिंसायाम् (उ)।
√कुट् (कुट) १०/ छेदने (आ) इत्येके स्वामी —सा।
√कुट्ट् (कुट्ट) १०/ छेदनकुत्सनयो (प)।
√कुठ् छिदि सौ धा —वो। –कुठार।

क– (स्) केर्त—, क्रेत—
ख—अवे कुरून्तइति=कृन्तति–जू पॉकर्नी।
ग—चकर्तिथ–ऋ १,५७,६। कृन्तति–तै ६,१,८,४।
घ—कन्तति–जातक २,५३, करति–दीघ १,५२=मिलिन्दपञ्ह १,५१६।
ङ—√कत (सक)=छेदने। तर्कुत्र्या। सूत्ररचनायाम्। कतामि–पिंडभा ३५।
ङ—√कत्त (सक)=छेदने। कत्ताहि–पण्ह १,१। सूत्ररचनायाम्–पिंड ५७४।
ङ—√कट्ट (सक)=छेदने। कट्टइ–भवि।
छ—√कतरना = छेदने।
छ—√कुतरना = ,, ।
छ—√काटना = ,, ।

ज—√केचा = खण्डश करणे।

| | | |
|---|---|---|
| √कृत्( कृती ) ७/१० श | वेष्टने ( प )<br>क्षी मै-सा-च-जै, काकृ-(उप), कात-शा।<br><br>सवेष्टने—हे। | √कृत् (कृती) ६/ छेदने ( प )।<br>√कुण्ठ् ( कुठि ) १०/ वेष्टने ( प ) एके-सा।<br>√गुण्ड् (गुडि)१०/ वेष्टने (प)।<br>√ गुध् (गुध) ४/परिवेष्टने (प)। |

क—क्रेर्त्, केर्तृ-, क्रात्=वेष्टने-वा, पॉकर्नी।
ग—कृणत्ति-तै ७,५,१,७, शब्रा २,१,२,१९।
ङ—√कत ( सक ) = तर्कुल्या सूत्ररचनायाम्, वेष्टने। कत्तामि-पिङभा ३५।
ङ—√क्त्त ( सक )=तर्कुल्या सूत्ररचनायाम, वेष्टने-पिङ ५७४।
छ—√कातना = तर्कुल्या सूत्ररचनायाम्, वेष्टने।

| | | |
|---|---|---|
| √कृप(कृपू) १/५७४ श | सामर्थ्ये ( आ )<br>क्षी-मै-सा-च काकृ कात शा हे। | √कृ(डुकृञ्) ८/ करणे (उ)।<br>√कृ+√पा २/ रक्षणे (प)। |

(जै√त्रप [ त्रपूङ् ]) सामर्थ्ये—जै। मुद्रणदोष। कृपूङ् इति स्यात्।

क—स्केल्( ऐ ) प्— लैति स्कल्पो = लालसायाम्, गात्रविघर्षणे। लिथु स्केम्पि=दीप्तौ, घर्षणेनोज्ज्वलने।

ख—हु-कुर्प्स = सुक्लसम्—जू पॉकर्नी।

ग—अनुकृपते-ऋ १, ११३,१०। नास्मै समितिः कल्पते-अ वे ५, १९, १५। कल्पत न मुह्यति-शब्रा १,५,२,१५।

घ—कप्पति-नीघ २,१६२।

ङ—√काप ( अक )= सामर्थ्ये, ( २ ) कल्पनायाम्, ( ३ ) छेदने। काप्पइ, कापए ( काप, महा, पिंग )।

ङ —√खिप्प ( अक ) = सामर्थ्ये, ( २ ) दौर्बल्ये। खिप्पइ-सक्षि ३५।

| | | |
|---|---|---|
| √कृप् ( कृप ) १/७७४ क्षी सा श च काकृ कात शा-हे-वो× | कृपाया गतौ ( आ ) इत्येके-मै मै। भावकरणे—नै। विलापे, शोके—ह्वि । | <√क्रप् ( क्रप ) कृपाया गतौ ( आ )। √कृप् ( कृप् ) १/ सामर्थ्ये ( आ )। √कल ( कल ) शब्दसंख्यानयो ( आ )। |

ग—कृपते-ऋ १,११३,१०। अकृपन्त-ऋ ९,८५,११। कृपन्त-कौ ७,९८३।

| | | |
|---|---|---|
| √कृश् ( कृश ) ४/११४ श | तनूकरणे ( प ) क्षी मै सा च जै काकृ कात शा। तनुत्वे—हे। कार्श्ये—वो। | √कृ (डुकृञ्) ८/ करणे (उ)। |

क—(केकुर्- ) काकुर्— कृकु = कार्श्ये। लिथु -कर्तुं, करिर्त-, कसिन्ति = भेदे, स्थगने।

ख—अवे कृरुस=कार्श्यम्-वा पॉकर्नी ।

ग—कृशयति-ताब्रा ५,१,७। मासानि कृशयत कृशयन्ति-शब्रा ११,१,६,३४। अवकर्शयन्ति ( प्रेर ) ऋ ६,७४,७। अवकृशनीयान् ( क्रैयादिकोऽपि )-मै ३,६,९।

ङ—√किस ( सक )=ह्रासे, अपचये। किसए-सूअ १,७,१,१४।

| | | |
|---|---|---|
| √कृष् ( कृष ) १/९७५ श | विलेखने ( प ) क्षी-मै-सा च काकृ-कात-शा ह। विलिखितौ—जै। विलेखे—वो। | √कृ (डुकृञ्)८/करणे(उ)। √कच् ( कच ) १/ बन्धने ( आ )। √कञ्च् (कचि) १/ दीप्तिबन्धनयो ( आ )। √खच् ( खच ) १०/ बन्धने ( प )। |

क—कुष्लस्-,कुएलूस्—

ख—अवे कर्स्इति=कर्षति-जू पॉकर्नी ।

ग—कर्ष—ऋ ५,८३,७। कर्षति-ध्या ६०, योचू ७९, योशि ६,५३। कर्षन्ति-ऐब्रा ८,११।

घ—अवकस्सति तथा ओकस्सति-विनय २,२०४।
घ—कड्ढति-जातक १,१९३।
घ—कसति-सयुत्त १,१७२,१७३, सुत्तनिपात ८०।
ङ—√खच (सक) = (१) कर्षणे, (२) वशीकरणे। खचइ-भवि।
छ—√करषना* } = कर्षणे, (२) शोषणे, (३) आह्वाने, निमन्त्रणे।
छ—√करसना* }
ठ—√कसना-(<कर्षणम्) = बन्धनादिदार्ढ्याय तद्रज्जुकर्षणे।
ठ—√काढना = उल्लेखने (हि उरेहना), विलेखने, (२) निष्कासने, (३) ऋणादाने।
छ—√खचाना = (<कर्षणम्) = अङ्कने।
ठ—√खँचाना† = (<कर्षणम्) = अङ्कने।
ठ—√खाँचना†* = (<कर्षणम्) = अङ्कने, कर्षणे।

√कृष् (कृष) ६/६ विलेखने (उ)
जै×, श क्षी-मै सा च काकृ पूर्ववत्।
कात शा हे।
आकृपि—वो।

क—पूर्ववत्।
ग—कृषति-मै ३,२,४, क ३१,५। अचीकृषम्-ऋ १०,११९,११। कृषति-शब्रा ७,२,४,२। कृषन्ते-तैब्रा १८,४,२। कृष्णन्ति—(क्रैयादिकोऽपि) आर्षे ७ ७।
छ—√खीचना } = कर्षणे।
√खैंचना }
ज—√केति (<कृष्टि) = विलेखने।

√कॄ ६/१२८ विक्षेपे (प) √कृ (डुकृञ्) ८/करणे (उ)।
श× क्षी मै-सा-च-काकृ कात √गॄ ६/ निगरणे (प)।
शा हे-वो।
विक्षेपणे—जै।

क—(स्) कॅर्-, (स्) कॅर्- स्कॅ = उच्छलने, परित उत्प्लवने। ओस्सेतन्-कल्तन् = राशौ-जू पॉकर्नी।
ख—स्कारयतु-रथ (स् स्केर् = वेष्टने)-वा पॉकर्नी।

ग—अकिरत्-ऋ १,३२,१३। अनुकिरामि-अ वे १८,३,६९। आ किरासि-ऋ ८,४९,४।

घ—अभिकिरति-सयुक्त १,४५।

ङ—√किर ( सक )=( १ ) क्षेपणे, ( २ ) प्रसारणे, ( ३ ) विकिरणे। वक्क-किरत-से ४,५८,१४,५७।

छ—केराना† =(<किरणम् ) =शूर्पोत्पवने ( पछोडना-हि ), शूर्पं प्रचाल्य महल्लघुकणविभागे।

| | | |
|---|---|---|
| +√कॄ ( कॄञ् ) ९/१३<br>जै×, श | हिंसायाम् ( उ )<br>क्षी मै-सा च काक्ट<br>कात शा-हे।<br>हिंसे—वो। | >√कृ ( कृञ् ) हिंसायाम् ( उ )।<br>√कृ ( कृञ् ) ५/ हिंसायाम् ( उ )। |

अय√कृ ५/७ हिंसायाम् इति धातोरभिन्नो गणभेदात् पृथक् सख्यातो वैयाकरणै । श्नाविकरणकमस्य रूप यावदुगनेष्ये साहित्ये नोपलब्धम्। कृणीमसि-ताम्रा १२,६,३ इति केवलेन प्रयोगेण दृविष्ट सम्बन्ध श्नाविकरणात्मको विचिकित्सित प्रस्तूयते।

| | | |
|---|---|---|
| +√कॄ ९/७५<br>श-च काक्ट कात वो× | हिंसायाम् ( प )<br>क्षी-मै-सा-जै-शा-हे। | पूर्ववत्। |

सर्वैर्नानुमोदित । कृत -मभार १०,१०८,४=हत ( नील )√कॄ हिंसा याम् इत्यस्य रूपम् ( नील ), नैतत् साधिकार वक्तु शक्यते √कृ ५/७ इत्येतस्मादपि क्त प्रत्यये सति प्रकृतरूपसिद्धे सत्त्वात्। तस्मादय परस्मैपदाय निमित्तायैव पार्थक्यं नीत । नेदमपि मनोरमम्, √कृ ९/१३ इत्यस्योभयपदित्वादिष्टसिद्धे ।

| | | |
|---|---|---|
| +√केप (केपृ) १/३६४<br>श× | च=कम्पने, गतौ च (आ)<br>क्षी-सा।<br>कम्पने—मै च।<br>चलने—जै कात-शा हे।<br>चलने गतौ च—काक्ट।<br>चाले—वो। | √कम्प् ( कपि ) १/ चलने ( आ )।<br>√वेप् ( टुवेपृ ) १/ कम्पने ( आ )।<br>√गेप् ( गेपृ ) १/च=कम्पने गतौ च ( आ )।<br>√रेप् १/१४३ चलने (आ) जै, ९३० शा।<br>√ग्लेप् ( ग्लेपृ ) १/च= कम्पने गतौ च ( आ )। |

क—केइभ्= प्रबलम्, तीव्रम्-वा पॉकर्नी ।

ग—ते न्यविशन्त केपय –ऋ १०,४४,६। केपय कपूया भवन्ति, कपूयमिति पुनाति कर्म कुत्सित दुष्पूय भवति–निरु ५/२४। अस्माक मतेन तु 'केपि'-शब्दे सुस्पष्ट√केप् धातु प्रतीयते, सर्वधातुभ्यश्च इन् प्रत्यये सति रूपनिष्पत्तिर्ज्ञेया। चलनमनस्का दुर्मनस्का भवन्ति। चलना कम्पना वाऽस्थिरत्वादनर्हा। तदुक्तम्–न ये शेकुर्यज्ञिया नावमारुह्मीर्मैव ते न्यविशन्त केपय –निरु ५,२५,१।

+√केल् (केल) १/५३७ चलने (प)
शX क्षा-मै-सा-च-जै-शा हे।
गतौ—काक्र कात।
चालगत्यो —वो।

√क्रीड् (क्रीड़) विहारे (प)।
√किल् (किल) ६/ श्वैत्य-क्रीडनयो (प)।
√क्ष्वेल् (क्ष्वेल)१/चलने(प)।
√क्वेल् १/७२१ चलने (प) जै, ४४६ हे।
√कैल् १/२४७ गतो (प) काक्र।
√खेल् (खेल)१/चलने (प)।

ग—उपचारक्रिया केलि –मनु ८,३५७। स तु केलिकिलो विप्रो भेदशीलश्च नारद–हरिवंश (श क द्रु.)=नायकत्रयस्य। यद्यप्यय शब्द श्वैत्यक्रीडनार्थकेन √किल् ६/७४ धातुनापि साधयितुमर्हाने तथापीह 'केल्'-ध्वनिदर्शनात् केल् धातुरेव ज्यायान्। व्युत्पत्तिस्तु√क्रीड् > √किल > √क्ष्वेल् > √क्वेल् > √केल् > √कैल् > √खेल् इति मनोरमा।

ङ—केली(=चलने), असती, कुलटा–दे २,४४।

+√केव् (केवृ) १/५०१ सेवने (आ)
मै-सा शX क्षी-च-जै शा-हे।
सेचने—काक्र कात।
सेवे—वो।

√केब् १/३९९ गतो (प) च।
√खेव् (खेवृ) १/ सेवने (आ)।
√गेव् १/४३९ d सेवने (आ) च, जै शा-हे।
√ग्लेव् (ग्लेवृ) १/ सेवने (आ)।
√के+√वा २/ गतिगन्धनयो (प)= √केव इति वागीश।

क—कै=एकाकिन् ( कैउएरॉ )-वा पॉकर्नी ।

ग—अस्माकमस्तु केवल -ऋ १,७,१० । केवले-ऋ १०,५१,९ । केवली यत्सोमाहुति -शब्रा १,७,२,१० । केवला-वा रा २,३४,५५=कृत्स्ना ( तिल ) । केवलमुत्पद्यते ज्ञानम्—सा का ६४=ज्ञानभेद । केवल (=कुम्भकविशेष )-हठयोगदी २,७१ । न केवलाना पयसा प्रसूतिम्-रघु २,६३=शुद्धानाम् । केवल स्मरणेनैव-रघु १०,२९=कृत्स्नम् ( स ) । माकीं स शारि केवटे-ऋ ६,५४,७, ऋ स ४,८,२०,२=सेव्यते जलार्थिभि $\surd$केव्+अटन्-केवट =कूप -निघ ३/२३ ।

ङ—केवल=एकाकी-ठा २,१, औप ।
छ—केवडा (<केविका—राजनिर्घण्ट )=पुष्पविशेष ।

अत्र ज्ञान कृत्स्न-पुष्पादिषु सेवनार्थकत्व लभ्यते । अस्म मतेन-के=शिरसि+$\surd$वा ( गतिगन्धनयो )=$\surd$केव् इति निष्पद्यमानो धातु सेवनार्थक । शिरसि गतिर्गन्धन वा सेवनमेव । सेचनार्थकोऽप्यय (काशकृत्स्न०) पठ्यते । एव सति के=जले+$\surd$वा ( गतिगन्धनयो )=$\surd$केव् इति क्रम । जले गन्धनम्=सेचनमेव । पुष्पार्थे केविकाशब्दे तु $\surd$वा धातु सुस्पष्ट एव । गन्धनम्=मर्दनादिकम् ।

| | | |
|---|---|---|
| $\surd$कै १/९०१<br>$\surd$का ४/ | शब्दे ( प )<br>क्षी मै-सा-च-जै-काकृ-कात-शा-हे वो ।<br>प्रसादे, आनन्दे—ह्वि । | $\surd$कम् ( कमु ) १/ कान्तौ ( आ ) । |

क—का=इच्छायाम्—जू पॉकर्नी ।

ग—कायमान -ऋ ३,९,२ । आचके-ऋ १,२५,१९, तै २,१,११,६ । कायमानश्चायमान (=पश्यन् ) कामयमान इति वा-निरु ४/१४ इति दृशाऽय कान्तो दर्शने च भवति । दर्शनानन्तर वाग्व्यवहार इति लोके धातुरेष शब्दार्थको जात । प्राकृते 'काय'-शब्द काकवाचक ।

ङ—काय=काक -उप पृ २३, हेका १४८, वा २६ ।
ज—$\surd$कै-कै=पीडाशब्दे ।

ह्विट्नीर्दैवादिकमिम स्वीकरोति । तेनाय पक्षो गृहीत स्याद् दुर्गादासस्यैकदेशीयप्रश्नात् । तद्यथा—"एषामादन्तत्वेन दिवादौ पाठेऽपीष्टसिद्धौ भ्वादावैकारान्तत्वेन पाठो गणकृतमनित्यत्वमिति ज्ञापयति । तेन $\surd$अय् धातोरात्मनेपदानित्यत्वे शपो लुकि च "य्वोर्लोप" इति यलोपे, $\surd$अय् धातौ परे उपसर्गरेफो ल् इति वक्तव्यात् पराशब्दस्य रेफस्य लकारे "एककाल समुत्पन्नो य पलाति स जीवति" इति सिद्धम् । वेदेषूच्चारणभेदार्थो भ्वादौ पाठ इति केचित् ।

| | | |
|---|---|---|
| √क्नस् ( क्नसु ) ४/५ जै×, श | ह्वरणदीप्त्यो ( प ) क्षी मै-सा कात शा । ह्वरणे—च । ह्वतिदीप्त्यो —हे । ह्वतो भासने च—गो । | √नस् ( णस् ) १/ कौटिल्ये ( आ ) । क्रशति प्रकाशयति कर्मा—निरु ७,२५, १७/८ । √क्नस् १०/११९ भासार्थ |
| काकृ—√क्नस् [ क्नुस् ] । | ह्वरणदीप्त्यो —काकृ । ह्वरणम्=कौटिल्यम्—क्षी । | क्नस् ११/ भासने ( प ) वो । पक्षे ५वा दुर्गादा । |

जनीजॄषक्नसुरञ्जोऽमन्ताश्च १/८०३०—मित्
श-जै शा हे× ( काकृ—क्रसु )
स्याल्लैपिकी त्रुटि ।

यद्यपि नास्य प्रयोगोपलब्धिर्यथागवेष्ये साहित्ये तथाप्येष कमपि सुश्रृङ्खल विकाससम्बन्धमुपन्यस्यत्येव । यथा—√नस् ( णस् ) १/६७० कौटिल्ये ( आ ) >आदौ ककारसयोगे—√क्नस् ह्वरणदीप्त्यो ( प ) >उपोत्तमे नुगमागमे सति—√क्नस् १/११९ भासार्थ ( प ) शा, वो>उपोत्तमे रेफे सति>क्रश प्रकाशयतिकर्मा ( भासार्थ )—निरु ७,२५। अनुनासिकरेफयोर्माधुर्यात् सन्निवेश स्वाभाविक । पूर्वमनुनासिको रेफो वेति विचिकित्सितमिति निरुक्तोक्त √क्रश् धातुरपि क्नसते प्राग् भवितुम् अर्हति ।

| | | |
|---|---|---|
| +√क्नू (क्नूञ्)९/८ च×, श | शब्दे ( उ ) क्षी मै-सा-जै काकृ-कात-शा-हे-वो । | √कु ( कुङ् ) १/ शब्दे (आ) । √कू ( कूङ् ) ६/ शब्दे ( आ ) । √नू ( णू ) ६/ स्तवे ( प ) । √नु १/५५१q शब्दे (आ) काकृ । √कु+√नू=√क्नू शब्दे—इति वागीश । √क्वण् १/ शब्दे>( व-ण विपर्यये )— √क्नव् (सम्प्रसारणे) >√क्न । √क्नूय् ( क्नूयी ) १/ शब्दे उन्दने च ( आ ) । |

छ—√गुन्नाना ( <क्नूना० )—[बु ख ]=अतोषे बालकादीनामस्फुटो ध्वनि' । अयमुत्तरधातो' क्र्यादिभेद क्वचिद् देशे व्यवहृतिपद्या प्रपन्न , सम्प्रति नोपल५यमान' ।

√क्नूय् ( क्नूयी १/४८७ शब्दे उन्दने च ( आ )
शX क्षी।
शब्दे उन्दे च—मै-सा।
( काक्र-√ कूय् [कूयी] ) शब्दे—च-काक्र कात शा।
लैपिकी त्रुटि । क्नूयी इति जै—भ्रष्टोऽर्थ । पूर्ववत्।
स्यात्। शब्दोन्दनयो —हे।
दुर्गन्ध आर्द्रत्वे शब्दे—वो।
√क्नू ४/ ( कर्मणि वा ) उन्दने—ह्नि ।

क—केन्=कान्तौ। कने-, कनाइ-, कनॉइ- ग्रीक्-क्नो ( फ् ) ऑस्= घर्षणादिशब्दे। पु गॉथि क्नेअव्=निर्धनम् ( ), गर्द्दन। न उ ज गेनौ, लेट्टिश्—क्नूडु तथा क्नूस्तु, क्नून्, क्नूस्त्=लालसायाम्, कण्डूतौ। द्- क्नूदेत्, पॉलिश्-क्नोवक्=खण्डने, शकले-वा पॉकर्नी ।

ग—अभिक्नूयमिवादन्ति-शब्रा १४,१,१,१४। क्नोपयति ( =स्नेहयति )-निरु ७,१४,५। वस्त्रक्नोपम्-शिशु १०,४९।

+√क्मर् ( क्मर ) १/५५६ हूर्च्छने ( प ) मै। √[ह्वर्] ह्वृ१/ कौटिल्ये (प)।
क्षी शX मै सा-च जै-काक्र कात मकरशब्दस्य विपर्ययेण कमर
शा हे। >√क्मर् इति स्यात्-
कौटिल्ये—वो। इति वागीश ।

क—कम्-एर्=कौटिल्ये। लैति ( तत्र कुतश्चन गृहीत शब्द, ) कमेरा= सारसनम्, कमेर, कमर=तोरण, वृत्तखण्डम्।

ख—अवे कमरा=मेखला, कटिसूत्रम्-जू पॉकर्नी ।

छ—मक्कार=कुटिल, जिह्म ।

+√क्रथ् ( क्रथ ) १/७९३ हिंसार्थ ( प ) मित्। √कृत् ( कृती )६/ छेदने (प)
शX क्षी-मै सा कात शा हे। √क्रथ् ( क्रथ ) १०/ हिंसा-
हिंसायाम्—च-जै काक्र। याम् ( प )।
वर्त्रे—वो। √क्नथ् १/३४७ हिंसायाम्
अय १०/१३ धातुना ( प ) जै, ६०७b काक्र।
सम्बध्यते। √क्लथ् (क्लथ) १/ हिंसार्थे
( प )।

ग—क्रथनाय—मभार ८,२३,५८=हिंस्राय (नील), क्रथन =दानवविशेष – १,६७,५८। क्रथनगात्र०-सुश्रु १,५२,१५। क्रथकैशिकानाम्-रघु ५,३९ =विदर्भ देशानाम् (स)।

| | | |
|---|---|---|
| +√क्रद् (क्रद) १/७६६ श च शा× | वैक्लव्ये (आ) इति नन्दी-क्षी। | <√कन्द (कदि) वैक्लव्ये (आ)। |
| | क्षी-मै सा नै कात हे। | √कल (कल) १/ शब्द सख्यानयो (आ)। |
| | क्षीरस्वामिमतमुद्धृत पुरुषकारे (८१ पृ)। | √क्द् (क्द) १/ वैक्लव्ये (आ) इति नन्दी—क्षी। |
| | वैकल्ये—काक्ष। | √क्रन्द् (क्रदि) १/ वैक्लव्ये (आ)। |
| | वैक्लव्यविक्लत्वयो—वो। | √क्लद् (क्लद) १/ वैक्लव्ये (आ) इति नन्दी—क्षी। |
| √क्रन्द् | रोदने—ह्नि। | √क्लन्द् (क्लदि) १/ वैक्लव्ये (आ)। |
| | विक्लव =कातर—क्षी। | |

अस्य विकासक्रम √कद् >√कन्द्>√क्रद् >√क्रन्द्, कद् >√क्रद् >√क्लद् >√क्लन्द् इति।

ग—(अनु) चक्रदे- ऋ ८,३,१०, शौ २०,९,४। अभि अचिक्रदत्—कौ १,५६२, जै १,५७,७।

| | | |
|---|---|---|
| √क्रन्द् (क्रदि) १/६८ श× | आह्वाने रोदने च (प)। | √कद् (कद) १/७६५ वैक्लव्ये (आ)। |
| | क्षी-मै सा कात। | √क्रद् (क्रद) १/७६६ वैक्लव्ये (आ)। |
| | आह्वानरोदनयो—जै-शा। | √कन्द् (कदि) १/ आह्वाने रोदने च (आ)। |
| | आह्वाने—च। | √कल् (कल) शब्द-सख्यानयो (आ)। |
| | आह्लादने रोदने च—काक्ष। | √क्लन्द् (क्लदि) १/ आह्वाने रोदने च (आ)। |
| | रोदनाह्वानयो—हे। | |
| | रोदने आह्वाने—वो। | |

क—केल्=आह्वाने, क्रन्दने-वा पॉकर्नी। विस्तार * क्(ए) लेम्(लेति क्ला—आरे)-जू पॉकर्नी।

ग—तस्य वज्र क्रन्दति-ऋ १,१००,१३। क्र दद्दश्वो रुवद्गौ -ऋ १,१७३,२। क्रन्ददाध्ये शिवायै-ऋ १०,९५,१३। क्रन्देत्-शब्रा ११,८,१,१। क्रौञ्ची क्रन्दन्तीम्-वा रा १,२,१७। त्राहीति चार्ता क्रन्दन्ति-मा पु १५,६८=आह्वयन्ति।

घ—कन्दति-मिलिन्दपञ्ह २,१४८।

ङ—कदइ-पि २३१।

छ—√कॉदना (<क्रन्दनम्। वग)=रोदने, चीत्कारे।

| | | |
|---|---|---|
| √क्रन्दु (क्रदि) १/७६६ वैक्लव्ये (आ) घटादि<br>श × | क्षी मै-सा च कात-शा हे-वो।<br>'वैकल्ये' इति चन्द्र -क्षी।<br>आह्वानरोदनयो —जै ?<br>आह्लादने रोदने च-काकृ ?<br>वैकल्यविकलत्वयो —वो। | √कदु (कद) १/ वैक्लव्ये (आ)।<br>√कन्दु (कदि) १/ वैक्लव्ये (आ)।<br>√क्रदु (क्रद) १/ वैक्लव्ये (आ)।<br>√क्लदु (क्लद) १/ वैक्लव्ये (आ)।<br>√क्लन्दु (क्लदि १/ वैक्लव्ये (आ)। |

विक्लव = कातर -क्षी।

ग—क्रन्दयते-(प्रेर) क २७,२, क्रन्दमानमत्यर्थम्-मभार ३,२३८१, वा रा २,२४,४१, दह्यमान क्रन्दमान हतस्त्रीसुतगोधनम्-स्क पु ३,१३,२०।

| | |
|---|---|
| √क्रप् (क्रप) १/७६४ कृपायाम् (आ) घटादि।<br>श × | क्षी-मै काकृ कात शा हे-वो।<br>कृपाया गतौ—मै-सा। √कृप् १/७७४ ऋत्। |
| (जै-√कृप [कृपै]) | कृपायाम्—जै। |
| √कृप् | विलापे, शोके—ह्वि। |

क—क्रेप्-, कृप्=शरीरम्, आकृति।

ख—अवे कृृफ्स्, केहृपो (षष्ठी)=आकृति, घटनम्, म पसि कर्प=कलेवरम्, सामग्री। वा पॉर्कर्नी।

ग—अक्रपिष्ट-ऋ ७,२०,९। अस्माद् धातो √कृप् १/७७४ धातोर्भेद सम्प्रसारणमात्रक। वस्तुतो द्वावेव धातू अभिन्नौ ज्ञानीयौ।

| | | |
|---|---|---|
| √क्रम् ( क्रमु ) १/४६९ श | पादविक्षेपे ( प )। क्षी-मै-सा-जै काक्-कात-शा हे। पाद्विहरणे—च। गतौ—वो। | √कम्ब् १/ गतौ ( प ) वो। √कर्ब् ( कर्ब ) १/ गतौ ( प )। √गम् ( गम्लृ ) १/ गतौ ( प )। √घम्ब् १/ गतौ ( प ) वो। √क्रिम् १/२२२b पादविक्षेपे ( प ) काक्। |

ग—आ अक्रमीत्—ऋ ९, ६४, २९, मा ३, ६, का ३, १, ६, तै १, ५, ३, १। क्रामति-षब्रा १, ७, क्रमते-शब्रा १, ६, ३, ३३, तैब्रा १, ३, ५, ४, क्रमयति-शब्रा ११, ७, २, १।

घ—कमति-सुत्तनिपात १७६।

ङ—√कम ( सक )=( १ ) चलने, ( २ ) उल्लङ्घने, ( ३ ) प्रसरणे, ( ४ ) सत्तायाम्-विसे २४६।

ङ—√कम ( सक ) = ( १ )साङ्गत्ये, ( २ ) आधिक्ये। कमइ-पिंड २३१, पव ६१।

| | | |
|---|---|---|
| √क्री ( डुक्रीञ् ) ९/१ श | द्रव्यविनिमये ( उ ) क्षी मै सा-च-जै-काक् कात शा हे। द्रव्यपर्यये—वो। | √कृ ( डुकृञ् ) ८/ करणे ( उ )। |

क—कुरेइ=क्रये। पु रसन्-क्रिनुति, क्रेनुति=क्रये, पु इरि कुरिम्-जू पॉकर्नी।

ग—क्रीणाति-ऋ ४, २४, १०, तै १, ८, १८, १, मै २, ४, २, काठ १२, ११।

घ—केतुम् ( <क्रेतुम् )-जातक ३, २८२।

ङ—√कीण ( सक ) = द्रव्यविनिमये। भवि-कीणिस्स-पि ५११।

ङ—√किण ( सक )=द्रव्यविनिमये। वक्-किणत-सुपा ३६६।

छ—√कीनना ‡ ( सक ) = द्रव्यविनिमये।

| | | |
|---|---|---|
| √क्रीड् ( क्रीड ) १/३४६ श | विहारे ( प )। क्षी-मै-सा-च-जै-काक्-कात-शा-हे। खेले—वो। | √किल् (किलृ) ६/ श्वैत्य-क्रीडनयोः ( प )। √क्री ( डुक्रीञ् ) ९/ द्रव्य-विनिमये ( उ )। |

| | | |
|---|---|---|
| | | √केल्ट ( केल्ट ) १/ चलने ( प )। |
| | | √क्वेल्ट १/७०१ चलने (प) जै, ४४६ हे। |
| | | √क्नेल्ट (क्नेल्ट) १/ चलने ( प ) |
| | | √कैल्ट १/२४७ f गतौ (प) काक्र। |
| | | √खेल्ट ( खेल्ट ) १/ चलने ( प )। |

क—के̀र्=शिखरम्। लैति क्रीनिस्=केश, तन्तु, सूत्रम्, क्रिस्त्=कङ्कतिका, पर्वतपृष्ठम्। सस्कृ (*क्रिज्-द्)-त्रा पॉकर्नी।

ग—क्रीडति-ऋ ९, ६६, २९, क्रीळन्ति क्रीळा विदथेषु घृष्वय -ऋ १, १६६, २। क्रीडते-योशि १, ४३, कृ १८, सार २५६ ९, शि ४, २७।

घ—कीळति-विनय ८, ११२।

ङ—√कील ( अक )=क्रीडायाम्। कीलइ-प्राप्र।

ङ—√किड्ड ( अक )=क्रीडायाम्। वक्रु-किड्डुत-पि ३९७।

| | | |
|---|---|---|
| √क्रु ( क्रुङ् ) १/९३८ क्षी-मै-श च जै काकृ कात शा-हे वो × | गतो (आ) कचित्-सा। सा। रूक्षतायाम्—ह्वि। | <√क्लु ( क्लुङ् ) गतौ ( आ )। √कु ( कुङ् ) १/ गति-शोषणयो ( आ )। द्रष्ट √कु ( कुङ् ) १/९३७। |

ग—क्रवणस्य-ऋ ५, ४४, ९, क्रविष्णु -ऋ १०, ८७, ५, क्रव्यम्-मै ३, १०, १, क्षीरस्वाम्यपि √क्रु ( क्रुङ् ) गतौ ( आ )-धातो क्रव्य साधयति-अ को २, ६, ६३ परन्तु स क्षीरतरङ्गिण्या धातुमेन न सस्मार। स्यात् पाठभ्रंश

| | | |
|---|---|---|
| +√क्रुञ्च ( क्रुन्च ) १/१८२ श शा × | गतौ ( प )। क्षी च-हे। कौटिल्याल्पीभावयो — मै सा-जै-काकृ-कात। गत्या वक्रणे तौन्छये—वो। | √क्रु ( क्रुङ् ) १/ गतौ ( आ )। √क्रुञ्च ( क्रुन्च ) १/ गति-कौटिल्याल्पीभावयो ( प )। |

क—(स्)क्रॉइ-क्- लैति क्रुक्स्=ईशोर्वधस्य काष्ठफलकविशेष (क्रॉस)-जू पॉकर्नी ।

ग—क्रुञ्च्०-वा स २५, ६, क्रुड् (ञ्च्) [ क्रुञ्चति=वक्र यथा स्यात् तथा गच्छति । ऋत्विक्० ३/२/५९ इति साधु ]-यजुर्वे १६ (१९), ७२ (वा स)।

छ—खोच (<क्रुञ्चि )=प्रसृति-(=अर्धाञ्जलि)-मित पदार्थ, प्रसृतिर्वा । इय प्रसृतिर्निकुञ्जेन पाणिना सम्पद्यत इति धातो कौटिल्यात्नीभावो चरितार्थौ ।

| | | |
|---|---|---|
| √क्रुध् (क्रुध) ४/७६ जै ×, श | कोपे (प)। क्षी-मै-सा-च शा हे-वो । राषे—काक्र कात । | √क्रु (क्रुङ्) १/ गतौ (आ) सा । |

ग—अचुक्रुधत्-ऋ ५, ३४, ७, क्रुध्यति-शौ ४, ३६, १०, शब्रा ३, २, २, २४ । क्रुध्यस्व—खिसा २९, २७ ।

घ—कुज्झति-अगुत्तर १, २८३ ।

ङ—√कुढ़ना=ईषत्कोपे, ईर्ष्यायाम् ।

| | | |
|---|---|---|
| √क्रुश् (क्रुश) १/८४१ श | आह्वाने रोदने च (प)। क्षी मै-सा । आह्वाने—च काक्र कात । रोदनाह्वानयो —जै । आह्वानरोदनयो — शा हे । रोदे हूतौ—वो । | √कु (कुङ्) ६/१२० शब्दे (आ)। √क्रु (क्रुङ्) १/ गतौ (आ)। √क्रुञ्च (क्रुन्च) १/ गतौ (प)। √क्रुध् (क्रुध) ४/ कोपे (प)। क्रोशति शब्दकर्मा-निरु २,२५ । |

क—(स) क्(ऑ) रौक्

ख—रुस्रओसइति=आह्वाने, क्रन्दने-जू पॉकर्नी ।

ग—इन्द्र क्रोशन्त-ऋ १०,९५,४ । क्रोशति-जै १६५ । क्रोशतु-शौ ११, ११,७ । क्रोशन्ती-वा रा १, ५४, ७ ।

छ—√कोसना (<क्रोशनम्)=शापे, दुर्वचने ।

छ—√खुसना-खु ख—=क्रोधे।

| | | |
|---|---|---|
| √क्रूड् ( क्रूड ) १०/ | घनत्वे ? ( प )। | √क्रुड् ( क्रुड ) ६/ घनत्वे ( प )। |
| अपाणिनीय | ब्योथ-रॉथ ह्वि । | √क्रुड् ( क्रुड ) ६/ घसने ( प ) काकृ। |
| | | √कूड् ( कूड ) ६/ धान्ये भक्षे च ( प ) वो। |

क—क्रॉइ=क्रॉइए=घनम् , स्थूलम्।

ख—अवे क्सुरुज्द्र, क्सुरूज्द्र=क्रूरम् , कठोरम् , घनम्-वा पॉकर्नी ।

ग—क्रूडयति, अक्रूडयत्—काठ ६, ३, क ४, २। क्रूडयेत्—काठ ६, ७, क २, ६।

| | | |
|---|---|---|
| √क्लथ् ( क्लथ ) १/७९४ | हिंसार्थे ( प ) मित् | √क्रथ् ( क्रथ ) १/ हिंसार्थे ( प )। |
| श × | क्षी मै सा-कात शा-हे। हिंसायाम्—च-जै-काकृ। वधे—वो। परिवर्तने ?—ह्वि । | √श्रथ् ( श्रथ ) १/ हिंसार्थे ( प ) मित्। |

ग—क्लथन्—मा ३९, ५ [ सपा क्लथत्<>क्वथत् इति पाभे ]। क्लथन्—वा सं ३९, ५ ( क्लथन मध्ये घृतस्यावर्तनम् )।

| | | |
|---|---|---|
| +√क्लद् (क्लद) १/७६७ | वैक्लव्ये ( आ ) इति नन्दी—क्षी क्षी मै-सा-जै कात-हे। वैकल्ये—इति चन्द्र — क्षी। क्षी-सा-काकृ। च ? शा ? वैक्लव्यविकलत्वयो — वो। | <√क्ल द् ( क्लदि ) वैक्लव्ये ( आ )। √क्रद् १/७६६ धातुर्वीक्षणीय , तेनैव च सम्बन्धो योजनीय । |

ग—अवस्थस्य क्लदीवत.—अ वे ७, ९०, ३।

| | | |
|---|---|---|
| √क्लन्द् ( क्लदि ) १/६९ श × | आह्वाने रोदने च ( प ) क्षी मै सा कात। आह्वानरोदनयो — जै-शा। रोदनाह्वानयो —हे। रोदने आह्वाने—वो। | √क्रन्द् १/७६६ वत्। √क्रन्द् १/६८ वत्। |

क—√क्रन्द् १/६८ प्रेक्षणीय।

ग—( अप्सरस ) या क्लन्दास्तमिषीचयोऽक्षकामा —अ वे २, २, ५।

| | | |
|---|---|---|
| √क्लन्द् ( क्लदि ) १/७६७ मै श जै-कात × | वैक्लव्ये ( आ ) क्षी-सा-च-शा हे। वैकल्ये इति चन्द्र — क्षी। क्षी-सा-काकृ। वैकल्यविकलत्वयो — वो। | √क्रन्द् १/७६६ वत्। |

विक्लव =कातर —क्षी।

ग—क्लन्दते—अशि ४, १०, वद्ध ३१६ ४।

| | | |
|---|---|---|
| √क्लम् ( क्लमु ) ४/९४ | ग्लानौ ( प ) | √क्रम् ( क्रमु ) १/ पादविक्षेपे ( प )। |
| श | क्षी-मै-सा-च-काकृ-कात-हे वो। ग्लाने—जै शा। | √ग्लै १/ हर्षक्षये ( प )। √श्रम् ( श्रमु ) ४/ तपसि खेदे च ( प )। |

क—क्लॅम्—, क्लेम्=शिथिलम्, ग्लानम्—जू पॉकर्नी। पु क्रेटॉ क्लॅन्व्=व्याकुलम्, अस्वस्थम्, लैति क्लॅमॅन्स्=मृदु। पु इरि क्लम्—कुष्ठिन्—वा पॉकर्नी।

ग—आक्लान्तम्—पै ११, २, ७। क्लामयति—अशि ४, १०, वद्ध ३१६ ४। क्लान्ता-वा रा २, ४२, १९=पीडिता ( तिल )।

घ—किलमति—विनय २, १५, किलमेति ( ना धा किलम् इत्यस्य )—जातक १, ११५।

ङ—√किलम्म ( अक )=ग्लानौ। किलम्मइ—कप्पू।

| | | |
|---|---|---|
| √क्लिद् ( क्लिदू ) ४/१२९ काक्ृ-कात ×,श | आर्द्रभावे ( प ) क्षी-च जै-शा हे । आर्द्रीभावे—मै-सा । क्लेदे—वो । | √क्लिन्द् ४/७३ आर्द्रभावे ( प ) काकृ । √क्लिल् ६/ शैत्यक्रीडनयो ( प ) काकृ । √स्विद ( ष्विदा ) ४/ गात्रप्रक्षरणे ( प ) √स्विद् ( ञिष्विदा ) १/ स्नेहमोहनयो ( प ) । |

क—क्लॉन् = आर्द्रत्वे । लिथु क्लनेम् = पल्वलम्, पङ्क, पु आइस् पु गाथि

क्लन्द् = मूत्रम् । लिथु —स्क्लिस्तु, स्कि्लन्दो, स्क्लिस्ति = आपूरे—वा पॉकर्नी ।

ग—क्लिद्यते-१ आ १। तेन क्लिद्यति हि ब्रग -सुश्रु ७,७३,१७ । क्लिन्न,-न्नम्-पै १६,१२४,४ ।

| | | |
|---|---|---|
| +√क्लिन्द्(क्लिदि)१/१५ श× | परिदेवने ( आ ) क्षी-मै सा-च-जै काकृ कात-शा-हे । रुदि—वो | √क्रन्द् ( क्रदि ) १/ आह्वाने रोदने च ( प ) । √क्लन्द् (क्लदि)१/ आह्वाने रोदने च ( प ) । √क्लन्द् ( क्लदि ) १/ वैक्लव्ये ( आ ) । √क्लिन्द् ४/७३ आर्द्रभावे ( प ) काकृ । |

√क्रन्द् १/७६६, √क्लन्द् १/६९ इत्याभ्या जातो विकास स्यादस्य ।

| | | |
|---|---|---|
| +√क्लिन्द्(क्लिन्दि)१/७० श× | परिदेवने ( प ) क्षी-मै सा च-जै-काकृ-कात शा-हे । रुदि—वो । | पूर्ववत् । |

मरस्मैपदार्थं पृथक् सख्यात स्यात् । तच्चोभयपदित्वादेव सिद्धम् ।

√क्लिश (क्लिश) ४/५० उपतापे (आ)

श

क्षी मै सा च जै काकृ
कात शा-हे।
उपतपे—वो।

√कल् (कल) १/ शब्दसंख्या
नयो (आ)।
√क्लिद् (क्लिदृ) ४/आर्द्रभावे
(प)।
√क्लिन्द् (क्लिदि) १/ परि
देवने (आ)।
√क्लिश् (क्लिशू) ९/ विबा
धने (प)।

क—क्लाइकू=पीडने, निष्पीडने। लिथु क्लिसे=क्लेश। च स्लॉ क्लेस्त्
=सदृशिका, उपरितनदष्ट्रास्थि, क्लेरितुति। čech (बाहे)-स्-म्लेस्नॉउति=
दार्ढ्येन ग्रहणे, पीडने, निष्पीडने-वा पॉकर्नी।

ग—क्लिश्यते-यो ७,२५, तव हेतोर्वयं बाले परिक्लिश्यामहे-वा रा
५,७५,३७। क्लिश्यसे प्राकृतो यथा- वा रा ४,१६,२७। अय परार्थे क्लिश्यन्ति-
मनु ८,१६९।

घ—किलिस्सति-थेरगाथा १,९५४।
ङ—√किलिस (अक)=खेदे, श्रान्तौ। वक्र-किलिसत-पउम २१,३८।
ङ—√कीस (अक)=खेदे, श्रान्तौ। कीसंति-उत्त १९,१५, वै ३३।
ज—√केसेद्'=अवरोधे, विघ्ने।

√क्लिश् (क्लिशू) ९/५० विबाधने (प)

श

क्षी-मै-सा जै-काकृ-
कात शा हे।
बाधने—च।
विबाधे—वो।

√क्लिश् (क्लिश) ४/उपतापे
(आ)।
पूर्ववत्।

क—पूर्ववत्।

ग—सुदृढं क्लिश्नाति-मभार ७,२३,५१। क्लिश्नाति-सुश्रु १,१८१,७०,
कुमारस ७,४०। क्लिश्नाति लब्धपरिपालनवृत्तिरेव-शाकु १०३।

ज—√केसेद्'=अवरोधे, विघ्ने।

+√क्लीब (क्लीबृ) १/३७८ अधाष्टर्ये (आ) क्षी-मै सा-काक्रु। आधाष्टर्ये—च-कात-शा हे। बान्तवत् (=अधाष्टर्ये) —बो। √क्लीन् १/ अधाष्टर्ये (आ) बो।

जै—√क्लीव् (क्लीवृङ्) अधाष्टर्ये [ च ]—जै।

क—केल्-, केला=खण्डने, घटने, भङ्गे। ओगव्यविस्तार-लिथु वलुम्बस्=पङ्गु, निर्बलम्-वा पॉकर्नी।

ग—क्लीबक्लीब त्वाकर वध्रे-अ वे ६,१२८,३, वा स ३०,५। क्लीब-मा ३०,२२, का ३४,४,४, तै २,३,३,८, मै २,४,२, काठ १२,११। विक्लीयते-मभाग्य ३,१,११ १०१, महाभाष्यप्रयोगेणाय वकारान्तोऽपीति गोपजैनेन्द्रमत पुष्णाति।

(ठ-√किलपना-(<क्लीबनम्)>√कलपना=दुःखे, विलापे।

+√क्लु (क्लुङ) १/९६६ गतौ (आ) इत्येके-मै <√प्लु (प्लुङ्) गतौ (आ)। √क्रु (क्रुङ्) १/९३९ गतौ (आ) इति। क्वचित् पठ्यते-सा।

क्लव, क्लुव इति बवयोरभेदाद् द्रष्टव्यम्-सा ९३९।

क—क्लोइ तथा क्लाउ=ग्रहणम्, कौटिल्यम्-वा पॉकर्नी।
क—प्लु(ए)उ, प्लेउ-टिओ=क्लोमन्। लैति पुल्मो=क्लोमन-वा पॉकर्नी।

ग—क्लवितमऽइव—सब्रा १। क्लोशम् अनुष्वणि-ऋ ६,४६,१४ [क्लु (=क्रु) श् (आह्वाने)] विक्लब =कातर। विक्लवन्ते दिवि ग्रहा-श्रीभोज। विक्लव दूतमासाद्य-वा रा ५,२,३९। वैक्लव्यम्-वा रा ५,२,४१। क्लोमहृदयम्-शब्रा ४,५,४,६, काल्या श्रौ ६,७,११।

+√क्लेव् (क्लेवृ १/५०१ सेचने (आ) इत्यपि— क्षी-मै श-च-जै-काक्रु-कात सा। शा-हे-बो× <√ग्लेव् (ग्लेवृ) सेचने (आ) सा। √केव् (केवृ) १/ सेवने (आ)-क्षी।

√खेव् (खेवृ) १/
सेवने (आ)-क्षी।

√क्लिद् (क्लिदू) ४/
आर्द्रीभावे (प)।

नेहैकमता सर्वे वैयाकरणा । सायणोऽपि पाठान्तरमेवोद्धरति न तु स्वकीय मतम् । एव सत्यप्यय धातु कमपि सम्बन्ध दर्शयति-√केव् >( ककारोत्तरलकार-प्रवेशे )>√क्लेव्>√ग्लेव् । अत्र दण्डक गत धातून् केचन क्षीरादय सेवनार्थकान् वदन्ति केचिन्च मैत्रेयादय' सेवनार्थकान् । √क्लेव् धातु √क्लिद् ४/ आर्द्रीभावे (प) इति धातुना महत् सादृश्य धत्ते । एतन्निष्पन्नक्लेदशब्दस्य दकारावकाशे ग्ङ्धे सति 'क्लेव' इति जायते । अस्तीहैव किमपि साङ्कर्यम् ।

| | | |
|---|---|---|
| +√क्लेश (क्लेश) १/६०७ श × | च व्यक्ताया वाचि (आ) क्षी मै जै-शा । सभ्या पृथक् पेठु -क्षी । | √भिक्ष् (भिक्ष) १/ क्लेशे च व्यक्ताया वाचि (आ) । |
| | भाषणे—क्षी । अव्यक्ताया वाचि-सा । | √क्लिश् (क्लिश) ४/ उपतापे (आ) । |
| | 'बाधने' इति दौर्ग-सूत्रम्—क्षी । क्षी सा-च-काक्ृ कात । विबाधने व्यक्ताया वाचि च—हे । वदे उपतपे—बो । | √क्लिश् (क्लिशू) ९/ विबाधने (प) । |

तत्तद्देशप्रसिद्धार्थाना पृथङ् निर्देश -क्षी ।

ग—[ क्लेशते न वृथा वाक्यम्-हला ९२ ] व्यक्तवचने निर्देश' । वस्तुतोऽत्र निर्णय॰ दुष्कर । "तद्देशप्रसिद्धार्थाना पृथङ् निर्देश" इति क्षीरस्वाम्युक्ति-र्निकाम भाति ।

| | | |
|---|---|---|
| √क्वण् (क्वण) १/४४७ श × | शब्दार्थ (प) क्षी मै सा-च । | √कण् (कण) १/ शब्दार्थ (प) । |
| | शब्दे—जै-काकृ-कात-शा-हे-बो । | √कुण् (कुण) ६/ शब्दोप-करणयो॰ (प॰) । |

शब्दे—ह्वि । √खुण् १/२०७J शब्दे (प) काकृ ।
√गुण् १/२०७m शब्दे (प) काकृ ।

ग—क्वणति-सौ ७,१० । क्वाणनम्-छाग ७५ १७, कुणारुमिति-निरु २,७५ (√क्वण् शब्दार्थ -कुणारु —दुर्गाचार्य )।

ङ—√कण (सक) = शब्दे । वकृ-वज्जा ६६ ।

√क्वथ् (क्वथे) १/८३० निष्पाके (प)
श × क्षी मै सा-च-कात शा हे ।
निष्पचने—जै वो ।
पाके—काकृ ।

क—कु अत् (इ्) = फेनोत्पादने, क्वथने । पु बुल्गा (स्)क्यस्नोति-, क्यसेति = अम्लीभावे । लैति कुअतियो = उत्तेजने, चालने-जू पॉकर्नी ।

ग—क्वथन्—तैआ ५, ११, ४ । यवागू क्वथिताम्—मनु ६, २०, सुश्रु २, ४१८, ५ ।

घ—कठति = क्वथने—विनय १, २०५ ।

घ—√कुथ् (कुथ) = क्वथने—जातक ६, १०५ (कुथन्तो) ।

ङ—कढ (सक) = क्वथने । वकृ—कढमाण—पि २२१ ।

छ—√काढना—पाके ।

+√क्षज् (क्षज) १/७६७ गतिदानयो (आ) इति कौशिक —क्षी <√क्षञ्ज् (क्षजि) गति दानयो (आ)।
मै श-च जै-काकृ कात-शा-हे । क्षी-सा । दागत्यो —वो । √क्षज् १०/७८ क्षान्तौ (प) कात ।

वैदिकेन हिंसाविभाजनदानार्थकेन√क्षद् (आ) धातुनाऽस्य सम्बन्ध साध्यताम् ।

+√क्षञ्ज् (क्षजि) १/७६७ गतिदानयो (आ) मित् >√क्षज् (क्षज) गतिदानयो (आ) इति कौशिक —क्षी ।
श × क्षी-मै-सा-जै-शा-हे । गतौ—च । √जङ्क् १/१००१ गतिदानयो (आ) हे,

| | | |
|---|---|---|
| | दाने गतौ च—काकृ कात। दागत्यो —वो। | गत्या दाने च (आ) वो। √खङ्ग् १/३८ u गतौ (प) काकृ। (√स्वङ्ग इत्युचितम्। भातीय लैपिकी त्रुटि। कातन्त्रेऽपि√स्वङ्ग् पठ्यते)। √क्षञ्ज् (क्षजि) १०/ ८४ कृच्छ्रजीवने (प)। |

√क्षज् >√क्षञ्ज् ( वर्णविपर्यय )>√जङ्क्ष्—हे १/१००१, वो, इत्यस्य लभ्यते विकासो न तु प्रयोग । पुनरपि चुरादौ कृच्छ्रजीवनार्थको जात ।

| | | |
|---|---|---|
| √क्षण् ( क्षणु ) ८/२ श | हिंसायाम् ( उ ) क्षी मै सा-च जै काकृ-कात-शा हे। वधे—वो। | >√क्षिण ( क्षिणु ) हिंसायाम् ( उ ) इति च दुर्ग —क्षी। √क्षण् १/२०७gg शब्दे ( प ) काकृ। |
| √क्षण् ( क्षनु क्षी मै च-जै काकृ श कात शा × | हिंसायाम् ( उ ) इति धातुपारायणे—मै। मै सा हे। वधे—वो। | √क्षि ५/ हिंसायाम् (प)। √क्षि ( क्षिष् )९/ हिंसायाम् ( प )। |

क—क्षन = क्षतौ, हिंसायाम् ।

ख—अक्स् सृत = अक्षतम्—वा पॉकर्नी ।

ग—क्षणुते-शब्रा ४, ४, ३, १३ । क्षण्वीत—तैब्रा ३, ७, १०, १ ।

ङ—√छण ( सक )=हिंसायाम् । छणे—आचा ।

ङ—√छण ( सक )=छेदने । छणह—सूअ २, १, १७ ।

| | | |
|---|---|---|
| अ √क्षद् ( क्षद् ) पा णि नी यः | सवृतो ( आ ) सो धा —वो। हिंसाया विभाजने दाने च—वै प को,। विभाजने—ह्वि । | √खद् ( खद ) १/ स्थैर्ये हिंसाया च ( प )। √क्षज ( क्षज ) १/ गतिदानयो. ( आ )। |

ग—होतेव क्षदसे प्रियम्—ऋ. १, २५, १७; क्षदामहे—शौ. ( अ. वे. ) १०, ६, ५; पै. १६, ४२, ५।

| | | |
|---|---|---|
| √क्षम् ( क्षमूष् ) १/४३५ | सहने ( आ ) | √शम् ( शमु ) ४/उपशमे ( प )। |
| श × | क्षी-मै-सा-च-जै-काकृ-कात-शा-हे। | √क्षम् ( क्षमूष् ) ४/ सहने ( प )। |
| | मर्षे—वो। | क्+√शम् ४=√क्षम्-इति वागीशः। |

क—घुएम्-, घुओम्-, घम्=क्षमा ( पृथिवी )—वा. पॉकर्नीः।

ग—अभिक्षमध्वम्—ऋ. २, २८, ३। क्षमन्ते—गोब्रा. २, ५, ९। क्षमते—मनु. ८, ३१३। क्षमस्व—वा. रा. ४, २६, २५। क्षमते—मभार. ३, १०३५। क्षमेत्—शि. ५, ३९।

ङ—√खम ( सक )=क्षमायाम्, ( २ ) सहने। खमइ—उवर. ८३, महा.।

ङ—√खाम ( सक )=क्षमायाचने। खामेइ—भग.।

ज—खमा=क्षमायाम्।

| | | |
|---|---|---|
| √क्षम् ( क्षमूष् ) ४/९३ | सहने ( प ) | |
| मै-श-जै-शा-हे-वो × | क्षी-सा-च-काकृ-कात। | पूर्ववत्। |
| √क्षम् ( क्षमू )...... | सहने (प) इति | |
| श-च-काकृ-कात × | सभ्याः—क्षी। | |
| | क्षी-मै-सा-जै-शा-हे। | |
| | मर्षे—वो। | |

ग—क्षम्यताम् ( कर्मणि ? )-सार. २९२ : २१।

छ—√क्षमना * } =क्षमायाम्।
छ—√क्षमना † }

| | | |
|---|---|---|
| √क्षर् ( क्षर ) १/८३५ | सञ्चलने ( प ) | क्+√शल् (शल) १/ चलनसंवरणयोः (आ)=√क्षल्। |
| श × | क्षी-मै-सा-च-जै-काकृ-शा-हे-वो। | √क्षल् ( क्षल ) १/ सञ्चये, |
| | चलने सञ्चलने च—कात। | च=सञ्चलने ( प )। |

| | | |
|---|---|---|
| | | √शल् ( शल ) १/ आशु-गमने ( प )। |
| | | √शल् (शल) १/गतौ (प)। |

क—गुहएर् = प्रवाहे, सञ्चलने।

ख—ज्जुरइति = क्षरति।

ग—क्षरन्ति-ऋ १,७२,१०, क्षरति-ऐआ २,२,२, तैब्रा २,४,६,१२, क्षरते-अना २५। क्षरते-मभार ३,२७,२५ = प्रकाशयति ( नील )।

ङ—√खर ( अक ) = श्च्योतने, ( ? ) नाशे। खरइ-विसे ४५५।

ङ—√खिर ( अक ) = श्च्योतने। वक्त-खिरत-पउम १०।

ङ—√झर ( अक ) = श्च्योतने। वक्त-झरत-कुमा, सुर ३,१०।

छ—√छरना (<क्षरणम् ) = श्च्योतने।

छ—√झरना * † (<क्षरणम् ) = श्च्योतने, जलधारादिपाते।

छ—√झडना ( <क्षरणम् ) = श्च्योतने, बिन्द्वादिरूपेण पाते।

| | | |
|---|---|---|
| +√क्षल् (क्षल) १/८३६ मै-श-च-जै-काक्र-कात शा-हे× | सञ्चये, च = सञ्चलने (प) क्षी। सञ्चलने—सा। √क्षर् इत्यत्र सायण आह-अत्र√क्षल् सञ्चलने इति क्वचित् पठ्यते चाले चये—वो। | √क्षर् (क्षर) सञ्चलने (प)। पूर्ववत्। √खल् ( खल ) १/ सञ्चये, च = चलने ( प )। √स्खल् ( स्खल ) १/ चलने ( प )। √खल्ल् १/२४८ b चलने ( प ) काक्र। |

छ—√छलकना (<क्षलनम् ) = सञ्चलने, पात्रात् सोच्छाल ( जलादेः ) बहिष्पतने।

छ—√झलना (<क्षलनम् ) = सञ्चलने, व्यजनादिचालने।

| | | |
|---|---|---|
| √क्षि १/२३३ श-जै-शा× ( काक्र-√क्षी ) | क्षये ऐश्वर्ये च ( प ) (यु मी स 'क्षये' इत्येव)। क्षी-हे। क्षयैश्वर्ययो—वो। क्षये—मै-सा-च कात-शा हे। ( मै-सा )-काक्र। | √क्षि ५/ हिंसायाम् ( प )। √क्षि ( क्षिष् ) ९/ हिंसायाम् ( प )। √क्षि १/ ऐश्वर्ये ( प ) इत्येके—क्षी। √क्षै १/ क्षये ( प )। √सै १/ क्षये ( प )। √जै १/ क्षये ( प )। |

क—क्षे ( इ )-, क्षू( इ )=प्राप्तौ, अर्जने, जये ।

ख—अवे क्स्सुयति=क्षयति-जू पॉकर्नी । क्स्सु येइति=क्षयति (शक्तौ)-वा पॉकर्नी ।

ग—त्वमस्य क्षयसि यद्ध विश्वम्-ऋ ४,५,११, यो विश्वस्य क्षयति-ऋ ५,४७,११ । तेजश्च शोक क्षयति-वा रा ४,६,१४ ।

ङ—√खिं ( अक )=क्षये । कर्म-खिज्जइ-स ६८४ ।

ङ—√झिज्झ ( अक )=क्षये । कवकृ-झिज्झत, झिज्जमाण (<क्षीयमाण)-से ५, ५८, उप ७७८ टी ।

ठ—√छीजना ( <क्षीय [ माण ] )=क्षये, नैयून्ये ।

√क्षि १/९३३ ऐश्वर्ये (प) इत्येके-क्षी । पूर्ववत् ।
मै-सा श-च-जै-काकृ क्षी हे-वो ।
कात-शा ×

क—,ख—पूर्ववत् ।

ग—क्षयति-ऋ १,३७,१५, मै ४,१४,१३, शौ ५,७,८ । ०क्षयात्-मभार १७, ३, ३०३, ७ =०सामर्थ्यात् ( नील ) ।

'क्षयैश्वर्ययो' इति पूर्वधातुनैव 'ऐश्वर्यार्थस्य' गतार्थत्वात् पृथक् सख्यातिर्न समीचीना ।

√क्षि ५/२९ हिंसायाम् ( प )
श-जै काकृ-कात-शा× क्षी मै-सा हे-वो ।
च ?

√क्षिण् ( क्षिणु ) ८/ हिंसायाम् ( उ ) इति दुर्ग — क्षी ।
√क्षि ( क्षिष् ) ९/ हिंसायाम् ( प ) ।

क—कुह्सेइ=दौर्बल्ये, नाशे-वा पॉकर्नी ।

ग—सिंही हैन भूत्वा क्षिणोति—शब्रा ३,५,१,७५ । क्षिणोमि-तैआ २,५३ । अक्षिण्वन् योगतस्तनुम्-मनु ७,१०० ।

√क्षि ६/१२६ निवासगत्यो ( प )
श क्षी-मै-सा जै-काकृ-कात-शा-हे । पूर्ववत् ।
निवासे—च । क्षियति-निघण्टौ
वासगत्यो —वो । २/१४ गतिकर्मा ।

क—कु सेइ = निवासने, स्थापने ।
ख—अेवे सुएइति = क्षिति', सोइथ = क्षेत्रम् ।

ग—क्षियन्ति सुक्षितिम्—ऋ ७,७४,६ । क्षेति-ऋ १, ८३, ३, को ७, ५४८। क्षियते-काठ १९,३ । क्षयम्-मभार ८१,१,२,२ = गृहम्-( नील )।

√क्षि ( क्षिष् ) ९/३५ हिंसायाम् (प)
मै-सा-जै काकृ× क्षी कात शा हे वो । पूर्ववत् ।
च ?

क—√क्षि ५/२९ वत् ।

ग—क्षिणाति-ऋ १०,२७,१३ । क्षिणन्ति शत्रून्-ऋ ६,७५,७। क्षिणामि-अ वे ३,१९,३ ।

+√क्षिण् ( क्षिणु ) ८/३ हिंसायाम् ( उ ) इति
श च शा × दुर्ग —क्षी ।
क्षी मै सा जै काकृ कात हे ।
वधे—वो । पूर्ववत् ।

√क्षिण् ( क्षिनु ) ८/४ हिंसायाम—मै ।
क्षी-श-च जै-काकृ-कात-
शा ×

क—पूर्ववत् ।
ग—क्षिणुयात्-काव्रा २, २, ४, ५, आक्षिणकेभ्य –मै २, ९, ९।

'आक्षिणकेभ्य" इत्यत्र नून √क्षिण धातुरवधेय । तिङन्तरूपाणि त्वस्य √क्षि ५/२९ वदेव भवन्ति–इति केचनेम तानादिक नाङ्गीकुर्वन्ति । यदाह नागेश-भट्टो बृहच्छब्देन्दुशेखरे—"क्षिणु इत्यादि प्रयोगास्तु "बहुलमेतन्निदर्शनम्" इति √क्षि धातु स्वादावप्यङ्गीकृत्य समाधेया –इत्यन्ये"–पृ स १७९२ । एव सत्यप्येष 'आक्षिणकेभ्य ' इत्यादिसिद्ध्यर्थं तनादौ स्वीकरणीयो भवत्येव ।

+√क्षिप् ( क्षिप ) ४/१३ प्रेरणे ( प )। √क्षि ६/ निवासगत्यो ( प ) ।
श क्षी मै सा-च-जै-काकृ-कात-शा हे । √क्षिप् ( क्षिप ) ६/ प्रेरणे ( उ ) ।
तुदि—वो ।

√क्षिव् ( क्षिवु ) ४/ निरसने ( प )।
√क्षिप् १०/२६० प्रेरणे (प) काकृ। २४१ कात।

ग—क्षिप्येत्–छान्दो ८, ६, ५ [ इति निमा ], वासुकेरथ नागस्य सहमा क्षिप्यत सुरै–मभार १, ११२६।

क्षीरस्वामी √क्षिप् धातोर्दैवादिक पाठं नवीन मन्यते। तेन प्रमाण नोक्तम्। सुधाकरस्तु धातोरेतस्य दैवादिक पाठमयुक्त घोषयति पारायणिकाना मतन– "पारायणिकै क्षिपेरिह पाठोऽयुक्त इति सुधाकरेण भूसूत्रे प्रतिपादितम्"–धा वृ पृ २८४। (४/१४) तेनाप्यस्यासाङ्गत्यहेतुक प्रमाण नोद्धृतम्। मन्ये साहित्ये द्वित्रा एवोपलभ्यन्ते प्रयोगा, इति तेषामनुपलम्भादुपन्यस्तमिन्न स्यात्।

उ—√छीपना=कण्टकनद्धस्य मत्स्यस्य वडिशेन बहि क्षेपणे।

√क्षिप् ( क्षिप ) ६/५ श — प्रेरणे ( उ )। क्षी-मै-सा-च जै, काकृ (प), कात-शा-हे। तुदि—वो। — पूर्ववत्।
√क्षिप् ९/२९० प्रेरणे ( उ ) काकृ।

क—क्सेइप्–, क्सेइब्=प्रक्षेपणे। रसन्–सि॒बति=क्षिपति–जू पॉकर्नी।

ग—अव क्षिपन्–ऋ १०, ६८, ४, शौ २०, १६, ४। अभिक्षिपन्–ऋ ५, ८३, ३। क्षिपसि–शौ ९, १, १०।

ड—√खिव (सक)=१–क्षेपणे, २–प्रेरणे, ३–पातने, वेशने। खिवइ, खिवइ–महा। कवकृ–खिप्पत–काल।

छ—√खेवना, छ—√खेना (<क्षेपणम्)=नौचालने, (२) यापने।
छ—√खेपना (<क्षेपणम्), छ—√छिपना (<क्षेपणम्) =निलयने।
छ—√झेपना, √झेंपना (<क्षेपणम्)=व्रीडायाम्।

+√क्षिव्(क्षिवु)४(१/३७९) निरसने ( प )। मै-सा-श-च जै काकृ-शा- क्षी कात। हे वो ×
•

√क्षिव् ( क्षिवु ) १/ निरसने ( प )।
√क्षिव् ( क्षिवु ) ४/ निरासे ( प ) वो।

√क्षिव् ( क्षिवु ) ४/४b
निरसने ( प ) च काक्ृ।
२४ हे।
शेष पूर्ववत्।

ड—√छिम्भ=असने। क्षिम्भति-सुअ १, ५, २, १२।

| | | |
|---|---|---|
| +√क्षिरि ५/२९ | हिंसायाम् (प) इति दुर्ग—क्षी ( यु मी स )। | √क्षि ५/ हिंसायाम् ( प )।<br>√चिरि ५/ हिंसायाम् ( प )।<br>√जिरि ५/ हिसायाम् ( प )। |

√क्षि+√चिरि=√क्षिरि, इति धातुद्वयसयोगभ्रमे, 'चि' वर्णे त्यक्ते चाय धातु स्याज्जात कैश्चिदप्यस्मृत ।

| | | |
|---|---|---|
| +√क्षिव् ( क्षिवु )१/५६६ | निरसने (प)इति चन्द्र —क्षी | √क्षेव् ( क्षेवु ) १/ निरसने ( प ) इति चन्द्र —सा। |
| श-काक्ृ× | क्षी-मै सा-च जै कात-शा हे। | √क्षिप् ४/ प्रेरणे ( प )।<br>√क्षिप् ६/ प्रेरणे ( प )। |
| | निरासे—बो। | √ष्ठिव् ( ष्ठिवु ) ४/ निरसने। |
| +√क्षी ( क्षीष् ) ९/३६ | हिंसायाम् ( प ) मै | |
| क्षी-श-च काक्ृ-कात शा-बो × | मै-सा हे। | √क्षि ५/२९ वत्। |
| +√क्षीज् ( क्षीज )१/२३२ | अव्यक्ते शब्दे ( प ) क्षी-मै सा च-कात हे। | √सिञ्ज् २/४९ अव्यक्ते शब्दे ( आ ) काक्ृ। |
| श× | शब्दे—जै-शा। | √शिञ्ज् २/४७ शब्दे ( आ ) |
| | हिक्कने—बो। | च। |
| (काक्ृ√कीज् [ कीज ]) स्यात् स्खलति । | सखेदस्वनने—मै। अव्यक्ते शब्दे—काक्ृ। | √कूज ( कूज ) १/२१८ अव्यक्ते शब्दे ( प )।<br>शेष १/२१८ धातौ द्रष्टव्य.। |

क्+√शिञ्ज् २/१७>√क्षिञ्ज्>√क्षीज् इति स्यादस्य व्युत्पत्ति.।

| | | |
|---|---|---|
| +√क्षीब् ( क्षीबृ ) १/३७९<br>श× | मदे (आ)<br>क्षी-मै-सा-च काक्र-<br>कात-शा-हे ।<br>दर्पे—वो । | √क्षीब् ( क्षीबु ) ४ ४ निरसने<br>(प) च । |
| (जै √क्षीव् [क्षीवृ] | मदे—जै । | |

ग—क्षीबं राक्षसशार्दूलम्–वा रा ५,१०,१३ । उत्तरधातोरभिन्नोऽयं बवयोरात्मनेपद–परस्मैपदयोश्च भेदार्थं पृथङ् निर्दिष्टः ।

| | | |
|---|---|---|
| +√क्षीव ( क्षीवृ ) १/५६६<br>मै-श-च-जै-कात-शा× | निरसने (प)<br>क्षी-सा काक्र ।<br>निरासे—वो ।<br>हे ?<br>निरास = फुत्कार —<br>इति भट्टमल्ल । | <√क्षीव् (क्षीवु) निरसने<br>(प) इति चन्द्र —क्षी ।<br>√ष्ठिव् ( ष्ठिवु ) १/ निरसने<br>(प) ।<br>√क्षेव् (क्षेवु) १/५६० निरसने<br>(प) इति चन्द्र —सा ।<br>पूर्ववत् । |

क—स्प् ( ह् ) इएउ- स्पिउ्ऊ-, स्पिउ्=ष्ठीवने—वा पॉकर्नी ।

ग—क्षीवा कुर्वन्ति हास्यं च कलहांश्च तथापरे–वा रा ५,६०,१७, क्षीवन्–भा पु ५,१७,२०, क्षीवता–कथासरि ८,२,५५ ( १३,१० ) । क्षीवस्यान्त करणकरिण –भर्तृ ३,८७ ।

| | | |
|---|---|---|
| √क्षु ( टुक्षु ) २/२५<br>श | शब्दे (प)<br>क्षी-मै-सा-च-जै-काक्र-<br>कात-शा-हे ।<br>क्षुतो—वो ।<br>छिक्काशब्दे—ह्वि । | √कु (कुङ्) ६/ शब्दे (आ)<br>√कु २/शब्दे (प) ।<br>√कु+√शु १/ गतौ (प)<br>=√क्षु ।<br>कु+√सु (षु) २/<br>प्रसवैश्वर्ययो (प)=√क्षु<br>√क्षु १/५५२f गतौ (आ)<br>काक्र ।<br>√खु (खुङ्) १/ शब्दे (आ)। |

क—स्कॉइ्–, स्कोउ–, क्सॉइ–, क्सोइ=छिक्काशब्दे । पु. लिथु स्किऔदेति=छिक्काशब्दे–जू पॉकर्नी ।

ग—क्षुमन्त –ऋ १,३०,१३, तै १,७,१३,५, मै ४,१२,४, काठ ८,१७, कौ १,१५३। क्षवम् (=छिक्का)-शौ १९,८,५, क्षुवीत-मनु ४,४३, क्षविता-आश्व गृह्य ३,६, सुश्रु १,३८,१३, क्षुवतस्तु मनोर्जज्ञे-भा पु १,६,४।

√क्षुद् (क्षुदिर्) ७/६ श — सपेषे (उ) क्षी-शा-हे। सम्पेषणे—मै सा च-काक्ृ कात। सम्प्रेक्षणे—जै। क्षुदि—वो। — क्षोदति-निघण्टौ २/१४—गतिकर्मा।

(क—क्सॉइद=तच्छये, सञ्चूर्णने, पीडने-जू पॉकर्नी)

ग—अक्षोदयत्-ऋ ४,१९,४, क्षोदन्ने-१,५८,६। क्षोदन्ति-ऋ ७,५८,४। तैब्रा २,४,५,२। वातरुग्ण इव क्षुण्ण-मभार ३,६७८। क्षुण्णाद् आमनोर्वर्त्मन परम्-रघु १,१७।

छ—√खोदना=खनने।

√क्षुध् (क्षुध) ४/७७ श — बुभुक्षायाम् (प) क्षी-मै-सा च काक्ृ कात-शा-हे। बुभुक्षणे—जै। क्षुधि—वो। — क्+√शुध् (शुध) ४/ शौच (प)=√क्षुध्। शौचम्=नैर्मल्यम्-क्षी। विकारराहित्येन बुभुक्षा जायते।

ग—क्षुध्यति-काठ २४,७, क ३७,८। अक्षुध्यत्-तै ७,४,३। क्षुधत्-शौ २,२९,४।

ड—खुधा=बुभुक्षा-धर्मस १०६२।

√क्षुभ् (क्षुभ) १/७४२ श — सञ्चलने (आ) क्षी मै सा-च-जै-काक्ृ कात-शा हे। सञ्चले—वो। — क्+√शुभ् (शुभ) १/ दीप्तौ (आ)। √क्षुप् ९/३० गर्वे (उ) काक्ृ, सौ धा—वा।

सञ्चलनम्= रूपान्यथात्वम्—क्षी। — क्षुम्पति निघण्टौ २/१४-गतिकर्मा। क्षुम्पम्-निरु ५,१७,१ =स्पृष्टमात्र

क्षुभ्यते=चलति तस्मा-
त् क्षुम्पम्=क्षोभणम् इति
न्याय्यम्-दुर्गाचार्य ।

क—क्सॉइभ्=कम्पने, सञ्चलने-जू पॉकर्नी ।

ग—क्षोभण –ऋ १०,१०३,१ । क्षोभते-छान्दो ३,५,३, चुक्षुभे द्विषता मन – रघु ४,२१ । =कालुष्य प्राप (स ) ।

ङ—√खुभ (अक ) =भये, सम्भ्रमे । खुभइ-रयण १८ ।

ञ—√खुभना=प्रवेशे ।

ञ—√खुभराना=उपद्रवार्थं चङ्क्रमणे ।

√क्षुभ् ( क्षुभ ) ४/१२६ सञ्चलने ( प )

| | | |
|---|---|---|
| श | क्षी मै सा च-जै काक्ष-कात शा-हे । सञ्चले—वो । | पूर्ववत् । |

क—पूर्ववत् ।

ग—क्षुभ्यसि-वा रा २,३४,४६=मर्यादा त्यजति (तिल ) । सुश्रु १,२७७,२ । क्षुभ्यसि भिक्षुकि-मभार १,३२८९ ।

ङ—√खुब्भ ( अक )=क्षोभे, निमज्जने । वक्त-खुब्भत-ठा ७-पत्र ३८३ ।

ङ—√छुब्भ ( अक )=विचलने । क्षुब्भति-पि ६६ ।

– √क्षुभ् ( क्षुभ ) ९/४७ सञ्चलने ( प )

| | | |
|---|---|---|
| श | क्षी-मै-सा-च जै काक्ष-कात-शा हे । सञ्चले—वो । | पूर्ववत् । |

क—पूर्ववत् ।

ङ—√खोभ ( सक )=विचालने । ( प्रेर )—खोभेइ-महा ।

ङ—√खोह ( सक )=विचालने ( प्रेर )—खोहइ-भवि ।

छ—√छोभना *
छ—√छोहना * } =विचलने, चित्तचाञ्चल्ये ।

| | | |
|---|---|---|
| +√क्षुर् ( क्षुर ) ६/६२ | विलेखने (प) | √कृष् ( कृष ) ६/ विलेखने (प) |
| श× | क्षी मै-सा-च-जै-काक्ष-कात-शा । | >√क्षुर् । |
| • | | √खुर् (खुर) ६/ विलेखने (प) |

+√झर्च् (झर्च) १/७०९ परिभाषणे ( प ) <√झर्झ ( झर्झ )परिभाषणे(प) ।
मै सा श च जै काक्रु इत्यपरे-क्षी √चर्च् ( चर्च ) १/ परि
कात शा हे वो× क्षी । भाषणे ( प ) ।
√झर्छ् ( झर्छ ) १/ परि
भाषणे ( प ) ।

किमत्र सत्यम् ! देवा ज्ञास्यन्ति—क्षी ।

+√झर्च् (झर्च) ६/२० परिभाषणसतर्जनयो॰ (प) पूर्ववत् ।
क्षी च-जै काक्रु कात मै शा हे ।
×, श परिभाषणभर्त्सनयो —सा ।
उक्तौ भर्त्से-वो ।

+√झर्छ् (झर्छ) १/७०९ परिभाषणे ( प ) >√झर्च् (झर्च) परिभाषणे (प) ।
मै सा श च जै काक्रु क्षी । √झर्छ् ( झर्छ ) ६/ भर्त्सोक्त्यो
कात हे-वो× ( प ) वो ।
पूर्ववत् ।

किमत्र सत्यम् ! देवा ज्ञास्यन्ति-क्षी ।

+√झर्झ् ( झर्झ ) १/७१० परिभाषण ( प ) द्रष्ट √जर्ज् ६/१९ ।
श हे वो× क्षी च ।
परिभाषणसतर्जनयो —मै ।
परिभाषणहिंसातर्जनेषु—
सा जै-शा ।
परिभाषणर्जनयो —काक्रु-
कात ।

ड—झज्झरी=परस्पर्शवारणाय चण्डालयष्टि ।
छ—झर्झर=वाद्यविशेष ( परिभाषणे ), हिरण्याक्षपुत्रनाम ।
छ—झॅझोडना ( <झर्झनम् )=क्षोभणे, सरभस कम्पने ।

+√झर्झ् (झर्झ) ६/२० परिभाषणे ( प ) पूर्ववत् ।
श-शा× क्षी-च जै हे ।
परिभाषणसतर्जनयो —मै ।
परिभाषणभर्त्सनयो —सा ।
परिभाषणतर्जनयो.—
काक्रु कात ।
तर्जने—हे ।
भर्त्सोक्त्यो.—वो ।

ग—झर्झरी-हरिवंश २३७,२ =वाद्यम्। यावत्-झर्झती, झर्झन्ती-प्रभृति-रूपाणि नोपलभ्यन्त तावदय न शक्यते स्वीकर्तुम्।

छ—पूर्ववत्।

छ—√झगरना
छ—√झगडना
}(<झझरना<झर्झनम्)=भर्त्सनार्थौ।

| | | |
|---|---|---|
| +√झष्(झष) १ ६७९ | हिसार्थ (प) | √जप् (जप) १/ हिसार्थ (प)। |
| श× | क्षी मै-सा कात। | √शष् (शप) १/-हिसार्थ (प)। |
| | हिंसायाम्—च-जै-काक्र शा-हे। | √जस् १/ हिंसायाम् (प)। |
| | वधे—वो। | √यूष् (यूष) १/ हिसायाम् (प)। |

पष्ठस्वरी चायमिति केचित्-झूषति-दुर्गादा।

ड—√झूस (सक)=क्षीणे, सतापे, विनाशे। सक्र-झूसेत्ता-अत २७।

| | | |
|---|---|---|
| +√झष्(झष) १/८७७ | आदानसवरणयो (उ) | पूर्ववत्। |
| श काक्र कात× | क्षी-मै सा हे। | |
| | आदाने—च। | |
| | सवरणे आदाने च—जै शा। | |
| | ग्रहऽपिधाने—वो। | |

ग—लीनमीनझषग्राहाम्-वा रा २,१४४,४—झष =मकर। झषाणा मकरश्चास्मि—गी १०,३१।

ड—√झोस (सक)=आवरणे, प्रक्षेपणे-वन १।

| | | |
|---|---|---|
| +√झ (झष्) ४ २३ | वयोहानो (प) | √च ९/ वयोहानो (प) मै। |
| श | क्षी मै सा-जै कात शा। | √ज (जष) ४' वयोहानौ (प)। |
| | जरायाम्—च। | |
| | जरसि—हे। | |
| | ज्याने—वो। | |

(काक्र√कॄ[कॄष्]) वयोहानौ—काक्र।
लैपिकी त्रुटि।
झॄष् इत्युचितम्।

ग—झर =समूहो निर्झरो वा। यथा नैषधे-प्रभाझरचक्रभ्रमिम्-२,३२।

| | |
|---|---|
| छ—√उझलना<br>छ—√उझाल्ना<br>छ—√उझिल्ना | (<उज्झरणम्)=अवपातने, उच्चस्थानाद् द्रव पदार्थस्य पातने। |

√झ्यु (झ्युङ्) १/९६३ गतौ (आ) मै। क्षी-सा-जै काकृ- मै च। कात शा हे वो×,(श)

द्रष्ट √ज्यु १/९४१। √झु १/५५०d गतौ (आ) काकृ।

√टल् (टल) १/८१८ वैक्लव्ये (प) श× क्षी-मै सा च जै काकृ कात शा-हे। विप्लवे—वो। 'विक्लवे' इति भाव्यम।

√ट्वल् (ट्वल) १/ वैक्लव्ये (प)। √टल् (टल) १/२५० x अदने (प) काकृ। √टल्ल् १/२५०y अदने (प) काकृ।

ह्विट्नी 'टलति' इत्युदाहरण प्रस्तौति। मया नाधिगतम्।

| | |
|---|---|
| छ—√टरना<br>छ—√टलना | (<टलनम्) १ अपसृतौ, (२) अनुपस्थितौ, स्थगने, (३) अन्यथाभावे, उचितनिश्चयाभावे। इद कातर्येम्। विक्लव =कातर। द्रष्ट—√क्रन्द् १/७६६। |

सद्दनीति ग्रन्थे ८१० 'टल्' धातो 'विलम्बे'-अर्थो विद्यते। स समीचीनो भाति।

छ—ठाल, ठाला=निष्क्रियता, व्यवसायराहित्यम्, (२) अवकाश।

| | |
|---|---|
| छ—√टालना<br>छ—√टारना | =अपसारणे। |

छ—अटल (<अ+टल)=स्थिर'।

+√टिक् (टिकृ) १/१०० गत्यर्थे (आ) श जै शा× क्षी मै-सा-च कात। गतौ— काकृ हे। गत्याम्—वो।

√टीक् (टीकृ) १/ गत्यर्थे' (आ) <टीक <टीकम < त्रिक्रम <त्रिविक्रम- (अभि अनु, १४३ पृ)। टिक<टिकम< त्रिक्रम< त्रिविक्रम (अ अ, १४३ पृ)

√टिक् १/७० गतौ (आ)
जै, शा ४०p, हे ६३३।
√तिक् (तिकृ) १/ गत्यर्थे
(आ) सा।

छ—अटकना (<अ+टेकनम्)=विसरणे, गतिरोधे।

√टीक् (टीकृ) १/८०१ गत्यर्थे (आ)
श
क्षी मै सा च कात।
गतौ—नै काकृ शा हे।
गत्याम्—वो।

√तीक् (तीकृ) १/ गत्यर्थे
(आ) सा।
शेष पूर्ववत्।

ग—टीकमानै -यशस्तिलक च, ३ आ, ३७० पृ =सञ्चरद्भि।
छ—√टीकना=तिलकाद्यङ्कने।

+√टौक् (टौकृ) १ ९५ गत्यर्थे (आ) इति
मै-सा श-च-जै-काकृ- दुर्ग —क्षी।
कात शा-हे वो× क्षी।

<√त्रौक् (त्रौकृ) गत्यर्थे
(आ)।
√ढौक् (ढौकृ) १/
गत्यर्थे (आ)।

ड—टोक्कण=मद्यमापनपात्रम्-दे ४,४।
छ—√टोकना=(१) अवरोधे, (२) कुदृष्टौ, (३) मञ्जानामाह्वाने।

+√ट्वल् (ट्वल) १/८१९ वैक्लव्ये (प)
श×
क्षी-मै सा च-जै काकृ
कात-शा हे।
विप्लवे—वो।

√टल् (टल) १/ वैक्लव्ये
(प)।
√टु १/५५०g गतौ (आ)
काकृ।
√ढु १ ५५०h गतौ (आ)
काकृ।

ड—टोलगइ (<ट्वलगति)=गुरुवन्दने दोषविशेष -पव २।
छ—(टाल) टूल=व्याज, विलम्ब। सद्दनीतिग्रन्थे ८११ धातोरस्य 'विलम्बे' इत्यर्थो दृश्यते। स समीचीनो भाति।

+√डिप् (डिप) ४/११८ क्षेपे (प)।
श
क्षी मै सा-च जै काकृ
कात-शा-हे।
तुदि—वो।

√तिप् (तिप) १०/ क्षेपे
(प)।
√टिप् (टिप) १०/ क्षेपे
(प)।

√स्तिप् ( स्तिप ) १०/ क्षेपे ( प ) ।
√डिप् ( डिप ) ६/९१ क्षेपे ( प ) ।

ङ—डिफिअ=जलपतितम् , जलक्षिप्तम्-ने ४,९ ।

+√डिप ( डिप ) ६/९१ क्षेपे ( प ) ।
श, ( नै ) । क्षी मै सा-च जै-काकृ पूर्ववत् ।
कात शा हे ।
क्षेपणे—जै ।
तुदि—वो ।

ङ—√डिव ( सक )=उल्लघने । डिव-यज्ञ १ ।
ङ—डेवण=उल्लघनम्-ओघ ।

१√डी ( डीङ् ) १/९५३ विहायसा गतौ ( आ ) ।
श क्षी (यु मी स ), कात शा-हे ।
विहायसा गतौ—मै सा-
जै काकृ ।
गतौ—क्षी च ।
नभोगतौ—वो ।

√डी ( डीङ् ) ४/२७ गतौ ( आ ) ।
श क्षी च जै कात शा हे-वो ।
विहायसा गतौ—मै सा ।

√डी ( डीङ ) १/९५३ गतौ ( आ ) ।
दीयते ( डीयते )—निघ २/१४ गतिकर्मा ।

डीनशब्द विहायान्ये शब्दा अप्राप्या -हि ।
ग—अतिडीन०, अभिडीन०-मभार ८,१९०० ।
घ—डेति-दीघ १७१, अगुत्तर २,२०९ । उड्डेति-मज्झिम १,३६४ ।
ङ—डीण=अवतीर्णम्-दे ४,१० ।
छ—√उडना (<उड्डयनम् ) ।

√ढौक् ( ढौकृ ) १/९४ गत्यर्थे ( आ ) ।
श क्षी मै-सा च कात ।
गतौ—जै-काकृ शा हे ।
गत्याम्—वो ।

√त्रौक् ( त्रौकृ ) १/ गत्यर्थे ( आ ) ।
√टौक् ( टौकृ ) १/ गत्यर्थे ( आ ) ।

ग—तैः क्षणादाशु ढौकितम्–मभार १२,५१८१। तस्मै पात्रीमढौकयत्–कथासरि १६,३९। उपढौकयन्ति–काला श्रो ७,२,२=उपहरन्ति। वक्त्र ढौकते–शाकु ३,३७ श्लोकत परवर्ति गद्यम्=अन्यत्र चाल्यति। अढौकि–नैष १६,१०१=अर्पिता (प्रका)।

ङ—√ढुक (सक)=उपहारे, (२) उपस्थितौ, (३) प्रवृत्तौ, (४) साक्षात्कृतौ। वक्र–ढुक्कन–पिग।

ङ—√ढोअ (सक)=उपहारे, (२) उपस्थितौ, (३) प्रवृत्तौ, (४) साक्षात्कृतौ। ढोएज्जह–महा।

ठ—√ढूँकना=प्रवेशे।
ठ—√ढूँकना=कुब्जीभावे, आर्जवे।

| | | |
|---|---|---|
| +√तस् (तसि) १ ६७३ मै सा श च जै शा× | अलङ्कारे (प) इति दुर्ग—क्षी। क्षी काकृ कात-ह। अलङ्कृतौ—वो। कम्पे—ह्रि। | √तस् (तसि) १० अलङ्कारे (प)। इति दुर्ग—क्षी। √तस (तसि) १०/३८५ अलङ्कारे (प)। |

ग—[ततस्र ?–ऋ ४,२३,५। अतसयत्–मा २३,२४, तै ७,४,१९,४]।
नोत्तस क्षिपति क्षितौ श्रवणत –सा द १३,८। चूडोत्तसति–भर्तृह ३,१।
ङ—उत्तस=कर्णाभरणम्–पाअ, शिरोभूषणम्–गउड।
ङ—अवतसिय (<अवतसितम्)=विभूषितम्–कुमा।
ङ—अवयस=शिरोभूषणविशेष –कुमा, गा १७३।

मैत्रेयसायणौ चुरादौ पठतो न भ्वादौ। क्षीरस्वामी तूभयत्र दुर्गमुद्धरति। सस्कृते प्राकृते च सोपसर्गोत्तसावतसशब्दौ प्राप्येते।

| | | |
|---|---|---|
| √तक् (तक) १/११६ श× | हसने (प)। क्षी मै-सा-च नै काकृ-कात शा ह। सहने हासे—वो। सहने इति दुर्ग —क्षी, ह। द्रुतगतौ—ह्रि। | √तक्क् १/३२b हसने (प) काकृ। तकति–निघण्टौ–२/१४=गतिकर्मा। शकुनि,–शक्नोति तकितुमिति वा–निरु ९,३,२। तकितुम्=गन्तुम्—दुर्गाचा। |

ग—तक्ति-ऋ ९,१६ १, तकवानस्य १,१२०,६, तकन्ती—पै १२,७,३। वेदे लोके चार्थपार्थक्यम्।

√तक्ष् (तक्षू) १ ६४६ शX | तनूकरणे (प) क्षी मै सा-च-जै-काक्र कात शा हे। कार्श्ये, तक्षे—वो। त्रिधाने, निर्माणे—ह्वि। | √तङ्क् (तकि) १/ कृच्छ्र जीवने (प)। √तक् (तक) १/ सहने (प)।

ग—अश्वयूपाय तक्षति-ऋ १,१६२,६। तक्षति-तै ४,६,८,२, मै ३,१६,१। अपतक्ष्णुवन्ति-शब्रा ३,७,१,८।

ङ—√तक्ख (सक)=तनूकरणे। कर्मणि-तक्खिज्जइ-कुप्र १७। वक्र-तक्खमाण-अणु।

ङ—√तच्छ (सक)=तनूकरणे। सक्र-तच्छिय-सूअ १,४,१। कवक्र-तच्छिज्जत-सुर १,२८।

+√तक्ष् (तक्ष) १/६६७ क्षी श च शा-हेX | त्वचने (प) मै। मै सा जै काक्र कात। त्वचि ग्राहे—वो। | √तक्ष् (तक्षू) १/ तनूकरणे (प)।

त्वचनम्=सवरणम्—मै।

+√तङ्क् (तकि) १/११७ क्षी-शX | कृच्छ्रजीवने (प) क्षी-मै-सा-च जै-काक्र कात शा-हे। दौस्थ्ये—वो। | √तञ्च् (तञ्चू) ७/ सङ्कोचने (प) इति द्रमिडा—क्षी।

ग—दृष्ट्वा पथि निरातङ्कम्-याज्ञवल्क्य ३,२४५। निरातङ्का-रघु १,६३।

छ—तगी (फार)=दुःखम्, कष्टम्।

छ—तँगाना=पीडने, कष्टे।

छ—तँगना=पीडने (अक)।

+√तङ्ग् (तगि) १/१४८ श जै काक्र-कात शाX | गत्यर्थ (प) क्षी मै सा च। गतौ—हे। गते स्खलने च—वो। | √त्वङ्ग् (त्वगि) १/ गत्यर्थ (प)।

तगि-स्खलने रूढ-क्षी।

क—स्तेड=प्रेरणे, अपनोदे, प्रापणे, ताडने, स्फुरणे। स्तेउ-क्, स्तेउ-ग्-*स्तेइग्-*स्तिग्— किम्रिक्-सगु=गमने-वा पॉकर्नी।

ग—किराततङ्गणाकीर्णम्-मभार ३,१४०,२४।

| | | |
|---|---|---|
| +√तञ्च् (तन्चु) १/१८८ श कात× | गत्यर्थ (प) क्षी मै सा च। गतौ—जै काकृ शा हे इतौ—वो। | √तन् (तनु) ८/ विस्तारे (उ)। √तञ्ज् (तन्ज्) ७/सङ्कोचने (प)। √तञ्च् (तन्चू) ७/ सङ्कोचने (प) इति द्रमिडा। √त्वञ्च् (त्वन्चु) १/ गत्यर्थ (प)। |
| √तञ्च् (तन्चू) ७/२२ श | सङ्कोचने (प) इति द्रमिडा -क्षी क्षी मै सा च-जै काकृ कात शा हे। सङ्कुचि—वो। | <√तञ्ज् (तन्जू) सङ्कोचने (प)। शेष पूर्ववत्। |

ग—सोमेनातनच्मि-मा स १,४, तै ७,५,३,५। आतनक्ति (दुग्ध दध्ना)-काल्या श्रो ४,३,२३।

| | | |
|---|---|---|
| +√तञ्ज् (तन्जू) ७/२२ मै श च जै काकृ कात शा× | सङ्कोचने (प) क्षी-सा हे। सङ्कोचे—वो। | >√तञ्च् (तन्चू) सङ्कोचने (प)। |
| √तट् (तट) १/३०४ श | उच्छ्राये (प) क्षी मै सा-च-जै-काकृ कात शा हे वो। तटतटाशब्दे—ह्वि। | √तड् (तड) १०/ आघाते (प)। |

ग—तटति-षब्रा ५,७। यदास्य पृथिवी तटति (=तटतटेति शब्द करोति)-अद्भु ब्रा १,४०। ह्विटनी प्रथममुदाहरण नोपलब्धवान्।

घ—तड=तटम्-कुमा।

छ—तड (<तटम्)=समानविभाग, पक्ष, (२) स्थलम्।

| | | |
|---|---|---|
| +√तण्ड् (तडि) १ २७८ श-कात × | ताडने ( आ ) क्षी मै-सा च-जै शा हे तोडने—काक्र । त्विषि आहतो च—वो | √तड् ( तड ) १०/ आघाते ( प ) । √तण्ड् १/१७९ समूहे (प) काक्र । तन्द्रते—ऋ १,१३८,१ (= त्यागे, श्रान्तौ, नैर्बल्ये) |

ग—तण्डुल कण-अ वे १०,९,२६। तण्डि = महाभारतवर्णित ऋषि—शान्ति २४४,१७।

ङ—तड = खलीनलग्ना लाला, (२) मस्तकहीन (नि) (३) स्वरादधिकम्-ने ५,१९।

| | | |
|---|---|---|
| √तन् ( तनु ) ८/१ श | विस्तारे ( उ ) क्षी मै-सा च नै काक्र कात-शा-हे । विस्तृतौ—वो । | √तन् ( तनु ) १०/श्रद्धोपकरणयो ( प ) । √ताय् ( तायृ ) १/ सन्तानपालनयो ( आ ) । |

क—तेन्—, ते̀दू—, = विस्तारे, कर्षणे। लैति ते̀दॉ, त̀ते̀न्दि = कनिष्ठ, पश्चाद्वर्ती। पु च स्ला त̀ने̀तॉ, तो̀नॉतॉ = रज्जु—जू पॉकर्नी ।

ग—ततनन्-ऋ ७,८८,४, पै १७,२५,५। तनुते-ऋ १,१०१,७, तै १,६,८,४।

छ—√तनना = विस्तारे ।

| | | |
|---|---|---|
| √तप् ( तप ) १/९७० श | सतापे ( प ) क्षी मै सा च-जै काक्र-कात शा हे । दवैश्ययो —वो । | √तप् ( तप ) ४/ ऐश्वर्ये ( आ ) । √पत् ( पत ) ४/ ऐश्वर्ये (आ) इति द्रविडा'-क्षी । निपत्यते—निघ २/२१= ऐश्वर्यकर्मा । |

वा ग्रहणाद् ऐश्वर्येऽपि भ्वादिरित्येके-क्षी ।

ग—तपति-ऋ २,२४,९, मै १,१०,१४ ।

ङ—√तव = तापे । तवइ-गा २२४ ।

ठ—√तवना*† = तपने ।

छ—√तपना = तपने ।

छ—√तचना† = तपने ।

छ—√तयना*† = तपने ।

| | | |
|---|---|---|
| √तप् ( तप ) ४/४८ श | ऐश्वर्ये [ वा ] ( आ ) क्षी-मै-सा-च जै-काकृ-कात-शा हे । द्वैश्ययो —वो । | √तप् ( तप ) १/ द्वैश्ययया ( प ) वो । √तप् (तप) १०/ दाहे (प) । |

ग—तपस्तप्यामहे—अ वे ७,६१,२ । सोऽतप्यत तपो घोरम्–वा रा १,५८,१ ।

ड—√तप्प=तपश्चर्यायाम , ( २ ) आरण्ये । तप्पइ–पिंग , प्रासू ५३ ।

| | | |
|---|---|---|
| √तम् ( तमु ) ४/८९ श | काङ्क्षायाम् , ( प ) क्षी मै सा च जै-काकृ-कात शा-हे । खेदेच्छयो —वो । | √दम् (दमु) ४/ उपशमे (प) । √तम्ब् १/२०६d मर्दने ( प ) काकृ । |

ग—ताम्यति-तैत्रा १,४,४,२ ।

ड—√तम्म ( अक )=खेदे । तम्मइ–गा ४८३ ।

| | | |
|---|---|---|
| +√तय् ( तय ) १/४७१ श × | गतौ ( आ ) क्षी मै-सा च काकृ कात । 'रक्षणे च' इत्येके—सा । गतो रक्षाया च—शा हे । गतौ रक्षणे च—शा हे । गतिरक्षणयो —वो | √ताय् (तायृ ) १/ सन्तान पालनयो ( आ ) । √त्रै ( त्रैङ ) १/ पालने ( आ ) । √दे ( देङ ) १/ रक्षणे ( आ ) । √दय् (दय) १/ दानगति-रक्षणहिंसादानेषु ( आ ) । |

ड—तय ( अर )=( १ ) समाप्तम् , ( २ ) निश्चितम् ।

| | | |
|---|---|---|
| +√तय् ( तय ) १/४७७ मै-सा-श च-जै-काकृ-कात शा हे वो × | रक्षणे, च=गतौ ( आ ) क्षी । | पूर्ववत् । |

पूर्वस्मादभिन्न क्षीरेणैव पृथक् सख्यात ।

ड—ताइ ( <तायिन् )=रक्षक , पालक –उत्त ८ ।

| | | |
|---|---|---|
| √तर्ज् ( तर्ज ) १/२२२ श जै × | भर्त्सने ( प ) क्षी मै सा च काकृ कात शा हे । वाग्भर्त्सयो —वो । | √तर्ज् १/६७ व्यथने ( प ) काकृ । √तर्ज् ( तर्ज ) १०/ संतर्जने ( प ) । |

√चर्च् (चर्च) परिभाषण-
भर्त्सनयो (प) सा।
√जर्च् (जर्च) परिभाषण-
सतर्जनयो (प) मै।
√जर्ज् (जर्ज) ६/ परिभाषण-
भर्त्सनयो (प) सा।

ग—तर्जद्भिरिव वानरैः—वा रा २,९६,२६। गदया तर्जमान—मभार ६,३७८५।

ङ—√तज्ज (सक) = भर्त्सने। तज्जइ-भवि।

ठ—√तर्जना }
ठ—√तरजना } = भर्त्सने।

+√तर्द् (तर्द) १/५६ शX हिंसायाम् (प) क्षी मै सा च जै काकृ कात-शा हे। हिंसे—वो। √तृद् (उतृदिर्) ७/ हिंसानादरयो (प)।

ग—ततर्द—तैब्रा ७,५,४,२। रूपमिदं स्यादावपि शक्यते साधयितुम्।

+√तस् (तसु) ४/९९ उपक्षये (प) क्षी मै सा कात शा हे वो। उपक्षेपे—च काकृ। क्षये—जै। √दस् (दसु) ४/ उपक्षये (प)।

क—तेंस्=विस्तारे—वा पॉकर्नी।

ख—अवे वितस्ति=विस्तार, वितस्ति—वा पॉकर्नी। 'उपक्षेपे'—इत्यनेन सङ्गतम्।

ग—सामानि चक्रुस्तसराण्योतवे—ऋ १०,१३०,२, वा स १९,८३। तायुरिति स्तेननाम। तस्यतेर्वा स्यात्—निरु ४,२४,१=क्षयार्थस्य। उपक्षीणो ह्यसौ भवति, अधार्मिकत्वात्—दुर्गाचार्य।

ङ—टसर=विमोटनम्—दे ४,१।

छ—टसरा=वस्त्राद्युपक्षये, दीर्णतायाम् (मसक जाना, दरकना—हि)।

√ताय् (तायृ) १/४८६ शX सन्तानपालनयो (आ) क्षी मै सा-जै काकृ कात-शा-हे। सन्ताने—च। √तय् (तय) १/ रक्षणे च=गतौ (प)। √त्रै (त्रैङ्) १/ पालने (आ)।

पाल्नसन्तत्यो —वो। √दय् (दय) १/ दानगतिरक्षणहिंसादानेषु (आ)।
√दे (देङ्) १/ रक्षणे (आ)।

ग—शरसि सताग्यमाने-वा स ३९५।
ङ—√ताअ (मक)=रक्षणे। क्रु-तायव-श्रा १०।

+√तिक् (तिक्) १/१०७ गत्यर्थ (आ) √तीक् (तीक्) १/१०८
क्षी श च जै शा × मै सा-कात। गत्यर्थ (आ) सा।
गतो—काक्र ह। द्रष्ट √टिक् १/१००।
गत्याम्—वो।

+√तिक् (तिक) ५/२० च=आस्कन्दने (प) √तिग् (तिग) ५/२१
श क्षी मै सा हे। आस्कन्दने (प)।
हिंसायाम्—च शा हे। √तिक् (तिक्) १/ गत्यर्थ (प)।
जिघासायाम्—काक्र कात। √स्तिघ् (ष्टिघ) ५/ आस्कन्दने (प)।
आस्कन्दे वधे—वो।
गतो, च=आस्कन्दनेसि को।

छ—थेग=कन्दविशेष-श्रा ७०, जी ९।

छ—√तेखना^{*+}=(<तेकनम्, तीक्ष्णम् इत्यपि स्यात्)=क्रोधे। क्रोधोऽपि हिंसा, तत्परिणामेन तथा सत्त्वात्।

+√तिग् (तिग) ५/२१ च=आस्कन्दने (प) >√तिघ् (तिघ) हिंसायाम्
च×, श क्षी मै सा हे। (प) इत्येके-क्षी।
हिंसायाम्—जै शा-हे। √तिक्ष् ५/१७d जिघासायाम्
जिघासायाम्—काक्र-कात। (प) काक्र।
हिंसास्कन्दयो—वो। √तीक्ष् ५/१७e जिघासायाम् (प) काक्र।

ङ—थिग्गल=भित्तिद्वारम्-दस ५,१,१५, (२) स्फटितवस्त्रसन्धानम्,-पण्ण १७, विसे १४३९ टी।

| | | |
|---|---|---|
| √तिज ( तिज ) १/९५६ श ( ? ) | निशाने क्षमाया च (आ) क्षी मै । | √तिज् (तिज) १०/ निशाने ( प )। |
| | निशाने—सा च । | √तेज् (तेज) १/ पालने (प)। |
| | क्षमायाम्—सा । | |
| | क्षमानिशानयो —चै शा हे । | |
| | निशातने—काक्र । | |
| | शातने क्षमाया च—कात। | |
| | शीते क्षान्तौ च—वो । | |
| √तितिक्ष् | शातने क्षमाया च—काक्र। | |

ग—तेजते-ऋ १०,१३८,५। तेजमान -शब्रा ३,६,४,१४। तितिक्षते-शब्रा ३,१,२,१५।

ङ—√तिइक्खइ ( सक ) = मर्षणे । तिइक्खए-आचा ।

छ—√टेना (<तेजनम्)-निशाने—"कपट छुरी उर पाहन टेई"-तुलसी ।

| | | |
|---|---|---|
| +√तिप् (तिपृ) १/३५७ श× | क्षरणार्थ (आ ) क्षी मै सा च कात । | √स्तिप् ( ष्टिप ) १/ क्षरणार्थ ( आ )। |
| | स्रुतौ—जै । | √तेप् ( तेपृ ) १/ क्षरणार्थ ( आ )। |
| | श्च्युतौ—वो । | |
| | क्षरणे—काक्र-शा-हे । | √स्तेप् ( ष्टेपृ ) १/ क्षरणार्थ ( आ )। |

ङ—√तिप्प ( अक )=( १ ) क्षरणे, ( २ ) पश्चात्तापे, ( ३ ) रोदने, ( ४ ) [सक] सुखच्युतौ । तिप्पामि-सूअ २,१, २, २,५५ । तिप्पणया=अश्रुविमोचनम्-ठा ४,१, औप ।

| | | |
|---|---|---|
| √तिम् ( तिम ) ४/१५ श | आर्द्रीभावे ( प ) क्षी मै सा । | √तीम् (तीम) ४/ आर्द्रीभावे ( प )। |
| | आर्द्रभावे—च जै-काक्र-कात शा-हे । | √स्तीम् (ष्टीम)४/ आर्द्रीभावे ( प )। |
| | क्लेदने—वो । | √स्तिम् (ष्टिम) ४/ आर्द्रीभावे ( प )। |

ग—तिमिताश्चाभवन् सर्वे-वा रा ५,१,२६। वृष्टिर्बभूव, वानरास्तिम्यतोऽवलोक्य-हितो ७९,५।

ड—√तिम्म ( सक )=( १ ) आर्द्रीभावे, ( २ ) [ अक ] आर्द्रत्वे। मक्क-तिम्मेउ-पिङ ३५० ।

ठ—√तिमाना † =आर्द्रीभावे ।

| | | |
|---|---|---|
| +√तिल् ( तिल ) १/५३४ श च-जै-शा× | गतौ (प) इत्यपि दुर्ग क्षी मै सा-काक्र-कात हे वो । | <√तिल्ल् (तिल्ल ) गतौ(प)। |

ड—√ठिल्ना=प्रवेशे-"ठिले दीह दल पुहमि हिलाई"-लाल ।
ठ—ठेलना ( प्रे )=प्रवेशे ।
ज—टेला=मुष्टिप्रसारणे ( कस्यचन वस्तुन आदानाय ) ।

| | | |
|---|---|---|
| +√तिल् ( तिल ) ६/७५ श | स्नेहने ( प ) क्षी मै-सा-च नै काक्र कात शा हे । स्निहि—वो । | √तिल् (तिल) १०/ स्नेहने ( प ) । |

ग—प्रतिलामि-वा स २३,२४=स्निह्यामि[महीध ] । भ्रमात्मकमध्ययनमू-ह्वि । तिलम्-साब्रा १,८,१० । तिला -ताब्रा १६,१,१०, शब्रा ९,११,३ । तिलस्य-गाब्रा २,१,१७ ।

| | | |
|---|---|---|
| +√तिल्ल् (तिल्ल) १/५३५ मै श च कात× | गतौ ( प ) क्षी सा जै काक्र शा-हे वो । | >√तिल (तिल) गतौ (प)। |

ड—थिल्लि=यानविशेष -( १ ) अश्वद्वयवाह्यम्, ( २ ) अश्वतरादिवाह्यम्-सूअ २,२,६२, णाया १,१ टी -पत्र ४३, औप ।

ठ—तिल्लर=चटकाविशेष ( देश ) ।

| | | |
|---|---|---|
| +√तीम् (तीम) ४/१६ मै श च जै काक्र कात शा× | आर्द्रीभावे ( प ) क्षी सा । आर्द्रभावे—हे । क्लेदने—वो । | द्रष्ट √तिम् ४/१५ । √तेम् १/२६३ d रुजायाम् ( प ) काक्र । |

ड—तीमिअ ( <तीमितम् )=आर्द्रम्-कुप्र ३७३ ।
ड—तीमन=कढ्ढरी (>कढी-हि )-सण , दे २,३५ ।

+√तीव् ( तीव ) १/५६५ शX | स्थौल्ये ( प ) क्षी मै सा च जै-काक्ृ कात शा हे-वो। | √नीव् (नीव) १/ स्थौल्ये (प)। धीव् १/२६० e स्थौल्ये (प) काक्ृ। तीव् १/२६३ b रुजायाम् (प) काक्ृ।

छ—टीबा=मृत्तिकाचय, वल्मीकम्, राशि, चय। गुर्जरभा –टीबो।

+√तीव् (तीवृ) १/८८३ श्री सा श च जै काक्ृ-कात शा हे वोX | आदानसंवरणयो (प) इति केचित्—मै। | <√चीव् ( चीवृ ) आदान-संवरणयो ( उ )।

√तु २/२४ श्री मै श च काक्ृX | गतिवृद्धिहिंसासु ( प ) ७/३/९५ सौत्र। बोधिन्यासे त्रिष्वपीति-सा। वृत्तिहिंसापूरणेपु—जै कात शा हे। वृत्तिहिंसापूतिषु—वो। | √तव् गत्याम्–सौ धा –वो। तविषीति बलनाम तवतेर्वा वृद्धिकर्मण –निरु ९,२५,१। सतवीत्वत्–ऋ ४,४०,४–तनोते पूर्वया प्रकृत्या निगम —निरु २,२८,१।

ग—तवीति–ऋ —ह्विट्नी। मया नोपलब्धम्। तूताव–ऋ १,९४,२, पै १२,१,२। तवतेर्वृद्धिकर्मणो लिटि णलि "तुजादीना दीर्घोऽभ्यासस्य" ६/१/७।

+√तुज् ( तुज ) १/२४० शX | हिंसायाम् ( प ) क्षी मै-सा-च-काक्ृ कात शा हे। हिसने—जै। हिसे—वो। | √तु २/२४ गतिवृद्धि हिंसासु ( प )। √तुञ् (तुजि) १/ पालने, च = हिंसायाम् ( प )। मर्म तुजञ्जीशान —ऋ १,६१,६, तुजसे ४,२३,७।

छ—तुजीह=धनु —( डिग )।

√तुञ् ( तुजि ) १/२४१ शX | हिंसायाम् ( प ) क्षी मै-सा च काक्ृ कात शा हे। हिसने पालने च—जै। हिंसाया चलने च—काक्ृ। | √तुञ् ( तुजि ) १०/ हिसाबलादाननिकेतनेषु ( प )। तूतुजि —निघ २/१५= क्षिप्रनाम।

हिंसाया चलने च—कात शा। तुञ्जति—निघ ३/२०
हिंसे—वो। दानकर्मा।
उत्तेजने, पीडने—ह्वि।

ग—एवा त इन्द्रो रसानि तुञ्जन्ति-ऋ ९,७९,५, तुञ्जते-१,१३१,२।

+√तुञ्ज (तुजि) १/२४२ शX पालने, च=हिंसायाम् (प) क्षी मै। हिंसने पालने च—जै। हिंसाया चलने च—काक्। हिंसाया बलने च—कात शा हिंसाया बल्ने च—हे। प्राणेऽवने—वो। √तुञ्ज् १/४० १वर्जने (प) काक्। पूर्ववत्।

पूर्वसूत्रादभिन्न क्षीरेण पृथक् सट्यायते।

ग—तुञ्जीन=कश्मीरनेशीयानामनेकेषा राज्ञा प्राचीननामानि-राजत २,११, ३,९७=पालने।

+√तुट् (तुट) ६/९६ कलहकर्मणि (प) क्षी मै सा-जै काक्-कात शा हे। कल्हे—च-वो। √त्रुट् (त्रुट) ६ छेदने (प)। √तुड् (तुड) १/३४७ तोडने (प)। √त्रुट् (त्रुट) १०/ छेदने (आ)।

ग—[तोटयति (प्रे)-राजत ६,२४८ (त्रोटयति)] तुटि = तन्त्रशास्त्रे ?

+√तुड् (तुड्) १ ३४७ श जै काकX तोडने (प) इति दुर्ग-क्षी क्षी-मै सा च कात शा हे। वधे—वो। तोडनम्=द्रावणम्-क्षी। <√तूड (तूड्) तोडने (प)। √तुण्ड् (तुडि) १/ तोडने (आ)। शेष पूर्ववत्।

ङ—√तोड (सक)=तोडने। वक्-तोडत-भवि। सक्-तोडित्ता-ती ७।
ञ—√तोडना } =तोडने।
छ—√तोरना† }

+√तुड् (तुड) ६ १०४ शX तोडने (प) क्षी मै-सा च जै काक् कात-शा-हे। भेदे—वो। पूर्ववत्। √तोड् १/ अनादरे (प) त्रो। √तोड १/४२० b तोडने (प) शा, २४६ हे।

√त्रुड् १/४४५ b त्रोडने ( आ ) काक्र ।
√त्रुण्ड् १/४४५ a त्रोडने ( आ ) काक्र ।

तोडनम् = भेद , पृथक्करण वा-क्षी ।

ग—सरस्वतीतुडगेन-यशस्ति च, ३ आ, ४५२ पृ =महाकविना । ( तुडग =मुखम् ) ।

+√तुण् ( तुण ) ६/५२ कौटिल्ये ( प )
श
क्षी मै-सा च-जै
कात शा-हे ।
जैह्म्ये—वो ।
( काक्र√ तूण् ) कौटिल्ये—काक्र ।

√तुण् १/८४ गतौ (प) काक्र ।
√द्रुण् ( द्रुण ) ६/ हिंसा गतिकौटिल्येषु ( प ) ।
√तुल ( तुल ) १०/ उन्माने ( प ) ।
शेष पूर्ववत् ।

ङ—तुणय = वाद्यविशेष –रे ५,१६ ।

+√तुण्ड् (तुडि) १ २७३ तोडने ( आ )
श
क्षी मै सा-च जै-
कात-शा हे ।
सवरणे—च ।
काक्र ?
वधे—वो ।
वध =निष्पीडनम् इति रमानाथ ।

शेष पूर्ववत् ।
√तुण्ड् ( तुडि ) १०/१२४ छेदने ( प ) सा ।
आद्येषु व्याख्यानेषु न दृश्यतेऽ-ताऽप्रामाणिक पाठोऽस्य—सा ।

ग—उत्तुण्डित०-सुश्रु १,१००,१२, १,१०१,९ ।
ज—√टुण्डु=अन्ते, समाप्तौ ।

√तुद् ( तुद ) ६/१ व्यथने ( उ )
श
क्षी-मै-सा च-जै काक्र
कात-शा-हे ।
व्यथे—वो ।

तुन्दाना-शौ ६ २२,३, पै १९,२२,१२ ।

ग—कशया वा तुतोद–ऋ १,१६२,१७, तै ४,६,९,३ । तुदत्-शौ २०,३०,४० ।
ङ—√तुअ ( सक ) = व्यथायाम् । प्रयो सक्र –तुयाग्इत्ता–ठा ३,२ ।

+√तुप् (तुप) १/४०२ हिंसार्थ (प) √तुप् (तुप) ६ हिंसायाम् (प)।
श× क्षी मै-सा च-कात। √तुफ (तुफ) १ हिंसार्थ (प)।
हिंसायाम्—जै शा हे। √तुफ् (तुफ) ६ हिंसायाम् (प)।
भर्त्सनहिंसयो—काकृ। त्रुफ (त्रुफ) १ हिंसार्थ (प) इति चन्द्र-क्षी।
क्लिशि वधे—वो।

छ—तोप (तुर्क) = शतघ्नी (हिंसायाम्)।

+√तुप् (तुप) ६/३२ हिंसायाम् (प) √तु २/२२ गतिवृद्धिहिंसासु (प)।
श च नै शा हे× क्षी मै सा कात। पूर्ववत्।
भर्त्सनहिंसयो—काकृ।
क्लिशि वधे—वो।

क—(स) तॉइ-प् = आघाते। लेति-स्तुर्पुम् = दुष्ट। पु उ ज स्तॉन्रान्, आइम् स्तौप। म उ ज स्तोउफ्। लेट्टि-स्तौपे। स—प्र-स्तुम्पति-(लक्ष्यहीनम्)-त्रा पॉकर्नी।

ग—तुपति-काठ १२/२। (तुपेजतु-पे ७,८,१)।

+√तुफ् (तुफ) ६/३४ हिंसायाम् (प) पूर्ववत्।
च जै शा हे वो×, श क्षी मै सा कात। √तुभ् (तुभ) ४ हिंसायाम् (प)।
भर्त्सनहिंसयो—काकृ। √तुह्र १/३१६ h. हिंसायाम् (प) काकृ।

+√तुभ् (तुभ) १/७४४ हिंसायाम् (आ) पूर्ववत्
श जै× क्षी मै सा च काकृ कात शा हे।
हिंसे—वो।

क—(स) तॉइ-प् (ब्-, भ्—विच्छिन्नता) = आघाते-वा पॉकर्नी।

+√तुभ् (तुभ) ४/१२८ हिंसायाम् (प) पूर्ववत्।
श क्षी मै सा च-जै काकृ कात शा हे।
हिंसे—वो।
(हिंसने—जै)।

| | | |
|---|---|---|
| +√तुभ्(तुभ) ९/४९ | हिंसायाम्(प)<br>क्षी मै सा च जै काकृ-<br>कात-शा हे।<br>(हिंसने—जै)।<br>हिंसे—वो। | पूर्ववत्। |
| +√तुम्प्(तुन्प्) १/४०३<br>श× | हिंसार्थ (प)।<br>क्षी-मै-सा च-कात।<br>हिंसायाम्—जै-शा-हे।<br>भर्त्सनहिंसयो—काकृ।<br>क्लिशि वधे—वो। | √तु २/२४ गतिवृद्धिहिंसासु (प) सा।<br>√तुप्(तुप) १/ हिंसार्थ (प)।<br>√तुफ्(तुफ) १/ हिंसार्थ (प)।<br>√तुभ्(तुभ) १/ हिंसार्थ (प)।<br>√त्रुम्प्(त्रुन्प) १/ हिंसार्थ (प)।<br>√त्रुम्फ्(त्रुम्फ) १/ हिंसार्थ (प)। |
| +√तुम्प्(तुम्प) ६/३३<br>श च जै-शा-हे× | हिंसायाम्(प)।<br>क्षी-मै-सा कात।<br>भर्त्सनहिंसयो—काकृ।<br>क्लिशि वधे—वो। | पूर्ववत्। |
| +√तुम्फ्(तुन्फ) १/४०७<br>श× | हिंसार्थ (प)।<br>क्षी-मै-सा-च कात।<br>हिंसायाम्—जै-शा-हे।<br>भर्त्सनहिंसयो—काकृ।<br>वधे—वो। | √तुम्ब्(तुबि) १०/ अर्दने (प)।<br>पूर्ववत्। |
| +√तुम्फ्(तुन्फ) ६/३५<br>च-जै-शा हे× | हिंसायाम्(प)।<br>क्षी-मै-सा कात।<br>भर्त्सनहिंसयो,—काकृ।<br>वधे—वो। | पूर्ववत्। |

| | | |
|---|---|---|
| +√तुम्ब् (तुबि) १/४७८ | अर्दने (प) मै। | |
| क्षी-श-च जै-शा× | मै-सा काकृ कात-हे। | √तुम्ब् १०/९७ मदने (प) |
| | अर्दे—वो। | काकृ। |

ग—तुम्बुरु-वा ग ३,४,१६ (गी प्रे स)।

| | | |
|---|---|---|
| √तुर् (तुर) ३/२१ | त्वरणे (प)। | √तूर् (तूरी) ४/ गतित्वरणहिंसनयो (आ)। |
| श जै शा× | क्षी-मै सा च काकृ कात ह। | √त्वर् (ञित्वरा) १/ सम्भ्रमे (आ)। |
| | वेगे—वो। | √तृ १/ प्लवनतरणयो (प)। |

ग—तुतुर्यात्-ऋ ५,१५,३, मै ३,८,३, (तुर्याम-ऋ ५,९,६)।

ङ—√तुर (अक)=त्वरायाम्। वकृ-तुरत, तुरेंत, तुरमाण, तुरेमाण-प्रासू ५८।

| | | |
|---|---|---|
| √तुर्व् (तुर्वी) १/५६८ | हिंसार्थ (प)। | √तु २/७४ गतिवृद्धिहिंसासु (प) सा। |
| श× | क्षी मै सा-च कात। | √थुर्व् (थुर्वी) १/ हिंसार्थ (प)। |
| | हिंसने—नै। | √दुर्व् (दुर्वी) १/ हिंसार्थ (प)। |
| | हिंसायाम्—काकृ शा हे। | √धुर्व् (धुर्वी) १/ हिंसार्थ (प)। |
| | हिंसे—यो। | |

ग—तूर्वसि-ऋ ८,९९,६, शो २०,१०५,२। तूर्वन्-तै ४,६,१,२, मै २,१०,१।

| | | |
|---|---|---|
| √तुष् (तुष) ४/७१ | प्रीतौ (प)। | √तुष् १/२४० a शब्द (प)-च। |
| श | क्षी मै सा च शा। | √तूष् (तूष) १/ तुष्टौ (प)। |
| | तोषणे—जै। | नितोशते-निघ २/१९= वधकर्मा। |
| | पुष्टौ—काकृ। | तोशते-ऋ ९,२७,१। |
| | तुष्टौ—शा हे वो। | तोशमाना(=संतोषे)-मा १२,६९। |

ग—तुष्यति-महोपनि ५,७४, योशि ३,१४, रुजा ७३, गी ६,७०।

इ—√तुस्स (अक)=प्रसादे। तुस्सइ-त्रिसे ९३८।

| | |
|---|---|
| +√तुस् (तुस) १/७०३ | शब्दार्थ (प)। |
| श×, (च√तुष्) | श्री। |
| (नै√त्रुस्) | शब्दे—मै सा-जै काकृ |
| | कात शा-हे। |
| | ध्याने—वो। |

ज—तोसा=अङ्गुलित्रोटने (तन्छ-दे)।

| | |
|---|---|
| +√तुह् (तुहिर्) १/७७९ | अर्दने (प)। |
| श× | क्षी मै सा च जै काकृ |
| | कात शा हे वो। |

ग—तुहुण्ड-मभार १,६५,७५, १,६७,१९७८=दानव। नीता तुहिनेन दूर्वेव-आर्यासप्तश ६३७=हिमेन।

ङ—थोह=बलम्, पराक्रम-ने ५,३०।

ङ—थोहर (>थूहर—हि)=सीहुण्ड-सुपा ७०३।

| | | |
|---|---|---|
| +√तूड् (तूडृ) १/२४७ | तोडने (प)। | >√तुड् (तुडृ) तोडने (प) |
| मै श च काकृ कात× | क्षी-सा-जै शा हे। | इति दुर्ग—क्षी। |
| | वज्रे—वो। | द्रष्ट √तुड् ६/१०४। |

| | | |
|---|---|---|
| +√तूर् (तूरी) ४/४० | गतित्वरणहिंसनयो (आ)। | √तु ७/ गतिवृद्धिहिंसासु |
| श | क्षी-सा। | (प) सा। |
| | त्वरणहिंसयो—मे-काकृ | √तुर् (तुर) ३/ त्वरणे |
| | कात। | (प)। |
| | हिंसागतित्वरणयो— | √त्वर् (ञित्वरा) १/ |
| | जै शा। | सम्भ्रमे (आ)। |
| | त्वरायाम्—च। | √तुर्व् (तुर्वी) १/ हिंसार्थ |
| | स्पदे हिंसे—वो। | (प)। |

क—तुर्एर्-, तुर् तथा-तूर्-वा पॉकर्नी।

ग—मयेन विहिताभिरक्षय-तूर्भि-भा पु ७,७,३७। √तुर् इत्यनेनापि साध्यम्।

ङ—√तूर । क्त-तूरत, तूरेत, तूरमाण, तूरेमाण-सुपा ७९१ ।

| | | |
|---|---|---|
| +√तूल् ( तूल ) १/५७७ शX | निष्कर्षे ( प ) । क्षी-मै-सा च जै काकृ कात शा हे वो । | √तूल् ( तूल ) १०/ पूरणे (आ) इति चन्द्र —क्षी । √तूल् ( तूल ) १०/ निष्कर्षे ( प ) वो । |

निष्कर्ष = वस्तुनिस्सारणम्—क्षी ।
निष्कर्ष = इह इयत्तापरिच्छेद —दुर्गादास ।

क—तॉइ-,तेउ- नू-, =वृद्धौ । ल-त्रिस्तार —तु-एल=निस्सरणे, प्रकाशने-वा पॉकर्नी ।

ग—कुलिश तूलवत् तदा-दे भा ५,१०,३६ ।

ठ—√तूलना=धुरि तैलदानाय चक्र निस्सार्य स्थूणाद्याश्रित्य तत्स्थापने । वस्तुतो निस्सारणे, तोलने च तात्पर्यम् । दुर्गादासमतेन—इयत्तापरिच्छेदस्तोलने घटते, निस्सारण च क्षीरमतेन ।

| | | |
|---|---|---|
| +√तूष् (तूष) १ ६६७ शX,(काकृ√तुष्-तूषति) | तुष्टौ ( प ) क्षी मै सा च जै काकृ-कात शा हे वो । | √तुष् ( तुष ) ४/ प्रीतौ ( प ) । |

ग—कृष्ण वास कृष्णतूष दक्षिणा-तै १,८,११, २४,९,१ दामतूष०-पञ्चवि ब्रा १७,१, कात्या श्रौ २२,४,२०, लाट्या श्रो ८,६,२१ ।

ङ—√तूस ( अक )=प्रसारे । तूसइ, तूसए-सक्षि ३६, क्त-तूसियव्व-पण्ह २,५ ।

ठ—√तूसना १ =सन्तुष्टो तृप्तौ, ( २ ) प्रमादे ।

| | | |
|---|---|---|
| +√तृह् (तृन्हू) ६/६९ शX | हिसायाम ( प ) क्षी-च-काकृ हे । हिंसार्थ —मै सा-नै कात शा । हिंसे—वो । | √तृह् ( तृहि ) ७/ हिसायाम् ( प ) । √स्तृह् (स्तृन्हू ) ६/ हिंसायाम् ( प ) । √स्तृह् ( स्तृहू ) ६/ हिंसायाम् ( प ) । |

ग—तृहन्-ऋ १०,१०२,४ । देवचक्रे यजमानस्य तृहती परिप्लवत-शब्रा १२,४,२,२ । तृहति-मै ३,३,९ ।

| | | |
|---|---|---|
| √तृह् ( तृहि ) ७/१८ मै सा श च जै काक्-शा हे-वो × | हिसायाम् ( प ) क्षी। हिसार्थ —कात। | √तृह् ( तृन्हू ) ६/ हिंसायाम् ( प )। |
| √तृह् ( तृह ) ७/१८ क्षी कात ×, श | हिसायाम् ( प ) मै। मै सा च काक्र शा हे। हिसने—जै। हिसे—वो। | |

ग—तृणेढि-जैब्रा १५१। तृणेढु-शौ ८,८,११।

| | | |
|---|---|---|
| +√तृक्ष् (तृक्ष) १/६५१ श × | गतौ ( प ) क्षी मै सा च जै काक्र कात शा हे। | |

ग—तृक्ष =कश्यपर्षि -(छ), तृक्षाक =एक ऋषि-( छ )।

ड—तुक्खार=उत्तमजात्यश्व -सुर ११,४९, भत्ति। (ऋ>उर्>उ। यथा अमृतम्>अमरूद-इति )।

| | | |
|---|---|---|
| +√तृण् ( तृणु ) ८/५ श | अदने ( उ ) क्षी-मै-सा च-जै काक्र-कात शा-हे। अदने—हे। भक्षे—वो। | >√तृन् ( तृनु ) अदने (उ) इति नन्दी—क्षी। |
| √तृन् ( तृनु ) | अदने ( उ )—मै सा। | |

अन्येषा तु—अनुस्वारीभूतो णत्वमतिक्रामति—सा।

ग—अकृणोतना तृणम् -ऋ १,१६१,११।

ड—तिण=घास -सुपा २३३, अभि १७५, स १७०।

| | | |
|---|---|---|
| √तृद् ( उत्तृदिर् ) ७/९ श | हिंसानादरयो ( उ ) क्षी मै-सा-जै काक्र-कात शा-हे। हिसायाम्—च। हिसे नादरे च—वो। | √तर्द् ( तर्द ) १/ हिंसायाम् ( प )। |

ग—अतृणत्- ऋ ७,१५,३। तृणत्ति-अ वे १९,३७,४। परि तृन्दन्ति-शब्रा ३,८,५,८। ( तदार्पते—शौ ६,५०,३। ), तर्द -ऐब्रा ५,१८, ऐआ ६,५,३।

| | | |
|---|---|---|
| √तृप् ( तृप ) ४/८२ श | प्रीतौ ( प ) क्षी हे प्रीणने—मै सा-च जै-काक्ृ कात-शा-वो। | √तृप् ( तृप ) ६/ तृप्तौ (प) इत्येके—क्षी। √तृप् ( तृप ) ५/ प्रीणने ( प ) √तृफ् (तृफ) ६/ तृप्तौ (प)। |

ग—नात्मना तृप्यति नान्यस्मै ददाति-तै ७,५,४,३।
ङ—√तिप्प ( अक )=तृप्तौ—पिंड ६४७।

| | | |
|---|---|---|
| √तृप ( तृप ) ५/२७ श जै शा × (क्षी ४/८२ स्थले स्मरति) | प्रीणने ( प )—मै। क्षी मै सा च-काक्ृ कात-हे-वो। | पूर्ववत्। |

ग—तृप्णुहि-ऋ ३,१६,६, तैब्रा ७,४,८,७। तृप्णुत-ऋ १,११०,१। तृप्नुयात्-भा पु ३,५,११।

| | | |
|---|---|---|
| +√तृप् ( तृप ) ६/३० श-जै शा × | तृप्तौ ( प ) इत्येके-क्षी क्षी-मै-सा-च काक्ृ कात-हे। प्रीणने—वो | >√तृफ (तृफ) तृप्तौ (प)। पूर्ववत्। |

ग—तृपत्सोम पाहि दह्यदिन्द्र-ऋ ७,११,५। तर्पन्त्यथ जुह्वति-मभार १४,१०,४० इति भौवादिकोऽपि।
ङ—√तिप्प (सक) = तृप्तौ। हेक्ृ—तिप्पेउ-पच्च ५,५। क्ृ-तिप्पियव्व-पउम ११,७३।

| | | |
|---|---|---|
| +√तृफ ( तृफ ) ६/३० च-काक्ृ-कात × | तृप्तौ ( प ) क्षी मै-सा जै शा-हे। प्रीणने—वो। | >√तृप् ( तृप ) ६/ तृप्तौ (प) इत्येके-क्षी। √तृम्प् ( तृम्प ) ६/ तृप्तौ ( प ) इत्येके-क्षी। √तृम्फ् ( तृम्फ ) ६/ तृप्तौ ( प )। |

| | | |
|---|---|---|
| √तृम्प् ( तृम्प ) ६/३१ मै-सा श-जै शा × | तृप्तौ ( प ) इत्येके-क्षी। क्षी च काक्ृ-कात हे। प्रीणने—वो। | <√तृम्फ् ( तृम्फ ) ६/तृप्तौ ( प )। |

ग—तृम्पसि–ऋ ८,४,१७, खि ३,५,४, जै ४,१८,८, तृम्पन्तु–शब्रा ४,७,१,३३।

+√तृम्फ (तृन्फ) ६/३१ तृप्तौ (प) च काकृ कात × क्षी-मै सा जै शा हे। प्रीणने—वो।

>√तृम्प् (तृन्प) तृप्तौ (प)। √तृप् (तृप) ६/ तृप्तो (प) इत्येके-क्षी। √तृफ् (तृफ) ६/ तृप्तौ (प)।

√तृष् (ञितृष) ४/११५ पिपासायाम् (प) क्षी-मै-सा च-जै काकृ-कात शा हे।

√तृष् (ञितृषा)-सि कौ तृषि—वो।

ग—तृष्यन्ति-पै १७,३,१०, तौदादिकोऽपि—तृषन्–शौ २,२९,४।

छ—√तरसना (<तर्पणम्)=पिपासायाम्, आकुलतायाम्।

[+]√तृह् (तृहू) ६/६८ हिंसायाम् (प) वो ×, श क्षी च-काकृ-हे।

√तृह् ७/ हिंसे (प) वो।

ग—ततर्ह-शौ ११,७,७ (११,५,७)। अतृहम्–अ वे ७,३१,७।

√तॄ १/९५४ प्लवनतरणयो (प) श क्षी मै सा जै-काकृ-कात-शा-हे। प्लवने—च। तारेऽभिभवे प्लुत्याम्—वो।

ग—तरति-ऋ ६,७,४, तै १,५,९,६। अप तिर–शौ ६,६, ३।

ङ—√तर (अक)=नीरोगतायाम्—तरइ-पिंड ४१७।

छ—√तरना, √तिरना, √तैरना =प्लवनतरणयो।

+√तेप् (तेपृ) १/३५८ क्षरणार्थ (आ) श काकृ × क्षी-मै-सा च कात। क्षरणे—शा हे। स्रुतौ कम्पे च—जै। श्च्युतौ कम्पे च—वो।

√तिप् (तिपृ) १/ क्षरणार्थ (आ)। √स्तिप् (ष्टिपृ) १/ क्षरणार्थ √स्तेप् (ष्टेपृ) १/ क्षरणार्थ (आ)।

ङ—√थेप=क्षरणे, गलने—थेपइ-पि २०७, सक्षि ३४।

+√तेपृ (तेपृ) १/३६१ कम्पने, च=क्षरणार्थ (आ) पूर्ववत्।
क्षी सा।
क्षरणे कम्पने च—शा हृ।
कम्पे—जै वा।

पूर्वधातारभिन्नाऽय क्षीरेग पृथक् सख्यायते।

+√ तव (तेवृ) १/४९५ देवने (आ) √तेव् १/२६२ रुजायाम् (प)।
श× क्षी मे सा च जै काकृ √देव् (देवृ) १ देवने (आ)।
कात शा हे वो।

देवनम्=क्रीडा-इति हलायुध।
देवनम्=रोदनम्-इति भट्टमल्ल १/२८३।

ग—तेवनम्=केलिकाननम् क्रीडा। यथा शब्दार्थचिन्तामणिधृतरामायण वचनम्—"तेवनेन वन गत्वा नदीस्तीर्त्वा बहूदका"-श क द्रु।

ङ—तेवन। =केलिकाननम्।

√त्यज् (त्यज) १/९७१ हानौ (प)
श× क्षी मै सा च काकृ कात
शा हृ वा।
त्यागे—जे।

ग—तित्याज-ऋ १०,७१,६। त्यजति-ब्रह्मोपनि १, आवा १७, नाप ५,१, अक्षि १३, कुण्डिको ८, गी ८,६।

ङ—√चय (सक)=त्यागे। वकृ-चयत-सुपा ३८८। सकृ-चइअ-महा, उवा।

च—√तेज्ज (सक)=त्यागे। तेज्जइ-पिग।

छ—√तजना, √त्यागना } (<त्यजनम्) = त्यागे।

+√त्रख् (त्रख) १/१३९ गत्यर्थ (प) सम्मतताया <√रख् (रख) गत्यर्थ (प)।
क्षी-मै-श च-जै-काकृ तु-सा १३९।
कात-शा हे वो× सा।

+√त्रङ्क् (त्रकि) १/९३ गत्यर्थ (आ) √त्रङ्ख् (त्रखि) १/ गत्यर्थ (प)।
श× क्षी मै सा-च कात। गतौ—जै काकृ शा हे वो। √त्रङ्ग् (त्रगि) १ गत्यर्थ (प) इति चन्द्र —क्षी।

छ— √तिरकाना=शिथिलगतौ (लश), (२) रज्जुशैथिल्ये (लश)।
तिरकट=अग्र नौवातपट (लश)।
√तिरकना=स्फाटे।

+√त्रङ्ख् (त्रखि)१/१३९ गत्यर्थ (प) सम्मताया तु-सा। सा। <√रङ्ख् (रखि) गत्यर्थ (प)
√त्रख् (त्रख) गत्यर्थ (प)

+√त्रङ्ग् (त्रगि) १/१४९ गत्यर्थ (प) इति च चन्द्र —क्षी। क्षी-मै-च। गते—वो। <√तङ्ग् (तगि) गत्यर्थ (प)।
सा-श-जै-काकृ-कात-शा हे×
√त्रङ्क् (त्रकि) १/ गत्यर्थ (प)।
√त्रख् (त्रख) १/ गत्यर्थ (प)।
√त्रङ्ख् (त्रखि) १/ गत्यर्थ (प)।

ग—त्रङ्ग, त्रङ्गा=हरिश्चन्द्रपुरम्–ब्योथ –रॉथ। (त्रङ्गति=शोभादिक गच्छति)।
छ—त्रङ्ग=राजनगरम् (हरिश्चन्द्रस्य)।

+√त्रन्द् (त्रदि) १/६६ चेष्टायाम् (प) क्षी-मै-सा-च जै-काकृ-कात शा-हे। चेष्टे—वो। तुन्दाना–शौ ६,२२,३, पै १९,२२,१२।
श×

क—तेर् (ऐ) द्=छेदने, प्रवेशे। लिथु त्रेन्दु–ऐति, त्रन्दे–वा पॉकर्नी।

√त्रप् (त्रपूष) १/३७१ लज्जायाम् (आ) क्षी मै-सा-च-जै-काकृ-कात शा-हे। ह्रियि—वो।
श×
'त्रपि' भोजसूत्रम्–क्षी
१/८०३ घटादि०।

मै-श-च जै-काकृ कात-शा (हे)× -

ग—सा ज्यपत्रपमाणेव-ऋ ७,३७,१०, ज्यपत्रपसि-७,५७,७८।

√त्रस् (त्रसी) ४/९ नै×,श — उद्वेगे (प) क्षी-मे-सा-काकृ कात। उद्वेजने—शा। भये—च-हे-वो। — √त्रस् (त्रसी) १/ भये (प) वो। √त्रस् (त्रस) वारणे (प) इति दुर्ग-क्षी। √त्रस् (त्रसि) १०/ भासार्थे (प)।

ग—त्रसन्ति-ऋ ६,१४,४, मे ४,७,१। भयात् त्रस्यति-मभार ३,३०८०। त्रस्यन्ति-वा ग ५,४१,१८।

ङ—√तस (अक)=त्रासे। कृ-तसियव्व-उप ३३९ टी।

छ—√त्रसना * † (<त्रसनम्)=त्रासे।

√त्रुट् (त्रुट) ६/९५ श× — छेदने (प) क्षी मै-सा च-नै काकृ-कात शा हे। छिदि—वो। — विरुजेयुवित्रुट्येयु-कात्या श्रौ ७७,३,२७।

ग—त्रुटत्तन्तुक मुक्ताजालम्-भर्तृ १,९५। दैवादिकोऽपि-त्रुट्यदट्टालमेखला-राजत १,३०१। यावन्मे दन्ता न त्रुट्यन्ति-हितोप १५,१०।

ङ— √तुट्ट (अक)-तुट्टइ-महा। √टुट्ट (अक)-टुट्टइ-पिंग। √तिउट्ट (अक)-तिउट्टइ-सूअ १,१५,५।

छ—√तूटना, √टूटना =छेदने।

+√त्रुप् (त्रुप) १/४०४ श× — हिंसार्थ (प) क्षी मै-सा च-कात। हिंसायाम्—जै-शा-हे। वधे—वो। भर्त्सनहिंसयो—काकृ। — द्रष्ट √तुप् १/४०७।

छ—√तुरपना=वर्तिकाकारेण सीवने।

| | | |
|---|---|---|
| +√त्रुफ् (त्रुफ) १/४०४<br>श× | हिंसार्थ (प) इति<br>चन्द्र —क्षी<br>क्षी-मै-सा च कात।<br>हिंसायाम्—जै-शा-हे।<br>भर्त्सनहिंसयो —जै काक्र।<br>वधे—वो। | <√त्रुप् (त्रुप) हिंसार्थ (प)<br>√त्रुप्>√त्रुफ। |
| +√त्रुम्प् (त्रुम्प) १/४०५<br>श× | हिंसार्थ (प)<br>क्षी-मै-सा-च कात।<br>हिंसायाम्—जै-शा-हे।<br>भर्त्सनहिंसयो —काक्र।<br>वधे—वो। | √तुप् (तुप) १/हिंसार्थ (प)।<br>√तुफ् (तुफ) १ हिंसार्थ (प)।<br>√त्रुफ् (त्रुफ) १/हिंसार्थ (प)।<br>√तुम्फ् (तुम्फ) १/ हिंसार्थ (प)।<br>√त्रुम्फ् (त्रुम्फ) १/हिंसार्थ (प)। |
| +√त्रुम्फ् (त्रुम्फ १/४०५<br>श× | हिंसार्थ (प) इति चन्द्र —क्षी।<br>क्षी-मै-सा-च-कात।<br>हिंसायाम्—जै शा हे।<br>भर्त्सनहिंसयो —काक्र<br>वधे—वो। | पूर्ववत्।<br>तत्क्रमेण च विकाससम्भवः। |
| √त्रै (त्रैङ्) १/९५०<br>श× | पालने (आ)<br>क्षी मै सा-च-जै काक्र कात<br>शा हे वो। | |
| √त्रा ४', ७/ | ह्वि। | |

'त्राहि'—त्रैङ् पालने इत्यत्र केचिददादौ √त्रा पठन्ति—दुर्गादा।

ग—त्रायसे—ऋ ७,२४,४। त्राहि—खि ७,१,८। त्रासि—एकाक्षरो १७। त्रास्व—कौ २,८०८। त्राति—गोभा १,१,७।

| | | |
|---|---|---|
| +√त्रौक् (त्रौकृ) १/९६<br>श | गत्यर्थ (आ)<br>क्षी-मै-सा च कात।<br>गतौ—जै-काक्र शा-हे-वो।<br>गत्याम्—वो। | √टौक् (टौकृ) १/ गत्यर्थ (आ) इति दुर्ग —क्षी।<br>√ढौक् (ढौकृ) १/गत्यर्थ (आ)। |

ठ—तौक ( अर ) = आभूषणभेद , ( ? ) ( पट्ट ) सारसनम् ।

ठ—तौचा ( देश ) = आभूषणभेद । यत् क्वचिद् ग्रामनटीभि शिरसि धार्यते ।

+√त्वक्ष् (त्वक्षू) १/६८७ श × — तनूकरणे ( प ) क्षी मै सा-च-जै काक्र कात शा-हे । कार्श्ये—वो । — त्वष्टा । त्वक्षतेर्वा स्यात् करोतिकर्मण –निरु ८।१३,१ । = क्रियासामान्यवाचिन , उत्कृष्टतनूकरणस्यार्थस्य— दुर्गाचा ।

√त्वक्ष् ?/ — निर्माणे, विधाने–ह्वि ।

ग—त्वक्षाणो अति विश्वा—ऋ १०,४९१ , त्वक्षसा—१,१००,१५ ।

+√त्वक्ष् (त्वक्ष) १/६५६ मै सा श-जै काक्र-कात × — त्वचने ( प ) क्षी-च शा हे । त्वचो ग्राहे—वो । — √त्वच् ( त्वच ) ६/ सवरणे ( प ) । √तक्ष् ( तक्ष ) १/६६७ त्वचने ( प ) मै ।

त्वचनम् = सवरणम्—क्षी ।

√त्वङ्ग् ( त्वगि ) १/१४० श × — गत्यर्थ ( प ) क्षी-मै सा च । गतौ कम्पने च—जै शा ह । कम्पे गते—वो । कम्पने—काक्र कात । — √तङ्ग् ( तगि ) १/ गत्यर्थ ( प ) ।

ग—त्वङ्गत्तुरङ्गसघातखुराग्राङ्कनलक्षता—कथासरि १८ ७ । त्वङ्गदग्र—दशकु १३० ४ ।

√त्वङ्ग् ( त्वगि ) १/१५३ श × — कम्पने, च = गत्यर्थ (प) सा । क्षी-म शा-ह । गत्यर्थ —च । गतौ कम्पने च—जै शा ह । कम्पने—काक्र कात । कम्पे गतौ ( गते )—वो ।

सायणेन पूर्वधातो पृथक् सख्यायते । यु मी सस्करणेऽपि ।

ग—पूर्ववत् ।

√त्वच् ( त्वच ) ६/२२ सवरणे ( प )
श × क्षी-मै सा-च-जै काकृ-
कात शा हे।
वृतौ—वो।

ग—त्वक्—ऋ १,७०,७। त्वचस्यम्—अ वे २,३,७।

छ—√दव्रोचना ( <दवचना <तवचना <त्वचनम् )=समावृत्य पीडने, ( २ ) सवरणे।

√त्वञ्च् ( त्वन्चु ) १/१८९ गत्यर्थ ( प ) √त्वञ्च् (त्वन्चु) ७/ सङ्कोचे
श × क्षी मै-सा-च। ( प ) इति दुर्गादा।
गतौ—जै-काकृ कात शा हे। तु+√अञ्च् ( अन्चु )
इतौ—वो। १/ गतौ ( प )।

छ—√दवकना } =(<तवकना <तवचना <त्वञ्चनम् ) = गूहने, सकोच
ड—√दुकना† } गतौ।

√त्वर् (ञित्वरा) १/७६८ सम्भ्रमे ( आ ) √तुर् (तुर) ३/ त्वरणे (प)।
श × क्षी मै सा च जै काकृ √तूर् ( तूरी ) ४/ गतित्वरण
कात-शा ह। हिंसनयो ( आ )।
स्यदे—वो

सम्भ्रम =अत्राशुकारिता—क्षी।

ग—त्वरेत—काठ ६,६, क ४,५, गोत्रा १,५,८। अभित्वरमाण —मै ४,५,५। ममापि त्वरते मन —वा रा ३,७८,२०।

छ—√तुअर ( अक )=त्वरायाम्। तुअर—गा ६०९।
ड—√तर ( अक )=त्वरायाम्। तर—विसे २६०१।

+√त्विप् (त्विषा) १/९८५ दीप्तौ ( उ )
जै×, श ( सा√त्विष् क्षी-मै-सा च काकृ-
[ त्विष ]) कात-शा-हे।
भासे—वो।
दाननिरसनयो
( अवोपसर्गे )—
क्षी मै सा शा-हे।
दाने—वो।
√त्विष् २/, ४/, ६/ ह्वि।

ग—तित्विषे-ऋ १,१०२,७, मै १,३,३२ ।

| | | |
|---|---|---|
| +√त्सञ्म्_(त्सञ्म)१/५५३ गतौ (प) इति कौशिक—<br>मै-सा श च-जै-काकृ<br>कात शा वो × | क्षी<br>क्षी हे । | <√त्सर्_ (त्मर) छञ्म<br>गतौ (प)।<br>√त्सर्_ + छञ्म =<br>√त्सञ्म्_इति वागीश । |

| | | |
|---|---|---|
| √त्सर्_(त्सर) १/५५३<br>श × | छञ्मगतौ (प)<br>क्षा मै-सा च जै काकृ कात<br>शा हे ।<br>छञ्मगत्याम्—वो । | √सृ १/ गतौ (प)।<br>त्सरति-निघ २/१४=<br>गतिकर्मा । |

ग—तत्सार-ऋ १,१४५,४। अवत्सरत्-१,७१,५। त्सरति-शौ ८,६,८, शत्रा ११,१,६,१२।

| | | |
|---|---|---|
| +√थुड्_(थुड) ६/१०६<br>श × | सवरणे (प)<br>क्षी मै-सा च-जै काकृ कात<br>शा-हे ।<br>सवृतौ—वो । | √स्फुड्_(स्फुड) ६/ सवरणे<br>(प)।<br>√छुड्_ (छुड) ६/ मवरणे<br>(प) इत्येके-मै । |

| | | |
|---|---|---|
| ?+√थुर्व्_(थुर्वी) १/५७८<br>श ×( काकृ-√घुर्व<br>[ घुर्वी ] | हिंसार्थ (प) इति<br>चन्द्र —क्षी ।<br>क्षी-मै-सा च-कात ।<br>हिसने—जै ।<br>हिसायाम्—काकृ-शा-हे ।<br>वधे—वो । | <√धुर्व्_(धुर्वी) हिसार्थ<br>(प)।<br>√तुर्व्_ (तुर्वी) १/<br>हिंसार्थ (प)।<br>√थर्व्_ १/२०५८ हिसा<br>याम्(प)।<br>थर्वतिश्चरतिकर्मा—<br>निरु ११,१९,१।<br>√दुर्व्_ (दुर्वी) १/<br>हिंसार्थ (प)। |

मैत्रायण्या सहिताया ‘थूर्वन्त’ इत्यत्र स्याल्लैपिकी त्रुटि । तत्सस्करणे ‘तूर्वन्त’ इति पाठोऽस्ति-ह्वि ।

ठ—√थुरना<br>छ—√थरना } (<थूर्वणम्=वधे)=(१) कुट्टने, (२) आघाते, ताडने ।

छ—√थूरना (<थूर्वणम्)=(१) दलने, (२) ताडने, (३) बलात्प्रवेशने, (४) बलात्पूरणे।

√दश् (दन्श) १/९७४ दशने (प) क्षी मै सा च जै काक्रु कात शा हे। दशने—गो।

√दस् (दसि) १०/ दर्शनदशनयो (आ)।
√दश् (दशि) १०/भासार्थं (प)।

ग—ददशाना–ऋ १०,९५,९। दशन्ति–मे ३,६,७, शब्रा ७,४,१,२९।

ङ—√दस=दशने। दसइ–नाट–साहि ७३। दसतु–आचा।

ङ—√डस=दशने। डसइ–पि २०२।

छ—√डँसना / √डसना =दशने।

+√दक्ष् (दक्ष) १/६०३ वृद्धौ शीघ्रार्थे च (आ) क्षी मै सा कात। वृद्धौ—च। वृद्धौ शैघ्र्ये च—जै शा हे। वृद्धौ शीघ्रे च—काक्रु। स्यदे वृद्धौ—वो।
शX

दक्षते समर्द्धयतिकर्मण–निरु १,७,१।
दक्षतेरुत्साहकर्मण. — निरु १,७,१।

ग—दक्षते–ऋ ७,१६,६, जै ४,२९,६।

ङ—दक्ख=चतुर–काप, सुपा २८९, आ २८।

√दक्ष् (दक्ष) १/७६३ गतिहिंसनयो (आ) क्षी। गतिहिंसयो—मै-शा। गतिशासनयो—सा। गतौ—च। गतिहिंसायाम्—जै। गतौ। हिंसायाम्—कात। गतौ हिंसाया च—काक्रु। हन्त्यर्थे (=गतौ वधे) —वो। सामर्थ्ये—हि।
शX

√धक्क् (धक्क) १०/ नाशने (प)।

ग—दक्षसे-ऋ. ७,१,११=समर्था भवसि-सायण । वस्तुतो द्वावेव धातू अभिन्नौ ।

| | | |
|---|---|---|
| √दघ् ( दघ ) ५/७७ श च-जै-काक्र-कात-शा× | घातने ( प ) क्षी-मै-हे-वो । घातने पालने च—सा | दध्न दध्यते स्रवति-कर्मण –निरु १,९,१ । दध्यति ( दध्नोति ) निघ २/१४=गति-कर्मा । √दघ् पालने । व्यत्ययेन शप—देवराजयज्वा । √दह् ( दह ) १/ भस्मी-करणे ( प ) । √दघ्<दग्ध ( मू ) |

ग—दघ्म-ऋ ७,२६,२१ । दघ्नुयात्–काठ ८,१२, क ७,७ । दघ-पै १९ ३७,८ ।

ऊ—√दगना (<दघनम् )=भुशुण्ड्याश्चलने, ( २ ) दाहे । स्याद् दाहार्थस्य 'दग्धम्' इति शब्देन सम्बन्ध ।

| | | |
|---|---|---|
| +√दङ्घ् (दघि) १/१५७ सा श× | पालने च=वर्जने (प) क्षी । पालने—मे-च-जै-कात शा हे । | पूर्ववत् । √दघ् >√दङ्घ् । |
| (काक्र√इङ्घ् [इघि] | पालने—काक्र । त्यागनेऽवने—वा । | |

ड—नग ( दे )=भ्रमर –दे ५,५७ ।
ड—डगा ( दे )=यष्टि –सुपा २३८, ३८८, ५४६ ।
छ—धगा ( देश )=कास ।
ऊ—धगर ( देश )=वाहीक , गोप ।

छ—धॉगड ( देश )=वन्यानार्यजातिविशेष , ( २ ) कूपतडागखननव्यापारो जातिविशेष ।

ऊ—डग ( देश )=अर्धपक्व शुष्कपिण्डखर्जूरफलम् ।

| | | |
|---|---|---|
| √दद् ( दद ) १/१७ श× | दाने ( आ ) क्षी मै-सा च जै काक्र-कात शा-हे । 'धारणे' कोशिकस्तु— क्षी १/८ । धारणे—हे । दाने धृतौ—वो । | √दा ( डुदाञ् ) ३/ दाने (उ) । √दङ्घ् १/१६३ धारणे (प) काक्र । दण्डो ददतेर्धारयतिकर्मण "अक्रूरो ददते मणिम्" इत्यभिभाषन्ते-निरु २,२, ११ । दद्धि—निघ ३/१९ =याच्ञाकर्मा । |

ग—ददते-ऋ १,२४,७, शौ १०,८,३६ । धारणे—पुष्करे त्वा ददन्त-ऋ स ५,३,२४,१ ।

| | | |
|---|---|---|
| √दध ( दध ) १/८ श | धारणे ( आ ) क्षी मै-सा-च-जै काक्र-कात-शा-हे । 'दाने' इति कोशिक:—क्षी । दाने—हे । ददे—वो । | √धा ( डुधाञ् ) ३/ धारण-पोषणयो ( उ ) । दध्यति-निघ २,१४—गतिकर्मा । |

ग—दधते-ऋ ६,१,९, तै २,२,१२,४ ।

| | | |
|---|---|---|
| +√दन्व् (दवि) १/५९२ मै-सा श च-जै-काक्र कात-शा-हे× | गत्यर्थ ( प ) क्षी । व्रजे—वो । | √धन्व् (धवि) १/ गत्यर्थ ( प ) । √धिन्व् १/१९० f गत्यर्थ (प) कात । |

| | | |
|---|---|---|
| √दम् ( दमु ) ४/९० श× | उपशमे ( प ) क्षी-मै-सा च-काक्र-कात । उपशमने—जै शा हे । शमे—वो । | √तम् ( तमु ) ४/ काङ्क्षायाम् ( प ) । |

ग—दाम्यतु-पै १३,१,३ । दाम्यन् -शब्रा १४,८,२,२ ।
ङ—√दम=निग्रहे । दमेइ-स २८९ ।
छ—√दवना (<दमनम् )=भारादध पतने । शान्तौ ।

| | | |
|---|---|---|
| √दम्भ् (दम्भु) ५/२४ श | दम्भे (प) क्षी-मै-च जै काकृ कात-शा हे। दम्भने—सा। | √दम्भ् १०/ सघाते (आ) वो। √दम्भ् (दभि) १०/ क्षेपे (प) इति नन्दी—क्षी। दभ्नोति-निघ २/१४= गतिकर्मा। |

दभिरिति सौत्रो धातु —सा।

ग—दभन्ति-ऋ ७,३२,१२। आ दभ्नुवन्ति-ऋ १,५५,७, शौ २०,५९,३। दभ्नाति-तै ५,७,४,१, मै ३,३,९। स्तनो वा यो दिप्सति नो वृको वा-ऋ २,२८,१०।

| | | |
|---|---|---|
| √दय् (दय) १/४७८ श× | दानगतिरक्षणहिंसादानेषु (आ) क्षी-मै-सा-कात। दानगतिहिंसादानेषु—काकृ। रक्षणे—च। दानगतिहिंसादहनरक्षणेषु-जे-शा-हे। ग्रहणे गतौ व ते दानेऽवन—वो। | √दे (देङ्) १/ रक्षणे (आ) दयतिरनेककर्मा। उपदयाकर्मा। दानकर्मा वा विभागकर्मा वा। दहतिकर्मा। हिंसाकर्मा-निरु ४,१७,२। |

ग—दयते-ऋ ८,१०३,६, कौ १,४४, जै १,४,१०।

ङ—√दय (सक)=रक्षणे, (२) कृपायाम्, (३) काङ्क्षायाम्, (४) दान। दयइ-आचा।

| | | |
|---|---|---|
| √दरिद्रा २/६२ श | दुर्गतौ (प) क्षी-मै-सा-च-जे-काकृ-कात-शा-हे। दुर्गत्याम्—वो। | √द्रा २/ कुत्सिताया गतौ (प)। कुत्सिता गति =पलायन निद्रा च—क्षी। |

ग—दरिद्रति वियद्द्रुमे-विक्रमाङ्कदेव ११,७४। सर्व एव दरिद्रति-हितोप २,२।

ङ—√दलिद्दा (अक)=दौर्गत्य। भूका-दलिद्दाइअ-सक्षि ३२।

ङ—दरिद्द=(१) निर्धन, (२) दीन-प्रासू २३, कप्पू

| | | |
|---|---|---|
| √दल् (दल) १/५४७ शX | विशरणे (प) क्षी-मै-सा-च-नै काक्ट-कात शा-हे। भेदे—वो। | √दॄ ९/ विदारणे (प)। √दल (दल) १०/ विदारणे (प)। |

ग—दलन्ति-सुश्रु १,३०५,८। दलति-शिशु ९,१५।
ङ—√दल=विकसने, (२) दीर्णे। दलइ-गा ४९५। चक्र-दलत-से १,५८।
ठ—√दलना=दीर्णे।

| | | |
|---|---|---|
| √दस् (दसु) ४/१०० श | च=उपक्षये (प) क्षी मै-सा कात-शा हे वो। उपक्षेपे—च-काक्ट। क्षये—जै। | √तस् (तसु) ४/ उपक्षये (प)। दस्यतेर्वा स्यात्—निरु १,९,१ = क्षयार्थस्य—दुर्गाचार्य। दस्युर्दस्यते क्षयार्थादुपदस्यन्त्यस्मिन् रसा —निरु ७,२३,१। |

ग—अपदस्यन्ति-ऋ १,१३५,८। नोपदस्यन्ति-ऋ १,६२,१२। पशुभिरुप दस्यति-अ वे १२,४,२। अदस्यन्-तै १,६,११,३।

| | | |
|---|---|---|
| √दह् (दह) १/९७६ श | भस्मीकरणे (प) क्षी मै-सा च जै-काक्ट-कात शा-हे। दाहे—वो। | √दघ् (दघ) ५/ घातने (प)। |

ग—अनु दहन्ति-ऋ १०,२८,८। दहति-तै १,५,९१, मै १,८,९।
ङ—√दह=दाहे। दहइ-महा।
ङ—√डह=दाहे। डहइ-महा।

| | | |
|---|---|---|
| +√दा (दाण्) १/९१८ श | दाने (प) क्षी-मै-सा-च जै-काक्ट कात शा हे-वो। | √दा (डुदाञ्) ३/ दाने (उ)। √दद् (दद) १/ दाने (आ)। दाति—निघ ३/२०= दानकर्मा। |

ग—प्रयच्छति-गी ९,२६।

| | | |
|---|---|---|
| √दा ( दाप् ) २/५८ | लवने ( प ) | √दो ४/ अवखण्डने (प) । |
| श | क्षी मै सा च-जै काकृ कात- | √दान १/ अवखण्डने (प)। |
| | शा-हे । | √दी ( दीङ् ) ४/ क्षये |
| | ल्नौ—वो । | ( आ ) । |

ग—दान्ति-ऋ १०,१३१,२, तै १,८,२१,१ । दाति-ऋ १,६३८ । दात्रम्-शत्रा ५३,४,१८ ।

| | | |
|---|---|---|
| √दा ( डुदाञ् ) ३/९ | दाने ( उ ) | √दा १/९१२ वत् । |
| श | क्षी-मै सा च जै काकृ | |
| | कात शा हे वो । | |

ग—ददाति-ऋ २,१२,१०, तै १,५,१,२ । दाति-ऋ ६,२४२, मै ४,१०,१ दत्यादादिकोऽप्ययम् ।

ड—√दा ( सक )=दाने । दाइ देइ-भवि ।

| | | |
|---|---|---|
| +√दाय् ( दाय ) १/८६७ | दाने ( उ ) इति कौशिक - | <√दाश् ( दाशृ ) |
| मै-सा श च जै काकृ- | क्षी । | दाने ( उ ) । |
| कात शा-हे× | क्षी-रो । | |

| | | |
|---|---|---|
| +√दान ( दान ) १/९७९ | अवखण्डने ( उ ) | द्र √दा ( दाप् ) २/४८ । |
| श× | क्षी मै-च काकृ-कात- | |
| | शा ह । | |
| | खण्डने—सा-जै । | |
| | आर्जवे छित्ति—रो । | |

| | | |
|---|---|---|
| √दाश् (दाशृ) १/८६७,८७९ | दाने ( उ ) | >√दाय् ( दायृ ) दाने(उ) |
| श× | क्षी मै सा च काकृ | इति कौशिक -क्षी । |
| | कात शा ह-रा । | √दास् ( दासृ ) १/ |
| ( जै-√दास् [ दासृञ् ] जै । | | दाने ( उ ) । |
| | | दाशति—निघ ३/२०= |
| | | दानकर्मा । |

ग—दाशसि—ऋ ८,२४,२, शौ १८,१,२८ । दाश्नोति-ऋ ८,४,६ ।

| | | |
|---|---|---|
| +√दाश् ( दाश ) ५/३७ श च जै काक्-कात शा× <br><br> ( हे—√दास् ) | हिंसायाम् ( प ) क्षी मै सा । हिंसने—वो । हिंसायाम्—हे । | √दास् ५/१७६ h वधे ( प ) काक्-कात । √दास् ५/७६ h वधे (प) हे, वो । दाश्नोति–ऋ ८,४,६= दाने । |
| √दास् ( दासृ ) १/८७९ श× | दाने ( उ ) क्षी-मै सा-च-जै काक्-कात-शा-हे-वो । उपक्षये—हि । | >√दाश् ( दाशृ ) दाने (उ) इत्येके—क्षी । दासति–निघ ३/२०= दानकर्मा । |

ग—अभिदासति–ऋ १,७९,११, तै १,६,१२,४, शौ १,१९,३ । दासम्–वन दुर्गोप ४,५९,२०,–[ऋ १०,८३,१ ।]

| | | |
|---|---|---|
| +√दिन्व् ( दिवि ) १/५८८ श× | प्रीणनार्थ ( प ) । क्षी मै सा-च कात । प्रीणने—जै-काक् शा हे । प्रीतौ—वा । | √इन्व् ( इवि ) १/ प्रीणनार्थ ( प ) । √धिन्व् (धिवि) १/ प्रीणनार्थ ( प ) । |
| +√दिप् ( दिपृ ) १/३५८ क्षी मै श-च-जै-काक् कात शा-हे वो× | क्षरणार्थ (आ) इवि च काश्यप —सा । सा । | <√तिप् ( तिपृ ) क्षरणार्थ ( आ ) । √तेप् ( तेपृ ) १/ क्षरणार्थ ( आ ) । √देप् ( देपृ ) १/ क्षरणार्थ (आ) इति च काश्यप —सा । |
| √दिव् ( दिवु ) ४/१ | क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिगतिषु ( प ) । क्षी-शा । क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु—मै सा काक् । क्रीडायाम्—च । | √देव् ( देवृ ) १/ देवने ( आ ) । √दीप् ( दीपी ) ४/ दीप्तौ ( आ ) । √द्युत् ( द्युत ) १/ दीप्तौ ( आ ) । |

क्रीडाजयेच्छापणिद्युति-
गतिषु—जै।
क्रीडाविजिगीषाव्यवहार
द्युतिस्तुतिकान्तिगतिषु—
कात।
क्रीडाजयेच्छापणिद्युतिस्तुति-
गतिषु—हे।
जिगीषेच्छापणिद्युतौ क्रीडा-
गत्यो—वो।

ग—अक्षैर्मा दीव्या—ऋ १०,३४,१३। दीव्येयु—मै १,६,११।

√दिश् (दिश) ६/३ अतिसर्जने (उ)
श
क्षी मै-सा च-जै-काकृ-
कात शा हे।
ओचे—वो।
ओचे=दाने, आज्ञापने
वा—दुर्गादास।

√दा (डुदाञ्) ३/ दाने (उ)—दित्सति, दित्सते।

ग—दिदिष्टन—ऋ १०,९२,९। दिशन्तु—तैब्रा १,४,८,५। अव देदिशम्—ऋ ८,७४,१५।

ड—√दिस (सक)=(१) कथने, (२) दाने। दिसइ—भवि।

√दिह् (दिह) २ ५ उपचये (उ)।
श
क्षी मै-सा च-काकृ कात।
लेपे—जै हे।
उपदेहे—शा।
लिपि—वो।

ग—अशनिभिर्दिहाना—ऋ १०,८७,४। अदिहन्—अ वे ४,६,७। मृदा दिग्धा—शब्रा ६,७,१,१५।

√दी (दीङ्) ४/२६ [१/९५२] क्षये (आ)।
श×
क्षी मै-शा च-जै काकृ-
कात शा-हे वो।
उड्डयने—ह्वि।
व्योथ रॉथ।

दीयति—निघ २/१४=
गतिकर्मा।
√डी (डीङ्) ४/ गतौ
(आ)।

ग—त्रिभि श्येनेव दीयतम्-ऋ ५,७८,१। दीयति-ऋ ९,३,१। दीयते-को २,६०६, जै ३,४९,४। दीना -ऋ ४,२४,९।

√दीक्ष् (दीक्ष) १/६०४ शX — मौण्ड्येज्योपनयन नियमव्रतादेशेषु (आ) क्षी मै-सा-जै-काकृ कात-शा-हे। 'मौण्ड्ये' अन्ये-क्षी। मौण्ड्य—च। मौण्ड्येज्या ज्योर्थे (= नियमव्रतादेशोपनीतिषु —यो। — √दिश् (दिश) ६/ अतिसर्जने (उ)। धीक्षते-शब्रा ३,२,२,३०। वीक्षितम्-गोब्रा १,३,१। √दक्ष् (दक्ष) १/ वृद्धौ शीघ्रार्थे च (आ)। √ईष् (ईष) १/ गतिहिंसा दर्शनेषु (आ)।

ग—दीक्षते-तै ६,१,१,३, मै ३,६,१, काठ २,३,१, शब्रा ३,६,३, १।

√दीधी (दीधीङ्) २/६५ जै शाX,श — दीप्तिदेवनयो (आ) क्षी-मै सा काकृ कात हे बो। दीप्तौ—च। चिन्तने—ह्वि। देवनम्=क्रीडा-क्षी। — √ध्यै १/ चिन्तायाम् (प)। दीदयति-निघ १/१७ ज्वलतिकर्मा। दीधितय -निघ २/५=अङ्गुलिनाम।

ग—दीध्यान -ऋ १०,१०,१। अवदीधेत्-ऋ १०,१४४,३। अनु आ दीधीथाम्-शौ २,१२,५। अनु आदीध्याथाम्-पै २,५,५। दीधितिम्-ऋ स ३,४,१९,१= दीप्तौ। दीधितय -निघ १/५=रश्मिनाम।

√दीप् (दीपी) ४/४० श — दीप्तौ (आ) क्षी मै-सा-च नै-काकृ-कात शा हे। दीपने—बो। — दीदयति-निघ १/१७= ज्वलतिकर्मा, ऋ ५,६,४। दीप्यति-ऐब्रा १,८।

ग—दीप्यते-तै ५,६,४,४, काठ १९,१०, शौ १०,७,२।

ड—√दीव् (सक)=(१) दीप्तौ, (२) ज्वलने, (३) प्रकाशे, (४) निवेदने। दीवइ-ओघ ४३४।

ढ—√दीपना*=प्रकाशने।

+√द्रु १/९०९ गतौ (प) √द्रु १/ गतौ (प)।
श क्षी मै-सा-च ने काक्
कात-शा हे-वो।
(काक्-√द्रू) काक्।
ख—द्रवॅइय्या <स द्रवन्त्या =धावन्त्या -अवे, यस्न ९/१८।

ङ—√द्रव (सक)=गतौ, (२) त्यागे। त्वए-विमे ७८।

√दु (टुदु) ५/१० उपतापे (प) √दू (टूड्) ४/ परितापे
श क्षी मे सा च जै कात (आ)।
शा हे वो। √दिव् (दिवु) १०/अर्दने (प)।
परितापे (उ)—काक्।
दाहे—क्षि।
सा-√दु (दुङ) ५/३४ हिंसायाम् (आ)केचित्तु—सा।

ग—विदुनोति सर्वम्-अ वे ५,१८,४। नैन दुन्वन्ति (अग्नय)-शो ९,२,१८। दुनोति चित्त यदि त न पश्ये—सभार ३,१००६९। दुनोति माम्-रघु ८,५४।

ठ—√दुरना=दाह। "ग्रीषम दवत दवरिया कुज कुटीर"-रहीम०।

+√दुड् (दुड) ६/१०७ निमज्जने (प) √हुड् (हुड)६/ निमज्जने (प)।
मै-सा-च जै काक् कात क्षी।
शा हे ✕ मज्जने—वो।

+√दुर्व् (दुर्वी) १/५६९ हिंसार्थ (प) √तुर्व् (तुर्वी) १/हिंसार्थ (प)।
श-जै ✕ क्षी-मै-सा च-कात। √थुर्व् (थुर्वी) १/हिंसार्थ (प)।
हिंसायाम्—काक् कात। √धुर्व् (धुर्वी) १/हिंसार्थ (प)।
वधे—वो। छ-√धुरना*† = आहतौ।

क-*देर् (ऐ) उआ = दूर्वा। मुदार्त तर्वे, तेवे। हॉले तेर्वे-वा पॉकर्नी।

ग—दूर्वाया इव-ऋ १०,१३४,५, दूर्वा रोहन्तु-१०,१४२,८।

√दुष् (दुष) ४/७२ वैकृत्ये (प)
श क्षी मै-सा-च काक्-कात
शा-हे।
वैकृते—वो।
(जै√द्रुष् [द्रुषौ]) वितत्ये।—जै।

ग—दुष्यति–शाङ्खा आ १२,५, छान्दो ८,१०,१। दूषयन्ति–ऋ ७,१०४,९, शौ ८,४,९।

| | | |
|---|---|---|
| +√दुहृ (दुहिर्) १/७२९ श-जै× | अर्दने (प) इति चन्द्रदुर्गौ–क्षी क्षी मै-सा च-काकृ-कात-शा हे वो। | <√तुहृ (तुहिर्) १/ अर्दने (प)। दोधत –कौ २,१००२ (उपतापेऽपि वृत्ति)। √उहृ (उहिर्) १/ अर्दने (प)। √दुहृ (दुह) २/ प्रपूरणे (प)। दोधति–निघ २/ १२=क्रु यतिकर्मा। |

अर्दनम्=पीडनम्।

ग—दोहन्–तैब्रा २,१,१,३=निष्पीडने। दोहने निष्पीडन भवत्येव।

| | | |
|---|---|---|
| √दुह् (दुह) २/४ श | प्रपूरणे (उ) क्षी-मै सा-च-काकृ-कात-शा। क्षरणे—जै-हे। दुहि—वो। | पूर्ववत्। |

ग—दोहते–ऋ १,१३४,४। दुहन्ति–ऋ १,६४[६,] तै ३,१ ११,७। दोग्धि–शब्रा १,७,१,१७। दुह्यति–इतिहासो १८,१२। दुह्यन्ति–भा पु ९,१९,१३ इति भ्वाद्यदादिदिवादिषु विद्यतेऽय धातु।

| | |
|---|---|
| +√दू (दूङ्) ४/२५ श | परितापे (आ) क्षी-मै-सा-च जै-काकृ-कात-शा-हे। खेदे—वो। कर्मणि दाहे—हि। |

ग—दूयामि भरतश्रेष्ठ १–मभार ४,५९१। मा कथ पश्यन् न दूयसे–रघु ७१।

ङ—√दू (सक)=उपतापे, (२) कर्तने। कर्म –दुज्जुतु–पण्ह १,२।

| | | |
|---|---|---|
| √दृह (दृहि) १/७२६ श× | वृद्धौ (प)। क्षी-मै-सा च जै-काकृ-कात-शा हे वो। दार्ढ्ये—हि। | √दृहृ (दृह) १/ वृद्धौ (प)। |

ग—दृहति-मै १,६,३, शब्रा १,१,७,७७।

| | | |
|---|---|---|
| √दॄ १/७९६ | भये (प) मित्। | √दृ १/८०१ भये (प) मित्। |
| क्षी मै श नै काकृ हे-यो× | मा-च कात शा। | |
| | विदारणे—ह्वि। | |

ग—दरयन्त-शो ७८,७१,८।

| | | |
|---|---|---|
| +√दृ ९/३३ | हिंसायाम (प)। | √दृह् ४ ३७ जिघांसायाम् (प) काकृ। |
| श च जै काकृ कात शा हे× | क्षी म मा। | √दृ ९ २२ विदारणे (प)। |

| | |
|---|---|
| √दृ (दृङ्) ६ १३८ | आदरे (आ)। |
| श | क्षी मे सा च शा-ह वो। |
| | अनादरे—जै कात। |
| (काकृ√द्री) | आदरणे—काकृ। |

ग—द्रियेत-शाङ्खा ब्रा ७५,१२। न सयतमाद्रियते-शब्रा ७,३,२,८।

| | | |
|---|---|---|
| √दृप् (दृप) ४/८३ | हर्षमोहनयो (प)। | √दृप् (दृप) १०/ सदीपने (प)। |
| श | क्षी-मै मा ह। | |
| | हर्षे—च। | |
| | मोहने—जै। | |
| | प्रहर्षणे विमोचने च—काकृ। | |
| | हर्षगर्वयो —वो। | |

ग—दृप्यति-ऐब्रा ७,७। दृप्यसि-जैउ ३,६,१,४। अदृपत्-शो २०,१३६,५। अद्राप्सीत्-काठ २८,४, क ४४,४।

| | | |
|---|---|---|
| +√दृप् (दृप) ६/२२ उत्क्लेशे (प) वामनस्तु | | <√दृफ् (दृफ) उत्क्लेशे (प)। |
| क्षी श-जै-काकृ-कात शा हे× | मे म सा-च। | √तृप (तृप) ६/ उत्क्लेशे (प)। |
| | बाधने—वो। | √दृम्फ् (दृम्फ) ६/ उत्क्लेशे (प)। |
| | | √दृम्प (दृम्प) ६/ उत्क्लेशे (प) च। |

अदृपत्—शौ २०,१३६,५ इत्यस्मिन् प्रयोगे व्याकरणदृष्टिं विना विचारेण श्यनोऽभावात् तौदादिकता स्पष्टैव। एकस्मिन्नेव लकारे प्रयोगस्योपलम्भादयं श्यनो पुषादिनियमान्त पाणिनिना विलीनीकृत ।

ठ—√तडपना (<तरपना <दरपना <दर्पणम्) = उत्क्लेशे ।

+√दृफ् (दृफ) ६/३६ उत्क्लेशे (प) पूर्ववत्।
श च ×
क्षी मै सा जै काकृ-कात
शा हे ।
क्लेशे—यो ।

ठ—√तडफना }
ठ—√तडपना } (<तरफना <दरफना <दर्फणम्) = व्याकुलतायाम्, उत्क्लेशे ।
ठ—√डीफना (<डीफ <डिफ <दृफ) = उत्क्लेशे [ वु ख ]।

√दृभ् (दृभी) ६/४४ ग्रन्थे (प) √दृभ् (दृभ) १०/ सन्दर्भे (प)।
श
क्षी-मै-सा-च-जै काकृ-
कात-हे । √दृभ् (दृभी) १०/ भये (प)।
ग्रन्थने—शा ।
गुम्फने—वो ।

ग—दृभति-इति ह्विट्नीरुदाहृतवान्। मया नाधिगतोऽयं प्रयोग । दृभीकम्-ऋ २,१४,३ ।

+√दृम्फ् (दृम्फ) ६/३७ उत्क्लेशे (प) द्र √दृप् ६/२३।
श-च ×
क्षी मै-सा जै काकृ-कात-
शा हे ।
क्लेशे—वो ।
द्र √दृप ६/३३ ।

√दृश् (दृशिर) १/९७३ प्रेक्षणे (प) √दृप १/७९७ धारणे (प)
श काकृ ।
क्षी मै सा च-जै काकृ
कात-शा-हे ।
प्रेक्षे—वो ।

ग—पश्यन्ति—ऋ १,२२,२०, तै १,३,६,२। दृश्यन्ति—मभार ५,१४२, २=पश्यन्ति ।

ग—पुनाति-ऋ १,१६०,३, मा १,९,४। पुनीते-मै १,५,६, काठ ७३,१।

ङ—√पुण=(१) पावित्र्ये, (२) धान्यस्य तुषराहित्ये (अवहनने)। पुणति-णाया १,७।

| | | |
|---|---|---|
| √पूय् (पूयी) १ ४८१ शX | विशरणे दुर्गन्धे च (आ)।<br>क्षी-मै सा काकृ-कात।<br>विशरणे—च।<br>दुर्गन्धविशरणयो—शा हे।<br>दुर्गन्धशीर्यो—वो।<br>दुर्गन्धिविशरणयो—जै। | |

ग—पूयति-तै ५,३,१,१, शब्रा ४,१,१,३। अपूयीत्-जैब्रा १५७। ह्विटनी-महाशय इम भ्वादौ स्वीकृतवान्। दिवादौ कुतो नाङ्गीकृतवान् √प्यायादि-(१।४८५)-धातुवत्।

ङ—पूअ (<पूय)-पण्ह १,१, णाया १,८।

ङ—पूअ=दधि-दे ६,५६।

| | | |
|---|---|---|
| √पूर् (पूरी) ४/४१ श | आप्यायने (आ)<br>क्षी मै सा च-जै काकृ-कात शा हे।<br>पूर्तौ—वो। | √पॄ ३/पालनपूरणया (प)।<br>√पूर्ण् (पूर्ण) १०/सघाते (प)। |

ग—पूर्येथाम्-वा स ५,७८। अभि न॰ पूर्यता रयि-पार गृ ३,४। कुम्भस्य पूर्यत-वा रा ७,६३,७१।

छ—पूजना (<पूर्य[ते])=आप्यायने, पूर्तौ।

| | | |
|---|---|---|
| +√पूर्व् (पूर्व) १/५७३ मै-सा श-जै-कातX | पूरणे (प)<br>क्षी-च काकृ-शा हे।<br>पूर्तौ—वो। | √पॄ ३/पालनपूरणयो (प)।<br>√पर्व् (पर्व) १/पूरणे (प)।<br>√पुर्व् (पुर्व) १/पूरणे (प) मै। |

उदाहरण√पुर्व् (पुर्व) १/५७६ वत्।

| | | |
|---|---|---|
| +√पूल् (पूल) १/५७८ शX | सघाते (प)<br>क्षी मै सा च जै काकृ-कात शा-हे।<br>सहतौ—वो। | √पुण् (पुण) १०/सघाते (प) सा।<br>√पूण् (पूण) १० सघाते (प) जै।<br>√पूर्ण् (पूर्ण) १०/सघाते (प)। |

ग—पूलक०—का श्रौ २२।१ (=तृणसहति०)। पूल्य०—अ वे १८,२,६२।
ङ—पूल=तृणसहति —उप ३२८ टी, कुप्र २।५।
छ—पूला / पूरा } =तृणसहति —बु ग्र।

+√ पूष् (पूष) १/६६८ वृद्धौ (प) द्र √ पुष् १/६९१।
श ×(काकृ—√ पुष) क्षी मै सा च नै काकृ
कात शा-ह वो।

ग—पूषा—ऋ ३,६२,९। पूषणस्य—ऋ १०,५,५। पूषेम—शौ १९,६७,५।

√ पृ ३/४ पालनपूरणयो (प) <√ पॄ पालनपूरणयो (प)।
श च नै काकृ शा × ह्रस्वान्तोऽयमिति नन्दी—क्षी।
क्षी मै सा कात हे।
पालने पूर्तौ—वो।

ग—पिपर्तन—ऋ १,१५६,३, पृधि—१,२२,९। पिपर्ति—गोब्रा ३,२५, गोब्रा २,६,१४।

√ पृ ५/१० प्रीतो (प)
श क्षी मै सा च जै, काकृ (उ),-
कात शा हे वो।
व्यापृतो—ह्वि।

ग—यदिन्द्रियप्रीतय आपृणोति—भा पु ५,५,४, व्यापृण्वान यतोऽबुध—१,११,३७।

+√ पृ (पृङ्) ६/१०१ व्यायामे (आ) √ पृ ३/ पालनपूरणयो (प)।
श (काकृ—√ प्री) क्षी—मै सा च—जै काकृ
(कात—√ वृ [वृङ्]) कात—शा हे।
व्यायामके—वो।
५/ ह्वि।

ग—मा व्यापृत परकार्येषु भूस्त्वम्—मभार २,२१२६।
ङ—√ वावर (अक)=व्यापृतो। वावरइ—भवि।
ङ—वावड (<व्यापृत)—कस, सुर १,९। वावड—(<व्यापृत) उपपृ ८७।
ङ—शौरसे—वापिद (<व्यापृत)—नाट—वेणी ६७।

| | | |
|---|---|---|
| +√पृच् (पृची) ७/१९<br>श× | सम्पर्के (आ)<br>क्षी मै च काकृ कात-वो।<br>सम्पर्चने—सा जै शा-हे। | >√पृच्च् (पृचि) सम्पर्के (आ) इति कौशिक –क्षी।<br>√पृञ्ज (पृजि) ७/ सम्पर्चने (आ) शाकटायनोऽपि-सा।<br>√पृज् (पृजी) ७/ सम्पर्चने (आ) इत्यपरे–सा।<br>√पृच् (पृची) ७/ सम्पर्के (प)। |

ग—य सीमकृण्वन्तमसे विपृचे-( चतुर्थी ? )-ऋ ४ १३,३।

| | | |
|---|---|---|
| √पृच (पृची) ७/२५<br>श | सम्पर्के (प)<br>क्षी-मै सा-च, काकृ (उ),<br>कात शा ह-वो।<br>सम्पर्चने—जै। | पूर्ववत्<br>पृणक्षि–निघ २/२०=दानकर्मा |

ग—पृञ्चन्ति–ऋ १०,१४,१३। पृणक्ति–शब्रा ७,३,१,३०, काठ २१,६। काशकृत्स्नमतेनोभयपदित्वात्–सम्पृङ्क्ते–ऋ ७,१०३,४ इत्यपि।

| | | |
|---|---|---|
| +√पृज् (पृजी) ७/२०<br>क्षी-मै-श-च जै-<br>काकृ कात शा हे वो× | सम्पर्चने (आ) सा।<br>सा। | द्रष्ट √पृच् ७/१९। |
| +√पृच्च् (पृचि) ७/१९<br>मै च जै-काकृ कात-<br>शा हे वो×, श | सम्पर्के (आ) इति<br>कौशिक –क्षी<br>क्षी।<br>सम्पर्चने—सा।<br>दुर्गकाश्यपनन्दिधन-<br>पालादय —सा। | पूर्ववत्। |

ग—ऋतुभिर्न पृङ्क्ते–ऋ १०,९५,१, मध्वा पृञ्चे नद्य —६,१७,३। रुधादाव-स्योभयपदित्वेन तत्रैव गतार्थता।

| | | |
|---|---|---|
| +√पृञ्ज् (पृजि) ७/१९<br>क्षी श च-जै काकृ<br>कात-शा-हे वो× | वर्णे (आ) इत्येके–मै<br>मै सा। | √पिञ्ज् (पिजि) ७/ वर्णे (आ) मै।<br>√पिञ्ज् (पिजि) ७/ अव्यक्ते शब्दे (आ)। |

| | | |
|---|---|---|
| +√पृञ्ज (पृचि) ७/२० क्षी-मै श-च काकृ-कात वो × | सम्पर्चने ( आ ) शाकटायनाऽपि–सा सा नै शा हे । | √पिञ्ज् ( पिजि ) ७ २० सम्पर्चने ( आ ) सा । |
| +√पृड् (पृड) ६/४० श | सुखने ( प ) क्षी मे-सा च नै काकृ कात शा ह । मुनि—वो । | √पृण् (पृण) ६ प्रीणने (प)। √मृड (मृड) ६/ सुखने (प)। |
| √ पृण् (पृण) ६/५८ श ( काकृ-√तृण् ) | प्रीणने ( प ) क्षी मै मा च नै काकृ-कात शा हे । तृपि—वो । | √पृड् (पृड) ६ सुखने (प)। √प्री (प्रीङ्) ४ प्रीतौ (आ)। √प्री ( प्रीञ् ) ९ तर्पण कान्तौ च ( उ )। √पृण् १ २०८ ० अपनयने ( प ) काकृ । |

ग—पृणति-ऋ २ ३६,६ । पृणस्व–मा ५ १०, ते १,७,१३,४, शौ ७,४,७ ।

| | | |
|---|---|---|
| +√पृथ (पृथु) १ ७ ८ मे श-जै काकृ कात शा हे-वो × | विस्तारे ( आ ) क्षी–च । प्रख्याने—सा । | √प्रथ ( प्रथ ) १ प्रख्याने ( आ )। √पृत् १ ६६८ ० व्याप्ता (उ) काकृ । √पृथ् १,६६८ ० व्याप्ता (उ) काकृ । |

"प्रथिम्रदिभ्रस्ना सम्प्रसारणम् –उणा १ २८ इति वचनादनार्षममु मन्यन्ते-क्षी ।

ग—द्यावा पृथिवी-ऋ ४,५६,१ ।

| | | |
|---|---|---|
| √पृष ( पृष ) १ ६९६ श × | सेचन ( प ) क्षी म सा च ने काकृ कात-शा ह । हिंसासक्लेशनदानेषु- इति काश्यप –सा । | √वृष् ( वृषु ) १/ सेचने । √पृप् १/४०७० गतौ ( प ) काकृ । √मृष् ( मृषु ) १/ सेचने ( प )। √स्पृश ( स्पृश ) ६/ संस्पर्शे (प)। |

ग–पर्पत–गागृ ५, ३, १५। इपुपर्षिन्–शत्रा १३, ४, २, ५। दाता मे पृषती नाम्–ऋ ८, ५४, १०। पृषत् –अ व १, २३, २। खले न पर्षान् प्रतिहन्मि भूरि–ऋ, १०, ४८, ७,–निरु ३, १०, १=सञ्चितयान्—दुर्गाचार्य ।

| | | |
|---|---|---|
| √पृ ३/४<br>श-कात× | पाल्नपूरणयो (प)<br>क्षी मै सा काकृ कात-<br>शा हे।<br>पालने—च।<br>पालनपूरणे—जै।<br>पालनपोषणयो —काकृ।<br>पालने पूर्तौ—वो। | >√पृ पालनपूरणयो (प) इति नन्दी—क्षी।<br>√प ९ पालनपूरणयो (प)।<br>√पार् (पार) १०/ कर्मसमाप्तौ (प)।<br>√पूरी (पूरी) ४/ आप्यायने (आ)। |
| √पृ | ह्वि। | |

ग—पिपर्ति–खि ५, २०, ३, मै १, २, ८, काठ २, ९।
च—√पुर (सक)=पूरणे। पुरह्–पिंग (प्रयोज)।

| | | |
|---|---|---|
| √पृ ९/१७<br>कात×,श | पाल्नपूरणयो (प)<br>क्षी-मै-सा शा-हे।<br>पालने—च।<br>पाल्नपूरणे—जै।<br>पालनपोषणयो –काकृ (उ)।<br>पालने पूर्तौ—वो। | पूर्ववत्। |

ग—पृणीत –ऋ १०, ११७, ९। पृणाति–शौ ६, २२, ३।

| | |
|---|---|
| √पेब् (पेबृ) १/३७२<br>क्षी सा-श-जै काकृ-<br>कात शा हे वो× | सेवने (आ) मै।<br>मै।<br>गतौ—च। |

| | | |
|---|---|---|
| +√पेल् (पेलृ) १/५४०<br>श× | गतौ (प)<br>क्षी-मै-सा च-जै काकृ-<br>कात शा-हे।<br>गतौ चाले च—वो। | पेलयति–निघ २/१४= गतिकर्मा।<br>पिपीलिका पेलतेर्गतिकर्मण –निरु ७, १३।<br>√फेल् (फेलृ) १/गतौ (प)।<br>√पेण् १/१५१ गतौ (प) च। |

ग—पुष्पपेलव०-कथास ७१ ९७।

ङ—√उप्पेल ( < उन्+√पेल् )=उच्चे करण उन्नता। उप्पलिअ-कुमा ।

छ—√पेल्ना ( < पेल्नम् )=प्रेरणे, प्रवेशे। √ पीड्धातोर्व्युत्पादनापेक्षया प्रकृतधातोर्व्युत्पादने लाघवम्।

| | | |
|---|---|---|
| +√पेव्र् ( पेवृ ) १ ५०२ शX | सेवने ( आ ) क्षी-च-जै शा हे। सेचने—मै-सा-काक्-कात। सेने—वो। | √ प्लेव् (प्लेवृ) १ सेवने ( आ )। √मेव ( मेवृ ) १/ सेवन ( आ )। |
| +√पेश ( पेशृ ) १ ७१२ मै श च जै-काक्र कात-शा-हे वोX | गतौ (प) इति सभ्या —क्षी क्षी सा। | < √पेस् ( पेसृ ) गतौ (प)। √ पिस् ( पिसृ ) १/ गतौ(प)। √पिश् (पिशृ) १/ गतौ (प)। |

ग—एकोन्मीलनपेशल –उत्तरराम ६, ३२।

| | | |
|---|---|---|
| +√पेस् ( पेसृ ) १/७१३ शX | गतौ ( प ) क्षी मै-सा-च जै-काक् कात-शा हे। गत्याम्—वो। | > √पेश ( पेशृ ) गतौ (प)। इति सभ्या —क्षी। शेष पूर्ववत्। |

ग—पेसुक –शब्रा १,७,३,१८।

| | | |
|---|---|---|
| +√पै १/९०५ शX | शोषणे ( प ) क्षी-मै-सा च जै काक्-कात शा हे। शोषे—वो। | √पा १/ पाने ( प )। √वै ( ओवै ) १/ शोषणे ( प )। |

ग—क्षरन्नापो न पायनाय राये सहस्राय–ऋ १,११६,९।

| | | |
|---|---|---|
| +√पैण् ( पैणृ ) १/४५० श च काक् कात वोX | गतिप्रेरणश्लेषणेषु ( प ) क्षी-मै सा जै शा-हे। | √पेण् १/१५० गतिप्रेरण श्लेषणेषु ( प ) कात। √पेण् १/१५१ गतौ—च। √प्रण् १/२१३ a गतिप्रेरण-श्लेषणेषु ( प ) काक्। √प्रेण १/२१३ b गति-प्रेरणश्लेषणेषु (प) काक्। |

ड—√पेल्ल ( सक )=प्ररणे, क्षेपणे। कर्म–पेल्लिज्जइ–उव ।
ऊ—√पेडना } ( < पैणनम् )=प्रेरणे।
ऊ—√बेंडना }
ऊ—पैगा,पैंडा=मार्ग, ( २ ) सादी, ( ३ ) प्रणाली।

√प्याय् (ओप्यायी) १ ४८१ वृद्धौ ( आ ) शX क्षी-मै सा च-जै-काकृ-कात शा हे-वो। ४ ह्विट्नी।

√प्यै ( प्यैङ ) १/ वृद्धौ ( आ )। √स्फाय् ( स्फायी ) १/ वृद्धौ ( आ )।

ग—प्यायताम्–शब्रा ३,४,३,१८। पिप्यताम्–ऋ ६,५०,१२। प्यायन्ति–जैब्रा ४८।

+√प्युष् ( प्युष ) ४ १०२ विभागे (प) इति दुर्ग — मै-सा श-जै काकृ कात- क्षी। शाX क्षी-च हे। दाहे भागे च—वो।

<√प्युस ( प्युस ) विभागे ( प )। √पुस् ( पुस ) ४/१०२ विभागे। (प) इत्येके-क्षी। √प्युष ( प्युष ) १०/१४० उत्सर्गे ( प ) हे। √ब्युस ( ब्युस ) ४/ विभागे ( प ) सा। √व्युष् (व्युष)४/ विभागे ( प ) मै-सा। √बुस (बुस) ४/ विभागे ( प ) सा।

अपि +√उष ( उष ) १/ दाहे ( प ) = अप्युष्। "वष्टिभागुरिरल्लोपम्" इत्यकारलोपे सति √प्युष् इति धातुर्निष्पद्यते। वोपदेवमतेन दाहार्थकोऽप्ययमिति वयम्।

+√प्युस् ( प्युस ) ४/६ विभागे ( प ) मै सा श च-जै-काकृ क्षी। कातX दाहे—शा-हे। दाहे विभागे च—वो।

पूर्ववत्।

+√प्युष् ( प्युष ) ४/१०७ विभागे ( प ) पुषान्ति >√प्युष् (प्युष) विभागे (प)।
मे-सा श च-जै काकृ क्षी।
कात शा हे× दाह विभागे – वो।

√प्यै ( प्यैङ् ) १/९४९ वृद्धौ ( आ ) √प्याय ( ओप्यायी ) १/
श× क्षी-मै मा च नै काकृ वृद्धौ ( आ )।
कात शा ह वो।

ग—तत आप्यायसे पुन –ऋ १०,८५,५। आप्यायन्ते पुन पुन –मभार १२,९८९।

√प्रच्छ् ( प्रछ ) ६/१२० ज्ञीप्सायाम् ( प ) पृच्छति—निघ ३/१४=
श क्षी मै-सा-कात शा-ह। अर्चतिकर्मा।
प्रश्ने—च।
ज्ञीप्सने—जै।
ईप्सायाम् ( ज्ञीप्सायाम् )
—काकृ।
ज्ञीप्से—वो।

ग—पृच्छते-ऋ ९,८९,३। पृच्छति-तै ६,३,१०,८, शब्रा ८,७,२,१७।
ङ—√पुच्छ ( सक )=प्रश्ने। भूका –पुच्छे-पि ५१६, कुमा, भग।

√प्रथ् ( प्रथ ) १/७५७ प्रख्याने ( आ ) √पृथ् ( पृथ ) १/ प्रख्याने
श× क्षी-मे-सा-काकृ-कात-शा-ह। ( आ ) सा।
विस्तारे—च।
प्रख्यातौ—नै।
प्रक्षेपे ख्यातौ च—वो।

ग—प्रथते वृषायते-ऋ १०,९४,९। प्रथते-तैब्रा १,४,१०,९।

+√प्रस् ( प्रस ) १/७५९ विस्तारे ( आ ) इति √प्रथ् ( प्रथ ) १ ७५७
श-च× दुर्ग –क्षी। प्रख्याने (आ), विस्तारे—
क्षी मै-सा-जै-काकृ- च।
कात-शा-हे।
प्रसवे—क्षी हे।
सवे ततौ—वो।

| | | |
|---|---|---|
| √प्रा २/५० श | पूरणे ( प ) क्षी-मै-सा च जै काकृ-कात-शा हे । पूर्तौ—वो । | √पृ ३/ पालनपूरणया ( प ) । |

ग—प्रासि-ऋ १,४२,९, पप्रतु -८,४१,९, पप्रौ-२,८१,५, १,११५,१ ।

| | | |
|---|---|---|
| √प्री ( प्रीङ् ) ४/३५ श× | प्रीतौ ( आ ) क्षी मै-सा-च-जै काकृ-कात शा-हे-वो । | √प्री ( प्रीञ् ) ९/ तर्पणे कान्तौ च ( उ ) । |
| ४' कर्मणिवा | ह्वि । | |

ग—दग तु निष्कारणादेव प्रीयसे-वा रा ६,१०,२३, मा प्रीयते कश्चिन्—२,१७,३२ । प्रीयामो दर्शनेन व –मभार ३,१५०२५ ।

| | | |
|---|---|---|
| √प्री ( प्रीञ् ) ९ २ श | तर्पणे कान्तौ च ( उ ) क्षी-मै-सा काकृ कात-वो । तृप्तिदीप्त्यो —जै । तर्पणे—च । कान्तितर्पणयो —शा । तृप्तिकान्त्यो —हे । | √प्री ( प्रीञ् ) १० तर्पणे ( उ ) । |

ग—प्रीणीते-ऋ ७,७,३ । प्रीणाति-तै २,६,६,४ ।

| | | |
|---|---|---|
| √प्रु ( प्रुङ् ) १/९४२ श | गतौ ( आ ) क्षी मै सा-च-जै-काकृ कात शा हे । सर्पणे—वो । | √प्लु ( प्लुङ् ) १/ गतौ ( आ ) । प्रवते-निघ २/१४ । |

ग—अभिप्रवन्त समनेव योषा –ऋ ४,५८,८ । अत्यप्रवत-तै ७,१,१,२ ।

| | | |
|---|---|---|
| +√प्रुष् ( प्रुष ) १/६९४ श× | दाहे ( प ) क्षी-मै-सा-च-जै काकृ-कात शा-हे । | प्र+√उष् (उष) १/ दाहे ( प ) । √प्लुष् (प्लुष) १/ दाहे ( प ) । |

ग—प्रोष्ट० १-खि ४,५,२३ [ सपा खिसा २९,२३ प्रोथ इति पाभे ]

| | | |
|---|---|---|
| √प्रुष ( प्रुष ) ९/५५<br>श | स्नेहनसेचनपूरणेषु ( प )<br>क्षी हे ।<br>स्नेहनमोचनपूरणेषु—मे ।<br>स्नेहनसेवनपूरणेषु—सा ।<br>स्नेहसेचनपूरणेषु—काकृ-<br>कात शा ।<br>स्नेहने—च ।<br>स्नेहनसेचनसेवनपूरणेषु—जै ।<br>स्नेहे सेकपूर्त्योश्च—वो । | |

ग—'प्रुष्णन्न्' इत्युदाहृतवान् ह्वि । मया नावाप्तम् । प्रुष्णते–मा २२, २६, ते ७, ५, ११, २ । सोवादिकोऽपि—प्रुष्णुवन्ति–ऋ १, १६८, ८ ।

| | | |
|---|---|---|
| अ+√प्रेण् (प्रेण) १, २१३१<br>पा क्षी-मै-सा श च-जै-<br>णि कात-शा हे वो ×<br>नी<br>य | गतिप्रेषणश्लेषणेषु (प)<br>काकृ । | द्र √पैण् (पैणृ) १ ४५० ।<br>√प्रैण् ( प्रैण )१' गति-<br>प्रेरणश्लेषणेषु (प) सा । |

ग—प्रेणिम् आव्रतम्–ऋ १,११२,१० ।

| | | |
|---|---|---|
| +√प्रेष् ( प्रेषृ ) १/६११<br>मै-श-च-जै काकृ-कात<br>शा-हे-वो × | गतौ ( आ ) | √एष् ( एषृ ) १/ गतौ<br>( आ ) । |
| +√प्रैण् ( प्रैणृ ) १ ४५४<br>क्षी-मै-श-च-जै-काकृ<br>कात शा-हे-वो × | गतिप्रेरणश्लेषणेषु (प)<br>इति कश्चिन् पठ्यते–सा ।<br>सि को ४५८ । | द्रष्ट √ पैण्—१/४५० । |
| +√प्रोथ् (प्रोथृ) १ ८५२<br>श × | पर्याप्तौ ( उ )<br>क्षी-मै-सा-च-जै-कात-<br>शा-हे ।<br>पर्यापणे—वो ।<br>काकृ ? | √प्रुथ् १/६६८ व्याप्तौ<br>( उ ) । |
| √प्रुथ् | नासाशब्दे—ह्वि । | |

ग—प्रोथत्—ऋ ७,३,२, तै ४,८,२,३। प्रोथन्तम्–ऋ १०,११५,३, पोप्रुथत्–१,३०,१६ = शब्दे। नार्थसवाद ।

| | | |
|---|---|---|
| +√प्लक्ष् (प्लक्ष) १/८७८ मै-श च-जै-काक्-कात-शा-हे× | भक्षणे ( उ ) इति दुर्ग –क्षी क्षी-वो। अदने—सा। | √प्लक्ष् ( प्लक्ष ) १/ भक्षणे ( उ )। |

सायणस्तु धातुमिममनार्षमाह–'प्रक्षरतीति प्लक्ष' इति प्रपूर्वात् क्षरते प्लक्ष-शब्दस्य भाष्यकारेण व्युत्पादितत्वात् ( अय धातु ) अनार्ष एव–१/८७७ सा।

इत्थ तु बहवो धातवोऽनार्षा सेत्स्यन्ति। तत्र तत्र सायणेन कुतो न विचार कृत ?

ग—प्लक्ष –तैब्रा ३,८,१९,२।

| | | |
|---|---|---|
| +√प्लव् (प्लव) १/५०८ क्षी श-च-जै-काक्-कात-शा-हे वो× | गतौ (आ) इत्येके–मै। मै-सा। | <√प्लेव् ( प्लेवृ ) गतौ ( आ )। √पव् (पव)१/गतौ (आ) इत्यन्ये–मै। √प्लु ( प्लुङ् ) १/ गतौ ( आ )। |

ग—प्लवते-ऐब्रा ६,३०। क्त 'प्लवित'-रूप दृष्ट्वैव शक्यते स्वीकर्तुम्, 'प्लवते' इत्यस्य प्लुङ्धातुनापि सिद्धत्वात्।

| | |
|---|---|
| √प्लिहृ ( प्लिह ) १/६३४ श×, (च-शा√प्लीहृ) | गतौ ( आ )। क्षी मै-सा-च जै कात-शा-हे। वक्रगतौ—काकृ। गत्याम्—वो। |

क—( स् ) प्लेइघ्=विस्तारे-वा पॉकर्नी ।

ग—प्लिहा ( प्लेहते=वृद्धिं गच्छतीति )=प्लीहरोग । यथा याज्ञवल्क्ये ३,९४–"नाभि क्लोम यकृत् प्लिहा"।

| | | |
|---|---|---|
| √प्ली ९/३४ क्षी-श-च-जै-काकृ-कात शा हे वो× | गतौ ( प ) मै। मै-सा। | √ब्ली ९/ वरणे ( प )। |

ग—'विप्लीयन्ते' इत्युदाहरति ह्वि ।

√प्लु ( प्लुङ ) १/१०२३ श — गतौ ( आ ) क्षी मे-सा च-जै काकृ कात शा हे । सर्पणे—वो । — √प्रु ( प्रुङ् ) १/ गतौ ( आ ) ।

ग—प्लवते-ऋ १० १५५ ३, पै ६ ८,७ ।

√प्लुष ( प्लुषु ) १/६९५ श× — दाहे ( प ) क्षी-मे सा च जै काकृ कात शा हे । दहि—वो । — √प्रुष ( प्रुष ) १/६९४ दाह ( प ) ।

ग—प्लोषति-इति ह्वि । मया नाधिगतम् । विप्लुष्ट०—वा रा ७,१०५,९ । मदनप्लोषणम्—माल्तीमा १ ।

+√प्लुष् ( प्लुष ) ४ ७ च जै काकृ-कात शा वो×,श — दाहे ( प ) क्षी मै-सा हे । — पूर्ववत् ।

ग—उत्तरधातुवत् ।

+√प्लुप् ( प्लुष ) ४/१०३ श शा× — दाह ( प ) पुषादि क्षी मै सा च-जै काकृ कात ह । दहि—वो । — पूर्ववत् ।

ग—प्लुष्यते ( कर्मणि ? )-सुश्रु. १,३७,१, प्लुष्ट०—बृह स ५,९४,३६ ।

+√प्लुष् ( प्लुष ) ९/५६ श — स्नेहसेचनपूरणेषु ( प ) क्षी हे । स्नेहनमोचनपूरणेषु—मै स्नेहनसेवनपूरणेषु—सा । स्नेहने—च । स्नेहनसेचनसेवन-पूरणेषु—जै । — √प्रुप् ( प्रुष ) ९' स्नेह-सेचनपूरणेषु ( प )

स्नेहनसेचनपूरणेषु—
काक्र कात-शा।
स्नेहे सेकपूर्त्योश्च—गो।

ग—प्लुष्टश्लिष्टायतभुज०-मभार ९,३००। प्लुष्ट०-कथासरि ४०,६८।

+√प्लेव (प्लेवृ) १ ५०५ सेवने (आ)
श च-काक्र-कात×
क्षी-जै शा-ह।
सेचने—मै सा।
सेवे—वो।

√पेव् (पेवृ) १ सेवने (आ)।

√प्सा २/४४ भक्षणे (प)
श
क्षी मै-सा-च-नै काक्र
कात शा-हे वो।

√भस् (भस) ३/ भर्त्सन
दीप्त्योः (प)।
भक्षणदीप्त्योः—ऋग्भाष्ये
१,२८,७-सायण।
प्साति-निघ २/१४ गति
कर्मा।
यद्प्स इत्यभक्षस्य-निरु
५,१३।

ग—सपत्नान् प्साहि मे पूर्वान्-शो १०,३,१४। प्यायात्-शत्रा ३,५,४,२४।

√फक्क् (फक्क) १/११५ नीचैर्गतौ (प)
श×
क्षी मै-सा-च जै काक्र कात
शा हे।
असद्व्यवहारे शनैर्गतौ—
वो।

√ध्वक्क् (ध्वक्क) १/
गत्यर्थ (आ)।

नीचैर्गति =मन्दगमनम् असद्व्यवहारो वा—क्षी।

ग—भुजगराजफक्कफणा -प्रतापरुद्रीय ३३,b९।
ङ—फक्किया (<फक्किका) = ग्रन्थविषमस्थलम्-सुर १६,२४७।
छ—फॉक =(<फक्किका) = खण्डम्।

√फण् (फण) १/८०४ गतौ (प)
श×
क्षी मै-सा च-जै काक्र
कात शा-हे वो।

√फण् १/ निस्नेहने
(प) वो।
√फण् १/२०७ शब्दे (प)
काक्र।
फणति—निघ २,१४=
गतिकर्मा।

ग—ऋष्या इव पम्फणत –ऋ ५,५,११। फण (फणति=विस्तृति गच्छति)-तैत्रा ७,१०,१,४। अफाणयन्–ऋ ८,५८,१२, एत्रा २,२।

√फल् ( ञिफला ) १/५१७ विशरणे ( प )
शX
क्षी मै सा च-जै-काकृ
कात शा-हे।
भिन्नि—रो।

√फुल्ल ( फुल्ल ) १ ५२७ विकमने ( प )।

ग—फलेन्मूर्धा स्म ते राजन्–रा रा ७,६१७७ ( गी प्र स )। शतधाऽस्य फलेन्मूर्धा–मभार ३ १६५६२।

√फल् ( फल ) १ ५३० निष्पत्तौ ( प )
श
क्षी-मै सा च जै-काकृ-
कात-शा-हे वो।

√फल् १/३८१ गतौ (प)
काकृ।
√पल ( पल ) १/७७७ b
निष्पत्तौ ( प ) काकृ।

ग—सर्वकामान फलन्ति ( नगा )-वा ग ४,४४,९२। द्रुमा फलन्ति-हरिव १२७९९। आचार फलते धनम्–मभार ५,३८८७।

ङ—√फल ( अक ) = निष्पत्तौ। फलइ–गा १७,८९४।
छ—√फलना
ठ—√फरना*
} =फलने।

+√फुल्ल ( फुल्ल ) १ ५३७ विकसने ( प )
शX
क्षी मै सा-च-जै काकृ
कात शा हे।
विकासे—रो।

√फु १/५५७ l गतौ(आ)
काकृ।
√फुल् १/७४४ a विकसने
( प ) काकृ।

ङ—√फुल्ल (अक) = विकसने। फुल्लइ, फुल्लए, फुल्लेइ–रभा, सम्मत्त १५०।
च—√ फुल (अक) = विकसने–पिंग।
ठ—√फूलना = विकसने।

+√फेल् ( फेल् ) १/५४१ गतौ ( प )
शX
क्षी-मै-सा-च जै-काकृ
कात-शा-हे वो।

√पेल् (पेल्)१/गतौ (प)।
√प्रेण् १ /७१३a गतिप्रेषण-
श्लेषणेषु ( प ) काकृ।
√फण् १/७१३ b गति
प्रेषणश्लेषणेषु ( प )
काकृ।

ङ—√ फेल ( सक )=प्रेरणे, क्षेपणे, अपनयने। फेलदि-शौ, नाट, सक्क-फेलिअ-नाट ।

√ बहु (बहि) १/६७६ वृद्धौ (आ) शX, (जै काक्र-कात-बो —√ वहु[ वहि ]) क्षी-मै-सा च-शा-हे। जै काक्र कात-बो। √ बहु १/३१६ g गतौ (प) काक्र। √ बृहु (बृहि) १/ वृद्धौ (प)।

तद्देवता पशुभिर्बंहयन्ते ( भहयन्ते–काठ ११, ५)–पञ्चवि ब्रा ७३, १६, ५। यद् बहिष्ठम्–ऋ स ४, ४, ३१, ३।

+√ बद् ( नद ) १/४९ शX (जै कात-√ वद्[व्रद]) स्थैर्ये ( प ) क्षी-मै सा च काक्र-शा-हे बो। जै कात। <√ पद् (पद) स्थैर्ये (प) इति कण्ठ –क्षी। √ बन्द् (बन्द) १/ स्थैर्ये (प) इति मैत्रेय –सा।

क—बेद्=वृद्धौ ?–ग्रा पॉकर्नी ।

ग—ऐङ्गुद बदरीमिश्रम् ( बदति=स्थिरीभवति=छिन्नेऽपि पुन प्ररोहति )–वा रा ७,१०३,७९। बदर्याम्–मभार ३,१७७,११। बदरी–शाङ्खा गृह्य ४,१७। बेधिषे–ऋ १,८०,१३ (तु वें स्क सा, वैतु ग्रि धा =बद् [स्थैर्ये] इतीव ?)।

छ—√ बदना ( <बदनम् )=पणेन कस्यचन मतस्य स्थिरीकरणे।

+√ बध् ( बध ) १/९५८ शX (जै-√ बाध् [बाध]) बन्धने ( आ ) क्षी-मै सा च काक्र-कात-शा हे। बधे निन्दे च—बो। ब्रन्धने—जै। √ बाध् ( बाधृ ) १/रोटने ( आ )। √ बन्ध् ( बन्ध ) ९/बन्धने ( प )।

क—भद्–, भाद् ( ह् )=चित्तविकारे–वा पॉकर्नी। भेध्=बेष्टने, नमने, निष्पीडने, आतङ्कने–जू पॉकर्नी ।

ग—बधेत्–शब्रा ५,३,५,२८। बीभत्सु –ऋ १,१६४,८। बीभत्सते–तैब्रा १,१,३,८।

+√ बन्द् ( बन्द ) १/५१ स्थैर्ये (प) इति मैत्रेय सा क्षी मै-श-च-जै-काक्र- सा। कात शा-हे बोX <√ बद् ( बद ) स्थैर्ये (प)। √ पद् ( पद ) १/४९ स्थैर्ये ( प ) इति कण्ठ –क्षी।

√बन्ध् (बन्ध) ९ ३७ बन्धने (प) क्षी मै-सा च जै, काकृ (उ), कात शा हे। बन्धे—वो।
शX

√पद् (पद) १ ४९ स्थैर्ये (प)।
√बद् (बद) १ ४९ स्थैर्ये (प)।
√बध् (बध) १ ८ बन्धने (प)।
√बन्द् (बन्द) १ २१ स्थैर्ये (प) सा।

ग—बध्नाति-ते ६ १ ७,७, पै १,८२,१, एआ ५,१,३।

+√बभ्र् (बभ्र) १/२१,६ गत्यर्थ (प) क्षी। गतौ—हे। गत्याम्—वो।
जैX,श
मै-सा-च-काकृ
कात शा√बभ्र

√मभ्र (मभ्र) १ गत्यर्थ (प)।

ग—बभ्रिर्वज्रम्-ऋ ६,२३,४।

+√बम्ब् (बम्ब) १ ४१७ गतौ (प) इति कौशिक- क्षी। क्षी सा-हे। गत्याम्—वो।
मै श-च जै काकृ-
कात-शाX

<√बर्ब् (बर्ब) गतौ (प)।

+√बर्ब् (बर्ब) १ ४१० गतौ (प) क्षी-मै-सा काकृ कात शा-हे। गत्याम्—वो।
श चX, (जै)

>√बम्ब् (बम्ब) गतौ (प)।
√वर्फ् (वर्फ) १ ३०८ गतौ (प)।
√बर्फ् १/१४३ २ गतौ (प) च।

क—बल् बल -, बर् बर्—वा पॉकर्नी।

ग—खदिरबर्बुरौ गौरकाण्डौ-मभाष्ये १,१,४५। बर्बरीतीर्थमाहात्म्यम्। यथा बर्बरिका जाता-स्क पु १,३७,१ (मन रा मोर स)।

ङ—बब्बर (<बर्बर)=अनार्यदेशविशेष-पउम ९८,६५, बर्बरदेशनिवासी—पण्ह १,१, पउम ९९,५५।

ङ—बब्बरी = बर्बरदेशीयमहिला-णाया १,१, औप, इक।

ङ—बबरी=केशरचना–दे ६,९ ।

| | | |
|---|---|---|
| +√बर्ह् (बर्ह) १/६३१ मे श काकृ× (कात शा हे वो √बर्ह्) | प्राधान्ये (आ) क्षी सा च जै। स्तुतौ हिंसायां दाने वाचि—वो। | √बल्ह् (बल्ह) १/प्राधान्य (आ)। √बर्ह् (बर्ह) १०/हिंसायाम् (प)। √वर्ह् (वर्ह) १ परिभाषण हिंसाच्छादनेषु (आ) √बर्ह् १/५४१ प्रयत्ने (आ) काकृ। |

ग—बर्हणा कृत –ऋ १,५४,३ बर्हणा परिबर्हणा–निरु ६,१८,७ परिबर्हणा=परिव्राढ्, परिहिंसा वा–दुर्गाचा । शग्बर्हि–शत्रा १४,९,४,११ ।

ठ—√बहराना
छ—√भुराना } (<बर्हणम्)=विस्मरणे (आच्छादने)।

छ—√बहलाना (<बर्हणम्) = दुःखप्रसङ्ग विस्मार्य चित्तस्यान्यतो नयने (आच्छादने, वाचि)।

| | | |
|---|---|---|
| √बल (बल) १/८७४ श× | प्राणने धान्यावरोधे च (प) क्षी मै सा। प्राणने—च काकृ कात। प्राणधान्यावरोधयो—जै। प्राणनधान्यावरोधनयो—शा-हे। जीवने धान्यावरोधे च—वो। | √बल (बल) १ दाने वधे निरूपणे (आ) वो। √बल् ६/८० गतौ (प) काकृ। |

ग—बल्वलीति–शत्रा ७,३,२,११, जै २१२ [१ चक्रपरिवर्तने ('बल्वलि' इत्येव शब्दने–सा) २–प्राणन इति विवेक ]–वै प को ।

| | | |
|---|---|---|
| +√बल्ह् (बल्ह) १/६३२ श× (मै कात-शा हे-√बल्ह)। | प्राधान्ये (आ) क्षी-सा-च जै। प्राधान्यपरिभाषणहिंसादानेषु—काकृ। स्तुतिहिंसादानवाक्षु—वो। | √बर्ह् (बर्ह) १/ प्राधान्ये (आ)। √बिल्ह् १/५४८० प्राधान्य-परिभाषणहिंसादानेषु (आ) काकृ। |

√मल्ह १/२२२b प्राधान्य परिभाषणहिंसादानेषु (आ) काकृ।
√वल्ह (वल्ह) १,६२२ परिभाषणहिंसादानेषु (आ) मै।

ग—गच्छ बल्हिकान् वा परस्तराम्—अ व ,२२,७। बल्हिक—अ वे प्राति १,४६, शब्रा १२,९,३,३। अमर्ति ना स्थविरा वेवसा गीर्वाळहे अश्विना-ऋ १, १८१,७=वाचि, दार्ढ्ये, घनत्वे।

+√बस् (बसु) ४/१०६ स्तम्भे (प)। श्री मै श च जै काकृ कात शा हे-वा× अपरे वकारादि माहु—सा। <√बस् (बसु) स्तम्भे (प)।

√बस् (बसी) ४,१०८ च=परिणामे (प)। मे सा श च-नै काकृ कात शा हे वा× इति कण्ठ—श्री। √मस् (मसी) ४ परिणाम (प)।

परिणाम = विकार—क्षी।

ग—श्वान बस्त-ऋ १,१६१,१३। ता बस्नि नश्यत-ऋ १,१००,१०।

+√बाड (बाड्) १,२८३ श× (श्री-मै-जै शा-हे काकृ कात-वो-√वाड्)। आप्लाव्ये (आ) सा। सा च। आप्लाव्ये—क्षी मै-जै-शा हे। आप्लावे—काकृ-कात वो। √वाढ् १ १८९ b तीव्रगतौ (प) काकृ। √वृध् (वृधु) १/ वृद्धो (आ)।

आप्लाव = उन्मज्जनम्—दुर्गादास।

ग—बालमेतमबालिशम्-वा रा २,२१,९।
ठ—बाढ=आपूर (आप्लावे)।

√बाध् (बाधृ) १/५ श× रोटन (आ)। क्षी शा हे। लोडने—मै सा। विलोडने—च। √बाह् (बाह) १' प्रयत्न (आ)

प्रतीघाते—जै ।
लोटने—काक्र-कात ।
निहतौ—वो ।

ग—बाधते-ऋ १०,१२७,[(३७,४)२], शौ १,१६,३, अप बाधते १,३५,९ ।

ङ—√बाध (सक)=(१) विरोधे, (२) रोधे, (३) पीडायाम्, (४) विनाशे । बाधइ—पि ५६३ ।

ङ—√वाह (सक)=(१) विरोधे, (२) रोधे, (३) पीडायाम्, (४) विनाशे । बाहइ, बाहए-पचा ५,१५, उव ।

+√बाहृ (बाहृ) १ ६३७ प्रयत्ने (आ) । क्षी सा च ।
श-शा ×
(मै जै-काक्र कात हे-वो-√बाहृ)
√वेहृ (बेहृ) १/ प्रयत्ने (आ) सा ।

क—भाघु-स्=कफोणि, मणिबन्ध -वा पॉकर्नी ।
ख—अवे बाजु-स्=बाहु -वा पॉकर्नी ।
ग—सह ओजो बाह्वोर्वो बल हितम्-ऋ ५,५७,६, य बाहुतेव पिप्रति-१,४१,२ ।

+√बिट् (बिट) १/३१५ आक्रोशे (प) मै । मै सा च काक्र ।
श-जै कात-शा ×
(क्षी हे वो-√बिट्) ।
√बिड् (बिड) १/३१६ आक्रोशे (प) मै ।
√विड् (विड) १/ आक्रोश (प) मै ।

√बिड् (बिड) १/३१६ आक्रोशे (प) मै । मै काक्र शा ।
सा-श-च ×
(क्षी जै-कात-हे-वो-√विड्) ।
√बिट् (बिट) १/३१५ आक्रोशे (प) ।

+√बिन्द् (बिदि) १/६२ अवयवे (प) । क्षी सा-च-काक्र शा । अशे—वो ।
श ×
(मै-नै कात हे-√विन्द्)
√भिन्द् (भिदि) १/ अवयवे (प) सा । अथाप्यादिविपर्ययो भवति-ज्योतिर्घनो विन्दु -निरु २,१,१२ ।
√वट् १/१०७ अवयवे (प) काक्र ।

क—बेन्द् = बिन्दु । ब्रेटॉ –बन्ने = बिन्दु । इरि –बुइन्ने = विशाल नदी, प्रवाह तरङ्ग'–वा पॉकर्नी ।

ग—ऊर्ध्वो बिन्दुरुदचरत्–अ वे १०, १०, १९।

+√ बिम्ब् (बिबि) १/७ ६१ मर्दने (प) काकृ।
अपाणिनीय

क—बाम्ब्, भाम्भ, पम्प्–, फम्फ् = उड्डयने, वायुविहारे। लिथु बॅम्ब = नाभि –वा पॉकर्नी ।

ग—प्रतिबिम्बन्ति–महो ५, ५५, अन्न ८, ७१।
ङ—√ बिब (सक) = प्रतिबिम्बन। कर्म–बिबिज्जइ–सूक्त ४६।

+√ बिल् (बिल) ६/८० शX (काकृ–√ बल्) (जै–√ बिल्)
भेदने (प) क्षी मे–मा कात शा हे वो। भेदे—च–शा ह। भेदने—काकृ। जै।
√ भिल् (भिल) १०/भेदने(प) इति काशिक –क्षी। निर्भर भवति निर्भर्ते – निरु ७, १७, ८। बिल्म भिल्म (= भेदनम्) भासनमिति वा–निरु १, २०,२। बिल्व भरणाद् वा भेदनाद् वा–निरु १,१७८।

क—बल् = कर्तने, खनने।
ग—मामि दिधिषामि बिल्मे –ऋ ७, ३५, १७ = प्रस्तरखण्डे ?
ङ—बिल = सुषिरम्–विपा १ ७, गउड ।

+√ बिस् (बिस) ४/१०४ काकृX,श (मे कात–शा–ह—√बिस्) काकृ–√ बिश् ५/५४
प्ररणे (प) क्षी–सा च जै क्षेपे—वो।
√ बिस्त् १०/४४ जलोत्तरणे (प)। बिस्यति–निघ २/१४ = गतिकर्मा। बिस बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा—निरु ७,२४,१। √ बिश् ४/५४ प्रेरणे (प) काकृ।

ग—बिसानि स्तेनो अप सो जहार–ऐब्रा ५,३०, अ वे ४,३४, ५।

नास्य क्षेत्रे पुष्करिणी नाण्डीक जायते बिसम्—अ व ५,१७,६।

| | | |
|---|---|---|
| + √बुक्क (बुक्क) १ ११९ श× (नै-√बुक्क) | भाषणे (प) क्षी म सा काकृ कात। भषणे इत्येके—धी मे सा च हृ। भाषणे भषणे च—शाकृ। आभाषणे—शा-हे। आदिशब्दे—बा। | √भष् (भष) १/ भर्त्सने (प)। √फक्क् (फक्क) १ नीचैर्गतौ (प)। √बुक्क् (बुक्क) १० भाषणे (प)। |

क—बु— कण्ठ्यसयोगे—बुक्—वा पॉकर्नी।
ख—अवे बुक्स्त=गर्जने, श्वशृगालादिशब्दे।
ड—√भुक=भषणे। भुक्कइ—गा ६६८ अ।
छ—√भूकना, √भूँकना, √भौंकना=भषणे।

| | | |
|---|---|---|
| √बुड् (बुड) ६/११७ क्षी सा-श-च-नै× | संवरणे (प) मै म काकृ कात। संवरणे उत्सर्गे च—हे। संवृतौ।उत्सर्गे—बो। | √व्रुड् (व्रुड) ६ संवरणे (प)। √बुड्ड् १/१६५ उद्गमने (प) काकृ। |

ग—बुडिल० बुलिल०—शब्रा ४,६,१,९, १०,६,१,१, ऐब्रा ६,३०, छान्दो ५,११,१।

छ—√बूडना } =निमज्जने। अयमुत्सर्गः।
छ—√डूबना }

| | | |
|---|---|---|
| √बुध् (बुध) १/८४७ श× | अवगमने (प) अनिट् क्षी-मै सा च-काकृ-कात शा-हे। ज्ञाने (उ)—जै। | √बुध् (बुध) १/बोधने (उ)। √बुन्ध् (उबुन्धिर्) १/ निशामने (उ)। √बुध् (बुध) ४ अवगमने (आ)। |

ग—बोधति—ऋ २,२५,७।
छ—√बोधना † =अवगमने।

| | | |
|---|---|---|
| √बुध् (बुध) १/८६० श× | बोधने (उ) सेट् क्षी मै सा च जै काकृ कात शा-हे। छेदने—बो। | >√बुध् (बुधिर्) बोधने (उ) इति नन्दी—क्षी। शेष पूर्ववत्। |

ग—बोधतु—मन्त्रब्रा १,५,३ । बाविषीमहि—म २५,६ ।

√ बुध् ( बुध ) ४/६० श
अवगमने ( आ ) क्षी म सा च काकृ कात शा हे । ज्ञाने—जै-शा हे वेन्न—वो ।
पूर्ववत् ।

ग—सर्वा हि कृतमनुबुध्यते—शब्रा ७,२,०,१७ । बुध्येत—ब्राशि १,७८ । बुध्यति-गर्भ १ । श्रोत्र बुध्यते शब्दम्—मभार १२६६९ ।

ड—√ बुज्झ ( मक )=ज्ञाने, ( २ ) जागरे । बुज्झइ—उत्र ।
उ—√ बुझना = ज्ञाने ।

+√ बुन्द् (उबुन्दिर) १/८६९ श-च काकृ कात × ( मे—√ बुन्द् )
निशामने ( उ ) क्षी मा जे शा हे वा ।
>√ बुन्ध ( उबुन्धिर् ) निशामने ( उ ) इति नन्दी-क्षी । >√ चुन्द् (उचुन्दिर्) १ ६०० निशाने ( उ ) च ।

निशानम् =आलोचनम्—क्षी । √ बुद् १/ निशाने (उ) वो । √ बुध् (बुध) १ बोधने (उ)।

ग—आ बुन्द वृत्रहा ददे—ऋ ८,४५,४, ८,६६,६, साधुर्बुन्दो हिरण्यय—८,६६,११, बुन्द इषुर्भवति । बुन्दो वा भिन्दो वा भयदो वा भासमानो द्रवतीति वा—निरु ६, ३२,१ । अत्र भासमानार्थो गतार्थो भवति ।

+√ बुन्ध (उबुन्धिर्) १/८६८ मे सा-श च जै-काकृ-कात शा ह ×
निशामने ( उ ) इत्यन्ये-क्षी वो ।
<√ बुन्द (उबुन्दिर्) निशामने ( उ ) । शेष पूर्ववत् ।

√ बुन्द् >√ बुन्ध् इति सुस्पष्टो विकास ।

+√ बुस् ( बुस ) ४/१०६ श १ ( काकृ-√ बुश ) ( मे जै-शा हे-√ बुस् )
उत्सर्गे ( प ) क्षी सा च काकृ कात । हानौ—वो ।
√ बुस् ( बुस ) १/ विभागे ( प ) सा । √ व्युष् ( व्युष ) ४/ उत्सर्गे ( प ) हे । बुसम्-निघ १/१२ = उदक-नाम ।

क—बु, भु=उन्क्षयने, उन्मादने। 'स्'-इत्यस्य विस्तार —बुस्-वा पॉकर्नी।
ग—गूहते बुसम् (बुस्यते=उत्सृज्यते (मेघै)-ऋ १०, २७, २२।
छ—√बुसना=पर्युषितौ, उत्सर्गे।
छ—भूसा, भुस (<बुसम्)।

+√बुस् (बुस) ४/१०७ क्षी मै श च जै काक्-कात शा-हे वो। | विभागे (प)। अपरे त्वयकारमिन्छन्ति-सा। | पूर्ववत्।

पूर्वस्माद् धातोरभिन्नोऽयमर्थभेदात् पृथक् सख्यात।

√बृह् (बृहि) १/७२८ श× (मै-सा-च जै-कात हे वो-—√बृह) | वृद्धौ (प) क्षी। शब्दे, च=वृद्धौ क्षी शा। वृद्धौ—काक्। | √बह् (बहि) १/वृद्धौ (आ)। √मह (महि) १/वृद्धौ (आ)। √वृध (वृधु) १/ वृद्धौ (आ)। √ब्रह् *१/३२०d वृद्धौ (प) काक्।

ग—विशा क्षत्र परि बृहति तदिद क्षत्रम्-शब्रा ३,६,१,२४। बृहन्ति कुञ्जरा मभार ९ १९४६।
ड—√बिह (सक)=पोषणे। ठा ६-पत्र ३७५, णाया १, १,-पत्र १०।
ड—√बूह (सक)=पोषणे। बूहए-सूअ २,५,३२।

+√ब्रह् (ब्रह) १/७२७ मै श-जै शा× √बृह (बहिर) (सा-च कात-हे वो-√ब्रह्) | शब्दे, (प)। क्षी। इति दुर्गे—क्षी। शब्दे—काक्। ६/ वृद्धौ—ह्वि। | पूर्ववत्।

ग—यज्ञ स बबर्ह-शब्रा १,७,३४। स बबर्ह-अ जे ९,३,३। बबृहाणस्याद्रे (=वर्धमानस्य-इति सायण) ऋ ५,४१,१२ हर्येश्वाय बर्हया-(=उत्साहय-सायण) समापीन्-७,३१,१२। बर्हय-कौ १,२९८, जै १,३१,६। [ धा वृद्धौ वृत्ति ]।

√बृह (बृहु) ६/६७ (मै-सा-श-च जै-कात हे वो-√बृह्) | उद्यमे (प) क्षी काक्। उद्यमने—शा। | अतिबृहति रेत (=उद्यच्छति-दुर्गाचार्य) निरु ९,२२,१। वर मूल बृहतीति वा (=उद्यच्छति-दुर्गाचार्य) निरु, ५,४,१।

ग—बृहति-पै २०,४३,८।

| | | |
|---|---|---|
| +√बेदृ (उबेदिर्) १ ८८१<br>मै-सा श च नै-काक्ृ<br>कात-शा हे वो× | निशामने (उ)<br>इत्यन्ये—क्षी। | <√बुन्दृ (उबुन्दिर्) निशामने (उ)। |
| +√बेहृ (वेह) १, ६३४<br>क्षी-मै श च-जै<br>काकृ कात शा-हे-<br>वो× | प्रयत्ने (आ)<br>इत्येके—सा। | <√वेहृ (वह) प्रयत्ने (आ)। |
| +√ब्युस् (व्युम) ४ १०७<br>क्षी-मै-श च-जै काकृ-<br>कात शा-वो× | विभागे (प)।<br>केचिदिच्छन्ति—<br>सा-हे। | <√व्युष् (व्युष) विभागे (प)।<br>√प्युष् (प्युष) ४ विभागे (प)।<br>√प्युस् (प्युस) ४/ विभागे (प)। |
| +√ब्रण् (ब्रण) १/४४७<br>क्षी-मै श च-जै<br>काकृ कात शा-हे× | शब्दार्थ (प) सा<br>वशादि कचित् पठ्यत<br>—सा।<br>शब्दे—वो। | <√व्रण् (व्रण) शब्दार्थ (प)।<br>√भ्रण् (भ्रण) १' शब्दार्थ (प)।<br>√वण् (वण) १/ शब्दार्थ (प)। |
| +√ब्रुड् (ब्रुड) ६ ११२<br>श×<br>(क्षी सा-च-जै वो-√ब्रुड्)<br>(काकृ-√बूड्) | सघात (प) इत्येके—मे।<br>मै-शा हे।<br>सवरणे—कात।<br>उत्सर्गसहत्यो —वो।<br>सवरणे—काकृ। | √बुड् (बुड) ६ सवरणे (प)।<br>√बुड्ृ १ १६५ उद्गमने (प) काकृ। |
| √ब्रू (ब्रूञ्) २/३३<br>श | व्यक्ताया वाचि (उ)<br>क्षी मै सा-जै-काकृ-<br>कात शा-हे।<br>वचने—च।<br>उक्तौ—वो। | |

ग—ब्रवीति-ऋ १०,६१,१७। ब्रुवते-८,६,३, जै ३,५४,११। ब्रूते-म ब्रा १,७,७।

ङ—√ बू=वचने। बूम, बूहि-उत्त २५, ७९।

च—√ बुव-वचने। बुवइ, बुवदि-कुमा।

√ भक्ष् ( भक्ष ) १ ८९७ भक्षणे ( उ ) मै क्षी-श जै-काकृ वो×, मै-च शा हे। ( कात ) अदने—सा।

> √ भ्रक्ष् ( भ्रक्ष ) भक्षणे (उ) इत्येके-मै।

> √ +ल्क्ष् ( +ल्क्ष ) भक्षणे ( उ ) इत्येके-मै।

√ भृक्ष् १'५७७b भक्षणे (उ) शा।

√ भज् ( भज ) १' सेवायाम् ( उ )।

ग—भक्षति-पै २०,११,९। भक्षन्ति शवमासानि-पद्मपु ६,१३९,१७।

छ—भक्षना* / भच्छना* / भषना (<भक्षणम्)=भक्षणे।

√ भज् (भज) १ ९८७ झ सेवायाम् ( उ ) क्षी मै सा च-जै काकृ कात शा हृ। भोगसेवयो —वो।

√ भज् (भज) १०/ विश्राणने ( प )।

ग—भजन्ते-ऋ १,१७५,६। भजध्वम्-शौ १२,३,४।

ङ—√ भय=सेवायाम्, ( २ ) विभागे, ( ३ ) ग्रहणे। भयइ, भअइ-सम्म १२४, कुमा।

√ भञ्ज ( भन्जो ) ७'१६ श आमर्दने ( प ) क्षी मै सा-च जै काकृ-कात-शा हे। मोटने—वो।

√ भञ्ज् १/३१३ c हिंसागत्यो ( प ) काकृ।

ग—बभञ्ज-ऋ ८,४,५। भनक्ति-शौ १०,३,१३।

| | | |
|---|---|---|
| √भट् (भट) १/२०२ श | भृतौ (प) क्षी मै-सा च-जै कात शा-हे। उन्नाये—काकृ। भृतौ—वो। | <भृत। √भट् (भट) १/७७३ परिभाषणे (प)। √नट् (नट) १ परिभाषण (प)। √भण्ड (भडि) १/ परिभाषणे (प)। |

भृति =वेतनम्-श्री।

ग—हरिभिर्भटा -भा पु ८,१०,० = योद्धार। भट -नैप १,१०७ = वीर। यो भाटयित्वा शक्ट नीत्वा- वृद्धमनु -विवादके १ १०।

घ—भट = भृत्य -मिलिन्दपञ्ह ७२०।

| | | |
|---|---|---|
| +√भट् (भट) १,७७३ श× | परिभाषणे (प) पित् क्षी मै-सा-च जै काकृ कात शा-ह। भाषणे—वो। | √भट् (भट) १ भृतौ (प)। √भट्ट १/०३० १ (प) काकृ। |

ग—बल्नाम्नोऽसुरस्य भटै -ऋ १ ६ ५। यम पाशभृतश्च तद्भटान्-भा पु ६,१,१९। वैश्याया शूद्रवीर्येण पुमानेको बभूव ह। स भट्टो वावदूकश्च सर्वषा स्तुतिपाठक॥ ब्र वै पु ब्रह्मखण्डे, १० अध्या।

ङ—भाट (<भट्ट)=चारण, स्तुतिपाठक।

| | | |
|---|---|---|
| √भण् (भण) १/४५७ श× | शब्दार्थ (प) क्षी मै सा च। शब्दे—जै-काकृ कात शा हे वो। | भनति-निघ ३/१४= अर्चतिकर्मा ऋ ६,११,३ √पण् १/७०७शब्दे r (प) काकृ। √फण् १/७०७१ शब्दे (प) काकृ। √भ्रण् (भ्रण) १/ शब्दार्थ (प)। √वण् (वण) १/ शब्दार्थ (प)। |

ग—बभाण-बृहज्जाबालो १,१। भण्यते-तेजोबिन्दूप ५,९४, महोप ६,५० । वराहो ७,५९।

घ—भणति-पुग्गलपञ्ञत्ति २३,५६। भणे-मिलिन्दपञ्ह ७१।

ङ—√भण (सक)=भाषणे। भणइ, भणेइ-कुमा।

छ—√भणना* † √भनना* } (<भणनम्)=भाषणे।

| | | |
|---|---|---|
| +√भण्ड् (भडि) १/७७० श× | परिभाषणे ( आ ) क्षी-मै-सा-च-काकृ-कात-शा-हे । परिभाषायाम्—जै । वाचि—वो । 'परिहासे' इति देव -सा । | √भण् ( भण ) १ ४५७ शब्दार्थ ( प )। √भण्ड् ( भडि ) १/१७१ कुत्सायाम् (प) काकृ । √भाण्ड् १/९५, १७२ परिभाषणे ( प ) काकृ । |

ग—भण्डान -पै १७,१४,५ [ धा भेदने वृत्ति ]।

घ—भण्डति—विनय १,४६ ।

ङ—√भड ( सक )=भर्त्सने, आक्रोशे । भडइ-सण ।

छ—√भाँडना * = मुधा भ्रमणे, ( २ ) भर्त्सने, परिनिन्दने, ( ३ ) नाशे, विकृतौ ।

छ—√भँडना=निन्दने, ( २ ) अव्यवस्थायाम् , ( ३ ) त्रोटने ।

| | | |
|---|---|---|
| √भन्द् ( भदि ) १/१२ श | कल्याणे सुखे च ( आ ) क्षी मै सा । कल्याणे—च शा हे । प्रियसुखयो —जै । कल्याणे सौख्ये च—काकृ कात । शुभे मुत्प्रीत्योश्च—वो । भासने—ह्वि । | भन्दते-निघ ३/१४=अर्चतिकर्मा । भन्दते-निघ १,१६=ज्वलतिकर्मा । |

सुखम् =आत्मगुणोदय —क्षी ।

ग—भन्दते—ऋ ३,३,४ । भन्दना—ऋ ८,२४,१५, भद्र भद्रमिति ब्रूयात्-मनु ४, १३९=प्रथम भद्रपदमभद्रपदपरम् ( मन्वर्थ ) ।

ङ—√भद ( सक )=( १ ) सौख्ये, ( २ ) कल्याणे—विसे ३४३९ ।

| | | |
|---|---|---|
| +√भर्ब् ( भर्ब ) १/४२१ मै-सा श च-जै काकृ-कात-शा हे-वो× | गतौ ( प ) क्षी । | √बर्ब् ( बर्ब ) १/गतौ (प) । √बर्फ् ( बर्फ १/ गतौ (प) । √बभ्र् ( बभ्र ) १/ गत्यर्थ ( प ) । |
| √भर्व् ( भर्व ) १/५७७ श-जै-काकृ-कात× | हिंसायाम् ( प ) क्षी मै-सा-च-शा हे । हिंसे—वो । | भर्वति-निघ २/८=अत्तिकर्मा । निरु ९,२३ । √भर्व् १/७५९ हिंसने ( प ) जै । |

√भर्भ् १/१३५b हिंसार्थ (प)
कात।

ग—भर्वति-ऋ १,१४३,५। भर्वन्-तै १,३,१४,४। अग्निर्जम्भैस्तिगितैरत्ति भर्वति-ऋ १,१४३,५।

√भल् (भल) १/२११ शX — परिभाषणहिंसादानेषु (आ)। क्षी मै-सा काकृ कात हे। परिभाषणे—च। दानहिंसापरिभाषणेषु—जै। हिंसादानपरिभाषणेषु—शा। बादिवन् (=दाने-व ने नीरूपणे)—वो। ज्ञाने (विचारे, इन्द्रिगोचरे)—ह्लि।

√बल् १/८१० परिभाषण-हिंसादानेषु (आ) हे। √वल्ह् (वल्ह) १/६४१ परिभाषणहिसादानेषु (आ) मै। √भल्ल् १ ४९२ परिभाषण हिंसादानेषु (आ)। √भल (भल) १० आभण्डने (आ)। √भण्ड् (भडि) १/ परिभाषणे (आ)।

ग—भद्र भल त्वस्या—ऋ १०,८६,२३। भलाय स्वाहा–गोगृ ४,६,११। कान्यकुब्जे नृपश्रेष्ठो भलन्दन उरुक्रम—ब्रह्मवै श्रीकृष्णजन्मखण्डे १७ अध्या।

ठ—भलटी[†]=दात्रविशेष (देश)—(हिंसायाम)।

+√भल्ल् (भल्ल) १/२९२ शX — परिभाषणहिंसादानेषु (आ)। क्षी-मै-सा-काकृ कात ह। परिभाषणे—च। दानहिंसापरिभाषणेषु—जै। हिसादानपरिभाषणेषु—शा। दाने व ने नीरूपणे—वो।

√भल्ल् १/२४७a गतौ (प) काकृ। √भल्ह् १/५४४b परिभाषण हिसादानेषु (आ) काकृ।

क—भेरॉ-स्, भेरॉ-स्, भेरु-स्, भेरु-स्=ईषत्कपिशम्। पु उ ज बेरो, ऍग्लो-सैक्सॉ बेर=भल्ल, ऋक्ष-वा पॉकर्नी।

ग—क्षुरनागचभल्लानाम्–मभार १,१८०,६=शस्त्रभेद (हिंसायाम्) (भल्लते=हन्तीति)। द्वीपिन खड्गभल्लूका—मभार १७,११६,६=ऋक्षा। भल्ला पलाल—बृहत्स १४,३०–भल्ल =देशविशेष।

√भष् (भष) १ ६८६ भर्त्सने (प)। क्षी। म सा च ज काकृ कात शा हे। बुक्के पिशुनोक्तौ—यो। √बुक्क् (बुक्क) १। भाषणे (प)।

श ×

ग—भषम्–मा ३०,१९, का ३४,२,१। भषेयु सहिता सर्वे–मभार ७,१४७२, श्वा भषन्–१,५७४९, भषन्ते ७,१४७४, तपस्विन सम्पूर्णविद्य भषन्ति–मभार ३,१५६४१।

घ—भसति–जातक ४,१८७।

घ—भुसति, भुस्सति–दीघ (A) १,३१७।

√भस् (भस) ३/१९ भर्त्सनदीप्त्यो (प) क्षी मै-सा च काकृ-कात हे। भक्षणदीप्त्यो–ऋग्भाष्ये सा १७,८,७। भक्षणदीप्त्यो–द उणा वृ ८/८७। भर्त्सने—च। भर्त्सने द्युतौ च—वो। √प्सा २ भक्षणे (प)। √भष् (भष) १ भर्त्सने (प)। बभस्ति–निघ २/८=अत्तिकर्मा। भसथ–निघ २ ८=अत्तिकर्मा।

श-जै-शा ×

ग—भसत्–ऋ ६,३,४, बप्सति–८,४३,३। बभस्ति–शौ ९,२,२,।

√भा २/४० दीप्तौ (प) क्षी-मै-सा च जै काकृ-कात शा हे वो। √भास् (भासृ) १/ दीप्तौ (आ)।

श

ग—भाति–ऋ ७,९,३, शत्रा ८,४,१,१०।

घ—भाति–दीघ २,२०५, विमानवत्थु ३५।

ङ—√भा (अक)=दीप्तौ। भाइ–कप्पू।

ङ—√भाअ (अक)=दीप्तौ। भाअदि–शौ।

छ—√भाना *१ (<भानम्=ज्ञानम्)=(१) प्रतीतौ (२) रुचौ (३) शोभने।

| | | |
|---|---|---|
| √भाम (भाम) १/४३२ शX | क्रोधे (आ) क्षी मे सा च नै-काकृ कात शा हे-यो। | भामते–निघ २ १२ =कुध्यति कर्मा। √भा २ ४० दीप्तौ (प)। |

ग—वीरान् मा रुद्र भामितो वधी–ऋ १,११४,८। भामित–श्वताश्वतरो ४,२२, मना २,१३। भाम–व १६ ९, [ ऋ १०,८४,४ ]। मन्येचितस्य प्रहजन्ति भामा–ऋ ५,२,१०–भामा =क्रोधा दीप्तयो वा–इति सायण। गुरु मित्र तथा भाम पुत्र च भगिनी तथा–? भा ६,१६,२९–भाम =भगिनीपति।

| | | |
|---|---|---|
| √भाष् (भाष) १,६०७ शX | व्यक्तायां वाचि (आ) क्षी मै-सा नै काकृ कात शा हे। वचने—च। वाचि—यो। | √भा २ ४० दीप्तौ (प)। √भास् (भासृ) १/ दीप्तौ (आ)। |

ग—भाषत-ऐआ ३,१,६, गाश्रा ११४१।
व—भासते-सुत्तनिपात ४१२। भासति-धम्मपद १,२४६ सुत्तनिपात १५८।
ङ—√भास (सक)= वचने। भासइ, भासति-भग, उत्त।

छ—√भापना * †, √भासना †, √भासना ३ † (<भाषणम्)=भाषणे।

| | | |
|---|---|---|
| √भास् (भासृ) १ ६१७ श | दीप्तौ (आ) क्षी मै मा च-जै काकृ कात शा-हे वो। | √भा २/४० दीप्तौ (प)। √भाष् (भाष) १/६०७ व्यक्तायां वाचि (आ)। |

ग—भासते-कौलोप २,९, योशि ६,७७।
ङ—√भास (अक)=(१) शोभने, (२) प्रतीतौ। भासए, भासति–मोह २०, भत्त ११०, सुर ७,१६२।
छ—√भासना =(१) दीप्तौ, (२) प्रतीतौ, (३) दृग्गोचरत्वे, (४) सम्पर्चन, लिप्तौ।

| | | |
|---|---|---|
| √भिक्ष् (भिक्ष) १/६ २ | याच्ञायामलाभे लाभे च (आ) क्षी हे। भिक्षायामलाभे लाभे च—सा। | √भज (भज) १/ सेवायाम् (उ)। |

याच्ञाया लाभेऽलाभे
च—मै ।
याच्ञायाम्—च-चै-
काकृ-कात-शा ।
लाभाप्र्यालाभोक्ति-
क्लिशि—वो ।
क्लेशे च व्यक्ताया वाचि
—क्षी ।
तत्तद्देशप्रसिद्धार्थाना
पृथङ्निर्देश —क्षी ।

ग—भिक्षते-ऋ ७,३२,१७, शब्रा ११,३,३,५ ।

घ—भिक्खति-सयुत्त १,१७६, चरियापिटक १,१४ ।

ङ—√भिक्ख ( सक )=भिक्षणे । भिक्खइ-सबोध २१ ।

√भिद् (भिदिर्) ७/२ श — विदारणे ( उ ) क्षी-मै-सा-च-जै काकृ-कात शा हे । भिदि—वो ।

ग—अण्डानि भेदति-ऋ ८,४०,१० ( भौवादिक ) । अप भिन्धि-ऋ ८,४५,४० । भिनत्ति-तै २,१,५,७, पै ७,७,२ ।

घ—भिन्दति-दीघ २,१०७ ।

ङ—√भिंद । भिंदइ-महा ।

+√भिन्द्(भिदि)१/६४ क्षी मै श-च-जै-काकृ कात शा-हे-वो× — अवयवे ( प ) सम्मतायाम्—सा सा । — <√बिन्द् (बिदि) अवयवे (प) । √भिण्ड १/१८५ हिंसायाम् ( प ) काकृ । √भिद् ( भिदिर् ) ७/२ विदारणे ( उ ) ।

ग—भिन्दु -साब्रा १,४,१४ ।

ङ—√भिंद ( सक )=( १ ) भेदने, ( २ ) विभागे ( अवयवे ) । भिंदइ, भिंदए-महा ।

ङ—√भिद ( सक )=(१) भेदने, ( २ ) विभागे ( अवयवे ) । भिदति—आचा २,१,६,९ ।

√भी (ञिभी) ३/२ श — भय (प) क्षी-मै-सा-च-जै, काकृ (उ)-कात शा हे। भीत्याम्—वो। — √त्रस् (त्रस) १/ भय (आ)। √भी (ञिभी) ९/२६ भय (प) च।

क—भाइ- भूइ- भी—जू पॉकर्नी ।

ख—अवे बयेन्ते, व्यन्ते-गा पॉकर्नी ।

ग—भयत-ऋ १,५८,२, तैत्रा २,८,३,२। निभति-एत्रा ८,२, शत्रा ५,२,१,१९।

घ—भायसि-येरीगाथा २,२४८।

ङ—√भा
ङ—√भाअ } (अक)=भय। भाइ, भाअइ-महा, स्वान ८०।

+√भुज्ञ् (भुगि) १/१५७ भर्त्सने (प) मै-सा-श-च-जै-काकृ- क्षी। कात शा-हे वो × — <√वुञ्ज् (वुगि) वर्जन (प)।

√भुज् (भुजो) ६/१२६ श — कौटिल्ये (प) क्षी मै सा च-जै-काकृ-कात शा हे। वक्रणे—वो। — √भुञ्ज् (भुगि) १ भर्त्सने (प)। √भुज् (भुज) ७ पालना-भ्यवहारयो (प)।

ग—परिभुजद्रोदसी-ऋ १,१००,१४। निर्भुजति-याज्ञ २,१४, सुश्रु २,२३१, १९। व्याभुग्न इव घर्मान्ते-हरिवंश ४३१३।

√भुज् (भुज) ७/१७ श — पालनाभ्यवहारयो (प) क्षी मै-सा, काकृ (उ),-कात-शा हे। रक्षाशनयो —जै। पालने—च। त्राणे भक्ष्ये—वो। — भोजते-निघ २/१२ = क्रुध्यतिकर्मा।

ग—उभये भुञ्जते विश -ऋ २,२४,१०, क मानुषी भोजत विट्-ऋ १,७२, ८। भुङ्क्ते-शाआ ६,२०-(भुजोऽनवने १,३,६६ इति तङ्) मे ८,२,१। भुनक्ति-तै २,६,२,४।

घ—भुञ्जति-सुत्तनिपात १०२।

ङ—√भुज (सक) = अभ्यवहारे, (२) पालने, (३) उपभोगे, (४) अनुभवे। भुजइ–कस, उवा।

+√भुण्ड् (भुडि) १/[२७४] वरणे (आ)। √हुण्ड् (हुडि) १ सघात
मै सा×,श [क्षी] शा-ह। (आ)।
भरणे—च काक्र-कात।
भृतौ वृतौ—वो।

√हुण्ड (हुडि) १/२७२ वरणे—क्षी-सा।
श च-जै काक्र-कात शा- हरणे—मै-सा।
हे-गो×

√भू १ १ सत्तायाम् (प)। √भु १/५५० ॥ गतौ (आ)
श क्षी-मै सा च जै काक्र काक्र।
कात शा हे गो।

क—भॉइ, भॉईऐ-(भुआ- भुण-,) भोउ- भू-
ख—अवे बवैति = भवति-जू पॉकर्नी।
ग—भवति-ऋ १,२८,१, खि ४,१०,१, मा ३२,८, का ३२,१,५।
घ—भवसि-मज्झिम ३,१४०।
घ—होमि-जातक ३,२६०।
ङ—भोमि-पि ४७६।
ङ—भुवइ-पि ४७५।
ङ—हुअइ, हुएइ, हुति-पि ४७६।
ङ—हवइ-कप्प।
ङ—होइ, होअइ-कप्प, उव्व, महा।
छ—√होना = सत्तायाम्, उद्भवे।

√भूष् (भूष) १/६७३ अलङ्कारे (प)। √भू १/१ सत्तायाम् (प)।
श क्षी मै-सा च जै काक्र
कात शा हे।
भूषणे—वो।

ग—भूषसि-ऋ ८,९२,२६, भूषेम-शौ १९,६७,७।
ङ—√भूस (सक) = (१) अलङ्कृतौ, (२) शोभने। भूसेमि-कुमा।
ठ—√भूषना * } (<भूषणम्) = अलङ्कारे।
छ—√भूखना }

| | | |
|---|---|---|
| √भृ ( भृञ् ) १/८८२ शX | भरणे ( उ )। क्षी-मै शा-च-जै-काकृ-शा-हे। भृतौ—वो। | √भृ ( डुभृञ् ) ३ धारण-पोषणयो ( उ )। भुरन्तु–ऋ ५,६,७। |
| ( कात-√वृ [ वृञ् ] ) | वरणे—कात। | |

क—भेर्=भृतौ।

ख—अवे ग्रैति=भरति-जू पॉकर्नी।

ग—अव भरते-ऋ १,१०२,७। भरत-तै ७,२,१२,२। भरति-शा ८,३,१५।

ङ—√भर ( सक )=भरणे। भरइ-भवि, पिंग।

| | | |
|---|---|---|
| √भृ ( डुभृञ् ) ३/५ श | धारणपोषणयो ( उ ) क्षी-मे-सा ने काकृ कात-शा। धारणे—च। धारणे पोषणे च—ह। भृतिपुष्ट्यो —वा। | √भृ ( भृञ ) १ भरणे ( उ )। |
| √भृ ( डुभृञ् ) ३/५ श च-जे काकृ-कातX | 'धारणपोषणयो' इति द्रमिडा —क्षी। क्षी मे-सा शा-ह। भृतिपुष्ट्यो —वा। | |

ग—बिभर्मि-ऋ १०,१२५,१। बिभर्ति-मा १९,९४, का २१,६,१५, ते २,३,११,५, मै १,६,३।

| | | |
|---|---|---|
| +√भृज् ( भृजी ) १/१७५ शX | भर्जने ( आ )। क्षी-मे-सा-च-जै काकृ-कात-शा हे-वो। | √भ्रस्ज् ( भ्रस्ज ) ६/ पाके ( उ )। |

भर्जनम् =पाकविशेष —क्षी।

क—भेर्ज्=भर्जने।

ख—म पर्सि बर्स्तन्-वा पॉकर्नी।

ग—भर्जति-मैत्रायण्युप ५,७। भर्जितम्-शि ६,७३। माषाणा भर्जयेद वाटी-सुश्रु १,२३०,१७।

( भृज्येयु-मै १,१०,११, काठ ३६,६, ) भर्ग-श्रौ ९,१,४, पै ६,१९,१ ( =दीप्तौ ), भृज-मै २,८,७ ( तैक्ष्ण्ये )।

| | | |
|---|---|---|
| +√भृड (भृड) ६ ११९<br>(क्षी) श-च-काक्ष-<br>कात, शा ?,<br>हे-वो× | निमज्जने (प) इत्यायेके-मै<br>'निमज्जने' इत्येके—आत्रेय<br>-सा ।<br>सघाते—शा । | >√ध्रुड् (ध्रुड) ६' निमज्जने<br>(प) इत्यपरे—मे ।<br>√हुड् (हुड) ६/ निमज्जने<br>(प)।<br>√क्रुड् (क्रुड) ६/ निमज्जने<br>(प)।<br>√भ्रुड् (भ्रुड) ६/ निमन्नने<br>(प)। |
| +√भृश (भृशु) ४/१११<br>श | अध पतने (प)<br>क्षी मै-सा च काक्ष शा हे ।<br>अध पते—वो । | √भ्रश् (भ्रन्शु) ६/ अध -<br>पतने (प)। |
| (जै कात-√भ्रश<br>[भ्रश] | अध पतने—जै कात । | |

ग—भृशनिस्वना -वा रा २,४०,३१ । भृशम्-मनु ७,३२ ।
ङ—√भुल्ल (अक)=(१) च्युतौ (२) अव पाते, (३) विस्मृतो-आत्म १९ ।

| | | |
|---|---|---|
| +√भृष् (भृषु) १/७००<br>मै सा-श-च काक्ष-<br>कात शा-हे-यो× | हिसासघातयो (प)<br>क्षी ।<br>हिसाया सघाते च—जै । | √वृष् १/५११० हिसाया<br>सघाते च (प) शा हे । |
| +√भृ ९/२०<br>श (शा) | भरणे (प)<br>क्षी हे ।<br>भर्त्सने—मै-सा च जै-<br>काक्ष-कात हे ।<br>भृतौ भृजि भर्त्से—वो । | √बृ ९/१८ भरणे (प) शा,<br>२६–हे ।<br>√बृ ९/१७b वरणे-काक्ष, हे ।<br>√वृ ९/ वरणे (प)। |
| (कात-√भृ) | भरणे—कात । | |
| +√भृ ९/२१ | भर्जने, च=भरणे (प)<br>क्षी हे ।<br>भर्जने—शा ।<br>भृतौ भृजि भर्त्से—वो । | पूर्ववत्। |

पूर्वधातोरभिन्नोऽय क्षीरस्वामिना पृथक् सख्यायते ।

| | | |
|---|---|---|
| +√भेष् (भेषृ) १/८६९<br>श× | भये (उ)<br>क्षी मै सा च, जै ? | √भ्यस् (भ्यस) १/ भये (आ)।<br>√भी (ञिभी) ३/ भये (प)। |

| | | |
|---|---|---|
| | काक्ु-कात शा हे वो। | √भीष् (हेतुभये षुक् ७,२ ४०)।<br>√भ्रेष् (भ्रेपृ) १ ८७० भये (उ)। |
| √+यस् (+यस) ४ ६०१<br>श× | भये ( आ )<br>क्षी मै सा च जै-काक्ु<br>कात-शा-हे वो। | >√भेष् (सृ) भ्रष् (सृ) भये<br>इति चन्द्र -क्षी।<br>शेष पूर्ववत्।<br>+यसते भयवेपनयो -निरु<br>३ २१ ६। |

ग—अ+यसेताम्-ऋ २,१२,१, तै १ ७,११,२, शौ २०,३४, १। +यसान्-नै ४,३९,२।

| | | |
|---|---|---|
| √भ्रश् (भ्रन्शु) १ ७४७<br>श ( जै√ भ्रम् )।<br>(काक्ु-सा—√ भ्रश ) | अवस्रसने ( आ )<br>क्षी मै सा-च कात शा हे।<br>अवस्रसने—सा काक्ु। | √भृश (भृशु) ४ अध पतने<br>( प )।<br>√भ्रम् (भ्रन्सु) १ अवस्रसने<br>( आ ) सा।<br>√भ्र श् ( भ्रन्शु ) ४ अध -<br>पतने ( प )।<br>√भ्रश (भ्रश) १ अवस्रसने<br>( आ ) सा। |

ग—भ्रशते-ते १,६,११ १, गेत्रा ७,२।

| | | |
|---|---|---|
| √भ्रश (भ्रन्शु) ४ ११२<br>श | अध पतने ( प )<br>क्षी-मै सा च-जै काक्ु<br>कात शा हे।<br>अव पते—वो। | √भ्रश् ४ ४९ अध पतने<br>( प ) जै, कात।<br>शेष पूर्ववत्। |

ग—भ्रश्यतु क्षिप्रमद्यैव-वा रा २,७४,२४।
घ—भस्सति-जातक ४,२२३, ४,१२०।।

| | | |
|---|---|---|
| +√भ्रंस् (भ्रन्सु) १ ७४३<br>क्षी-मै श-च-काक्ु-<br>कात शा-हे वो× | अवस्रसने ( आ ) सा<br>सा।<br>अवस्रसे—जै। | >√भ्रश् (भ्रश) अवस्रसने<br>( आ ) सा।<br>शेष पूर्ववत्। |
| +√भ्रक्ष् (भ्रक्ष) १ ८९७<br>क्षी-श-च जै-काक्ु | भक्षणे ( उ ) मै<br>मै। | √भक्ष् ( भक्ष ) १/ भक्षणे<br>( उ ) मै। |

काल-शा-हे-ना× अदने—सा। √ भ्लक्ष् ( भ्लक्ष ) १/ भक्षणे ( उ )।

+√ भ्रण् (भ्रण) १ ४४४ शब्दार्थे (प) √ भण् ( भण ) १/ शब्दार्थ ( प )।
श काक कात× क्षी मै सा-च।
शब्दे—जै शा हे-वो। √ व्रण् ( व्रण ) १/ शब्दार्थ ( प )।

√ भ्रम (भ्रमु) १ ८४४ चलने ( प ) भ्रमति-निघ २/१४= गतिकर्मा।
श-नै× क्षी मै सा च काक
कात शा-हे।
चाले—वो।

ग—भ्रमात्-ऋ ७,१,२२। [ धा भ्रान्तौ वृत्ति ]। भ्रमति-व्या ५०, योचू १४, गी १,३०।

घ—भमति-जातक १,४१४।

ङ—√ भुम=भ्रमणे। भुमइ-सण।

ठ—√ भरमना
√ भ्रमना* } = चलने।

छ—√ भौना
√ भँवना
√ भरना* । } (<भ्रमणम् )=चलने।

√ भ्रम् (भ्रमु) ४/९२ अनवस्थाने (प) पुषादि
श क्षी मै-सा च काक-कात शा हे।
चलने—जै।
चाले—वो।

ग—भ्राम्यति-पार गृह्य ३,७, मभार १३,४३१६, कथासरि ९,९। भ्राम्यते-श्वेताश्वतरो १,६।

√ भ्रश् (भ्रश) १/७४३ अवस्रंसने (आ) सा। √ भ्रंस् (भ्रंसु) अवस्रंसने ( आ )।
क्वचित् पठ्यते-सा काक। द्र √ भ्रश् १/७४७

ग—भ्रशन्-ऋ १०,१७३,१, शौ ६,८७,१, शब्रा ६,७,३,७।

√ भ्रस्ज् ( भ्रस्ज ) ६/४ पाके ( उ ) √ भृज् ( भृजी ) १/भर्जने ( आ )।
श क्षी-मै-सा-च-जै, काक (प),
कात-शा-हे-वो। √ भृष् ( भृषु ) १/हिंसा-संघातयो ( प )।

ग—भृज्जाति–ऋ ४,२४,७। यवमुष्टि भ्रज्जति–गोगृ ३,७,२।

घ—भज्जति–विनय ४,२६४।

ङ—√भज्ज (सक)=पाके। भ॰नति, भ॰नति–सूअनि ८१, विपा १,३।

उ—√भूजना
ऊ—√भूँजना† } (<भृज्जनम्)=भर्जने।

√भ्राज् (भ्राज) १/१७८ दीप्तौ (आ)
श-नै शा-हे-वो×
क्षी मै सा च काकृ-रात।
√राज (राजृ) १ दीप्तौ (उ)।
भ्राजत–निघ १ १६=ज्वलतिकर्मा।
भ्राशते–निघ १/१६=ज्वलतिकर्मा।

ग–अग्नेर्भ्राजन्ते अर्चय –ऋ १, ४४,१२, भ्राजत–१,५६ ०।

ङ—√भाज (अक)=दीप्तौ। विसे २४४७।

√भ्राज् (भ्राजृ) १ ८०६ दीप्तौ (आ)
क्षी-च-काकृ।

√भ्राज् (टुभ्राजृ)
'दीप्तौ इत्येके-क्षी।
क्षी-मै-सा-जै-कात-शा-हे।
भासि—वो।
पूर्ववत्।

ग—भ्राजसे–तैब्रा ३,१,६,४। भ्राजन्ते–मा १०,१०६।

+√भ्राश् (टुभ्राशृ) १ ८०७ दीप्तौ (आ)
श× (काकृ कात हे-√भ्रास्)
क्षी-म-सा-च-जै काकृ-कात शा।
भासि—हे वो।
पूर्ववत्।
भ्राशते-निघ १ १६=ज्वलतिकर्मा।
भ्राश्यति–निघ १/१६=ज्वलतिकर्मा।
म्लाश्यति–निघ १,१६=पाठान्तरम्–देवराजयज्वा।

क—भेरेशु=दीप्तो-वा पॉकर्नी'।

ग—नि तिग्मानि भ्राशयन भ्राश्यानि–ऋ स ८,६ ७०,५, वा भ्राशम्लाश ३/१/७० इति पक्षे श्यन। उभयपदित्व वक्तु शक्यम, अस्य धातोरात्मनेपदित्वाद् वैदिकप्रयोगस्य परस्मैपदित्वाच्च।

| | | |
|---|---|---|
| √भ्री ९/३४<br>श<br>(च-√भी) | भरणे (प)<br>क्षी मै-सा-काकृ कात-हे।<br>भये—सा-जै-शा-हे। | √भी (ञिभी) ३/भये (प)।<br>भ्रीणाति-निघ. २/१२= क्रुध्यतिकर्मा।<br>√भृ ९/२० भरणे (प)। |

ग—भ्रीणन्ति-ऋ. २,२८,७; मै. ४,१४,९।

| | | |
|---|---|---|
| +√भ्रुड्(भ्रुड) ६/११० सा-श-जै-काकृ-कात× | संवरणे (प)<br>क्षी-च।<br>'संघाते' इत्येके-मै।<br>शा-हे ?<br>संवृतिसंहत्योः-वो। | √त्रुड् (त्रुड) ६/संवरणे (प)।<br>√भृड्(भृड) ६/निमज्जने (प)।<br>√भृड् (भृड) ६/संवरणे (प) मैत्रेयस्तु-सा। |

| | | |
|---|---|---|
| +√भ्रेज् (भ्रेजृ) १/११७<br>श× | दीप्तौ (आ)<br>क्षी-मै-सा-च-जै-काकृ-कात-शा-हे।<br>भासि—वो। | र्+√एज्√रेज् (रेजृ) १/दीप्तौ (आ) इति चन्द्रः—क्षी।<br>भ्+√रेज्=√भ्रेज्।<br>√एज् (एजृ) १/ दीप्तौ (आ)।<br>√भ्राज्(भ्राजृ)१/१७८ दीप्तौ (आ)। |

| | | |
|---|---|---|
| √भ्रेप् (भ्रेपृ) १/८७०<br>श-च-जै× | भये (उ)<br>क्षी। | √भ्रंश् (भ्रन्शु) १/१७४ अवस्रंसने (आ)।<br>भ्रेषति-निघ. २/१२= क्रुध्यतिकर्मा। |

उत्तरधातोरभिन्नः क्षीरेण पृथक् संख्यातः।

ग—भ्रेषते जनो न रेषन्मनः-ऋ. ७,२०,६। भ्रंशेऽपि—रथो वर्तमानो भ्रेषन्नेति-ऐब्रा. ५,३३। भ्रेषम्-तै. ७,३,१,१; काठ. ७,११; क. ३१,१०।

| | |
|---|---|
| √भ्रेष् (भ्रेषृ) १/८७१<br>श-च-जै× | चलने, च=भये (उ)<br>क्षी-शा-हे।<br>गतौ—सा। |

चलने—काक्र कात। पूर्ववत्।
चले भये—वो।

क—मेर्-स्— नॉर्व (प्रादे) ग्रीस=क्राजे, उद्वेगे, प्रकाशक्षेपे-रा पॉकर्नी।
ग—रथो वर्तमानो भ्रेषन्नेति-ऐब्रा ८०३ (भ्रेशे)।

+√ म्लक्ष् (म्लक्ष) १/८७८ शच-जै-शा× (कात- √ ल्लप्) स्यात् त्रुटि।
भक्षणे (उ) क्षी मै-कात-हे रा। अदने—मा। काक्र?
>√ प्लक्ष् (प्लक्ष) भक्षण (उ) इति दुर्ग-क्षी।
√ भक्ष् (भक्ष) १/८९७ भक्षणे (उ) मे।
√ भ्रक्ष् (भ्रक्ष) १ ८९७ भक्षणे (उ) मै।

+√ म्लाश (टुम्लाश) १/८०८ श×, (काक्र कात ह √ म्लास्)
दीप्तौ (आ) क्षी-मे सा च-नै काक्र कात शा ह। भासि—वो।
√ भ्राश् (टुभ्राशृ) १ दीप्तौ (आ)।
म्लाशयति-निघ १/१६=ज्वलतिकर्मा-पाठान्तरम्-देवराजयज्वा।

√ म्लेष् (म्लेषृ) १,८८९ क्षी श-च जै काक्र-कात शा-हे-वो×
चलने (उ) मै। मै। गतौ—सा।
√ भ्रेष् (भ्रेषृ) १/चलन च=भये (उ)।

√ मह (महि) १/६०७ श×
वृद्धौ (आ) क्षी मे सा-च जै-काक्र-कात-शा-हे वो।
√ मह् (मह) १०/ पूजायाम् (प)।
मघमिति धननामधेय महते र्दानकर्मण -निरु १,७,१। मघम्-निघ २/ १०=धननाम।

ग—शूरो मघा महत-ऋ १, ११, ३, शौ २०, ५१, ३। अमहन्-शब्रा १३, ५, ४, ४।

+√ मक्ष् (मक्ष) १ ६५४ श च काक्र-कात×
रोष (प) क्षी हे। सघाते—मै-सा-जै-शा-ह। सघाते रोषे च—वो।
√ मक्ष् १,५७२ दशने (आ) काक्र।
√ म्रक्ष् (म्रक्ष) १/ सघाते (प)।
√ वक्ष् (वक्ष) १ रोषे (प)।
√ मट् १ ९७ b सघाते (प) काक्र।

क—मर्का-अथवा-मॉक्-ऑ ( लॉ-,कॉ )=अश्व, मक्षिका। मक्षू, आर्याणाम्-मॅक्षू=मङ्क्षु, शीघ्रम्। लेति-मॅक्स्=क्षिप्रम्। म किम्रिक्-मॉक्षू=मङ्क्षु, द्रुतम्। पु इरिश्- मास्=मङ्क्षु, त्वरितम्।

ख—अने मक्षि=मक्षिका। अवे-मॉग्=मङ्क्षु, आशु-वा पॉकर्नी।

ग—मध्वो न मक्ष-ऋ ४, ४५, ९, मधुम मक्षिकारपत्-१ ११९, ९। यूकामक्षिकमत्कुणम्-मनु १, ४० । मक्षु (मङ्क्षु)-निघ २/ १५=क्षिप्रनाम ( सघाते )। मक्षूयुभि-ऋ ७, ७४ ४।

छ—मॉखना† ( <मक्षणम् )=क्रोधे।

ठ—माखना† ( <मक्षणम् )=क्रोधे- 'अस जनि कोउ माखइ भट मानी'-तुलसी।

ञ—मॉखी † ( <मक्षिका )।

| | | |
|---|---|---|
| +√मङ्क् (मकि) १ ८६<br>शX | मण्डने ( आ )<br>क्षी मै सा च जै काकृ<br>कात-शा-ह ।<br>भूपे—वो । | √मङ्क् (मकि) १/३२३० गत्यर्थे<br>( आ ) कात ।<br>√मङ्घ् (मघि) १/ गत्यर्थे<br>( प )।<br>√मङ्ग् (मगि) मण्डने ( प )<br>इति जयमङ्गल-भट्टि<br>१२, १०।<br>√मक्क् १/ गतौ ( आ ) वो । |

क—मेक्=गोधने ( चूर्णादे ), परिवेष्टने ( निष्पीडने, चूर्णने )। स्ला-मेक्-क=मृदु। लैति मकुस्=हस्त। पु उ ज मगॉन्=न्यूनत्वे, कार्यादे साहाय्यमन्तरा करणे। लिथु मेङ्कस्=दुष्ट, क्षुद्र, लघु-वा पॉकर्नी।

ग—सोमातिपूतो मङ्कुरिव चचार-शब्रा ५, ५, ४, ११ (=गतौ-, प्रस्पन्दने)। मङ्कणक०-मभार ३, ६०८६। कथासरि ३७, १००=ऋषिविशेष।

घ—मकु=आपन्न०- विनय २, ११८।

ङ—मकिअ (<मङ्कितम्)=कूर्दित्वा गमनम्-दे ८ १५।

ङ—मकाइ ( <मङ्काति )=अन्तकृन्महर्षिरेक-अत १८।

छ—√मनकना=प्रस्पन्दने, चलने।

| | | |
|---|---|---|
| +√मख् (मख) १/१३७<br>शX | गत्यर्थे ( प )<br>क्षी मै-सा-च कात।<br>गतौ—जै-काकृ<br>शा हे। | पूर्ववत्।<br>√मच्छ १/३५५] गतौ ( प )<br>काकृ।<br>√मयूख् १/३८० गतौ (प) काकृ। |

सर्पणे—वो। √मृग् १ २६०८ चन्ने (आ) काकृ।
√मुख् १ ७८५ गता (प) काकृ।

क—मग्-ऑ-स् —(स्) लो-=प्रसन्नम् ?-वाल्डे पॉकर्नी।

ग—मखस्य त (इन्द्रस्य)-ऋ ७, ३४, ७। मख -निघ ४ १७=यज्ञनाम मखे+य -निरु ३ ११, ६=मन्द्+य -दुर्गाचार्य (गता)।

+√मङ्ख (मखि) १/१०३ गत्यर्थ (प) द्र √मङ्क् १ ८६।
म श च काहृ कात क्षी सा। √मङ्ग् (मगि) १ ११७ गत्यर्थ
शा× गता—ह। (प)।
सर्पणे—या।

ग—मङ्ख०=मगधदेश -राजत १, १०७, मङ्खक—१, ३८ ५, मङ्खना-७, १०४।

ड—मख=वृषणा-ऋ ६, ११०।

ड—मख=चित्रपटेन जीवनस्य निर्वाहयित्री भिक्षुकजाति -णाया १, १ टी ओप, पण्ह ७, ४, पिंड ३०९।

+√मङ्ग् (मगि) १ ११७ गत्यर्थ (प) द्रष्ट √मङ्क् १/८६ मण्डने
श× क्षी-मै सा-च कात। (आ)।
गतो—नै काकृ-शा हे। √मग् १ ४१० k आदाने
सर्पणे—वो। (आ)काकृ।
(भट्टि १४ १० मण्डने— अङ्गलम् (गतम्मकारोपजनेन
जयमङ्गल मङ्गलम्-दुर्गाचा) अङ्गवत्
-निरु ९, २, १।

क—मग्-अथवा-मेग्=मण्डने भूषे। ऑस्सेतन-मग्=छलम्, वञ्चना-वा पॉकर्नी।

ग—मङ्गलापेक्षा-शब्रा १३, ८, १ १६। मङ्गलार्थम्-मनु ५, १५२।

ड—√मग (सक)=(१) गमने (२) साधने (३) ज्ञाने। कर्म-मगिज्जए-विसे ७२।

+√मङ्घ् (मघि) १/१०७ गत्याक्षेपे (आ) √मङ्क् (मकि) १/३०३ ०
श× क्षी। गत्यर्थ (आ) कात।
√मख (मख) १/ गत्यर्थ (प)।

√मङ्ख् (मखि) १/गत्यर्थ (प)।
√मङ्ग् (मगि) १/गत्यर्थ (प)।

गत्याक्षेप = वेगगति, गमनारम्भो वा—क्षी।

उत्तरधातोरभिन्न क्षीरेण पृथक् सख्यात ।

| | | |
|---|---|---|
| +√मङ्घ् ( मघि ) १/१०८ शX | कैतवे, च = गत्याक्षेपे पूर्ववत्। ( आ ) क्षी मै सा-च-जै-काकृ कात-शा हे। अध्यर्थे (=गते निन्दाग म्भजवेषु)—वो। | √मघ् १/४१४ b गत्याक्षेपे कैतव च ( आ ) काकृ। |

| | | |
|---|---|---|
| +√मङ्घ् (मघि) १/१५८ क्षी-श-च-जै काकृ कात शाX | मण्डने ( प ) मै-सा-हे। भूपे—वो। | √मङ्ग् ( मगि ) १/ मण्डने (प) इति जयमङ्गल-भट्टि १४,१०। √मह् (मह) १/७०० पूजायाम् ( प )। |

ग—मघवा ( न् )-मभार ३,४५,१०-( मह्यते = पूज्यते। उणा ०/१५८ )। एव सत्यपि √मघ इति दर्शनादिहोल्लेख कृतो मया।

| | | |
|---|---|---|
| +√मच् ( मच ) १/१६८ श-कातX | कल्कने ( आ )। क्षी मै-सा च जै काकृ-शा-हे। कल्कने दम्भे शाठ्ये—वो। | >√मुच् ( मुच ) कल्कने (प) इति चन्द्र-क्षी। √मञ्च् ( मचि ) १/१७१ कल्कने ( आ ) सा। |

क—मेक् = गोधने ( चूर्णादे ), परिवेष्टने, ( निष्पीडने, चूर्णने )। लिथु-मेङ्कस् = दुष्ट, क्षुद्र, लघु-वा पॉकर्नी ।

| | | |
|---|---|---|
| +√मज् ( मज ) १/७४७ मै-सा-श-च-जै-काकृ- कात-शा वोX | शब्दार्थ ( प )। क्षी। शब्दे—हे। | >√मुज् ( मुज ) शब्दार्थ (प) इत्यप्याहु-पुरुष >√मृज ( मृज ) शब्दार्थ ( प ) इत्यप्याहु-क्षी। कार ( ५७ पृ )। |

छ—√मचना = कोलाहलप्रधाने कार्यारम्भे, (२) विस्तारे ( देन तुलनीय )।

| | | |
|---|---|---|
| +√मञ्च (मचि) १/१७० श काक × | धारणोच्छ्रायपूजनेषु-(आ)। क्षी-मै-सा कात। धारणे—च। कल्कने धारणोच्छ्राय-पूजासु च—जै। कल्कने धारणोच्छ्रायपूजनेषु च—शा-हे। उच्छ्रायवृत्यर्चाभासु कल्कने दम्भे शाठ्य—वो। | √मञ्च १/४६० गतौ (आ) च। √मञ्च् १,२१६३ हिमागत्यो (प) काक। √मुच् १/४०७१ धारणोच्छ्रायपूजनेषु (आ) काक। √मुच् १/२०७१ धारणोच्छ्रायपूजनेषु (आ) काक। √मुञ्च १/२०७ b धारणोच्छ्रायपूजनेषु (आ) काक। √मन्छ् १/३०५] गतौ (प) काक। |
| √मञ्च् (मन्चु) १/१७१ | धारणोच्छ्रायपूजनेषु—सा। पवित्रीकरणे ?—ह्वि। | |

क—द्रष्ट √मच् १/१६८।

ग—मञ्चाश्च कार्यामासु-मभार १,५३०३ (=उच्छ्राये)।

छ—√मॉचना (<मञ्चनम्)=प्रारम्भे।

ठ—√मॉछना (<मञ्चनम्)=प्रवेशे-(लश्क)-तुल √मञ्छ् १/३५५ J गतौ (प) काक।

| | | |
|---|---|---|
| +√मञ्च् (मचि) १/१७१ क्षी मै श च-कात × | कल्कने (आ) सा। सा जै काक शा हे वो। पूर्वस्मादभिन्नोऽयम्। | पूर्ववत्। |
| +√मठ् (मठ) १/३३० श | मदनिवासयो (प)। क्षी-मै-सा-जै-शा हे। निवासे—च-काक-कात। वासमदयो —वो। | √मट् १/६०b सघाते (प) काक। √मट् १/ सादे (प) सो धा—वो। |
| १/३०९ | 'गतौ' इति कश्चित् पठ्यते—सा। | √मण्ट् १/९८ दाहे (प) काक। मण्टयेदिव—तैब्रा ० ३,९,९। |

ग—मठ-मन्त्र्युप २,१७, निर्वाणोप २९८,१, मठाम्नायोप ४९,१८, मठम्-१ योत ३२, ९ सन्या २,७०। ०माठरीपुत्र०—शत्रा १४,९४,३१। माठरस्य वनम्-मभार ३,८३२५, कुटीमठम्-मभार १२,५३४८। ( मटची—छान्दो १,१०,१ )।

उ—√ मठोरना † = तक्षणेन काष्ठचिक्कणादित्वे।

उ—√ मट(क)ना = साङ्गकम्प गतौ, ( १ ) अपस्नना, ( २ ) विचलने। तुल √ मठ् १ ३२९ गतौ (प) सा।

| | | |
|---|---|---|
| √ मण् ( मण ) १/४४०<br>श × | शब्दार्थे ( प )।<br>क्षी मै-सा-च।<br>शब्दे—जै-काकृ कात शा-हे।<br>कूजे—वो। | √ मन १/२४७ शब्दार्थे ( प )। |

ग—मणिना-ऋ १,३३,३। मणितम्-शिशु १०,७५।

| | | |
|---|---|---|
| +√ मण्ठ् ( मठि ) १/२६० <br>श | शोके ( आ )।<br>क्षी-मै-सा च जै काकृ कात-शा हे।<br>आध्याने—रो। | √ मण् ( मण ) १/४४० शब्दार्थे ( प )। |

शोक = आध्यानम्—क्षी।
आध्यानम् = उत्कण्ठापूर्वकस्मरणम्।

छ—मॉडा (<मण्ठ ) = वटकविशेष। "मण्ठस्तु ब्रह्णो वृष्य"—इति राजनिर्घण्ट।

छ—मठ (<मण्ठ ) = वटकविशेष।

छ—मॉठी* = फुल्लधातोर्विलाप्य ( द्रवीकृत्य ) सहिता ( घटिता ) कङ्कणा।

| | | |
|---|---|---|
| +√ मण्ड् ( मडि ) १/२६९<br>श × | विभाजने ( आ )।<br>क्षी-सा।<br>वेष्टने—मै सा-च जै-काकृ कात शा-हे।<br>विभागे वेष्टे च—रो। | √ वण्ड् ( वडि ) १/ वेष्टने ( आ )।<br>√ मण्ड् ( मडि ) १/ भूषायाम् ( आ )।<br>मण्डूका मज्जूका मज्जनात् मदतेर्वा मोदतिकर्मण, मन्दतेर्वा तृप्तिकर्मण। मण्डयतेरिति वैयाकरणा, मण्ड एषा |

+√शील् (शील) १/५२३ समाधौ (प)। क्षी मै-सा च जै काक्ट कात शा-हे-वो। शा
√शील् (शील) १० उपधारणे (प)। तत्परच्छेपस्य शीलम्-निरु १०,४२,२।

समाधि = सेवानुभावन प्रवृत्तिर्वा—दुर्गादास।

ग—स्वप्नशीलज्ञा -वा ग ७,६५,१४=स्वप्नभानज्ञा (तिल)। शीलति-नैष ८,६४=करोति (प्रका)।

+√शु १/९२४ गतौ (प)। क्षी सा च जै-शा हे। मै काक्ट कात वो×
'शुवादीना दीर्घश्च' इति शवते क्रनि शूरशब्दो व्युत्पाद्यते-१/९७७ सा। √श्वि (टुओश्वि) १/ गति-वृद्ध्योः (प)। √शव् (शव) १/ गतौ (प)।

ग—यदश्वन् तन्मेध्यमभूत्-शब्रा १०,६,५,७।

+√शुक् (शुक) १/११८ गतौ (प)। क्षी-मै-च काक्ट कात-हे। सर्पे—वो। सा श जै शा×
पूर्ववत्।

ग—शुकेषु मे हरिमाण रोपणकासु दध्मसि-ऋ १,५०,१२, वा स २४,३३।

√शुच् (ईशुचिर्) ४ ५४ पूतिभावे (उ)। क्षी-च-जै-कात-शा-हे। पूतिभावे—मे-सा काक्ट। शौचे विशरणे क्लेदे—वो। श
√शुच्य् (शुच्यी) १/ अभिषवे (प)। √शुच् १/७३१ a अभिषवे (प) काक्ट।

पूतीभाव =क्लेद —क्षी।

क—उत्तरधातुवत्।
ग—यदुपनद्धस्य सशुच्यति-शब्रा ६,४,४,७०।
छ—√सौचना (<शोचनम्)=शौचे, (२) हस्तपादादिप्रक्षालने।

| | | |
|---|---|---|
| √शुच् ( शुच ) १/१८० श× | शोके ( प )। क्षी-मै सा च काकृ कात-शा-हे वो। पाके—जै। 'पाके' इति पाठो मुद्रण-दूषित ? प्रकाशे—ह्वि । | शोचति-निघ १/१७=ज्वलतिकर्मा। |

क—शॉइक् ( च् )=द्युतौ।

ख—अवे उप-सुक्स्त। न पर्सि सोक्सतन=प्रकाशने-वा पॉकर्नी।

ग—शोचति-शब्रा १,४,१,२६, गी १२,१७।

ङ—√सोच ( सक )=नाट-मृच्छ १८१, णाया १,१-पत्र ४७।

ङ—√सोअ ( सक ) = ( १ ) शोके, ( २ ) शुद्धौ। सोअइ, सोएइ, सोयति-से १,३८, आचा।

| | | |
|---|---|---|
| +√शुच्य् (शुच्यी) १/५१४ मै-सा-श-जै×( काकृ- √शच्। शुच्यतीति व्याख्यात ) | अभिषवे ( प )। क्षी च काकृ कात-शा-हे-वो। | <√चुच्य् (चुच्यी) अभिषवे (प) इति दुर्ग -क्षी। √शूच् (शूच) १/२३१ b अभिषवे (प) काकृ। |
| √शुच्य् ( शुच्य ) १/५१४ क्षी श च-जै काकृ-कात-शा-हे-वो। | अभिषवे—मै। मै-सा। | √सु (षु) ५/१ अभिषवे ( प )। |
| +√शुठ् ( शुठ ) १/३३८ च×, श | गतिप्रतिघाते ( प ) इति दुर्ग —क्षी। क्षी-मै सा जै-काकृ शा हे। गतिप्रतीघाते—कात। खोटने—वो। | <√शुण्ठ् ( शुठि ) गति-प्रतिघाते ( प )। √शुण्ठ् ( शुठि ) १/ शोषणे ( प )। |
| √शुण्ठ् ( शुठि ) १/३२२ | खण्डप्रमर्दनयो ( प )। इति कश्चिद् धातु-कोशे पठ्यते—सा। | शुण्ड०-मभार ७,१५,७३। |

| | | |
|---|---|---|
| √शुण्ठ् (शुठि) १/३३८ मै श च-जै काक्‌-कात शा× | गतिप्रतिघाते (प)। क्षी सा-हे। खोटने—वो। | <√शुण्ठ् (शुठि) गति-प्रतिघाते (प)। √शुण्ड् १/१८३ m गतौ (प) काक्‌। |
| +√शुण्ठ् (शुठि) १/३४१ श× | शोषणे (प)। क्षी-मै सा-च-जै काक्‌ कात-शा-हे वो। | √गुण्ठ् १/१२१ c शोषणे (प) च। √हिण्ट् १/१०१ शोषणे (प) काक्‌। |

ग—शुण्ठी—का श्रौ २५,१३,२०। शुण्ठ०—तै १,८,१७,१, २,६,१६,१, काठ १३,५, का श्रौ २०,११,२९। तस्मिन् गतार्द्रभावे वीतरसे शुण्ठिशकल इव पुरुषे—आर्यासप्तश ७७१।

| | | |
|---|---|---|
| √शुध् (शुध) ४/७८ जै×, श | शौचे (प)। क्षी मै-सा च काक्‌-कात-शा-हे वो। | √शुन्ध् (शुन्ध) १/ शुद्धौ (प)। √शुन्ध् (शुन्ध) १०/ शौचकरणे (प)। |

क—शॉइ=प्रकाशे, द्युतौ, स्पष्टम्। शु-ध्—

ख—अवे सुदु=शुद्धम्, पवित्रीकरणम्-वा पॉकर्नी।

ग—शुध्यति-ताण्ड्य १४,११,२८, जाबालदर्शनो ४,५४। (पापम्) वेदाभ्यासेन शुध्यति—मनु ११,४६=नश्यति (मन्वर्थ)।

ङ—√सुज्झ (अक)=शौचे। सुज्झइ-महा।

ङ—√सोह (प्रयोज)=(१) शौचे, (२) गवेषणे, (३) शोधने। सोहेइ-उव।

छ—√शोधना (<शोधनम्)=(१) शौचे, (२) व्यवस्थितौ, (३) अन्वेषणे।

| | | |
|---|---|---|
| +√शुन् (शुन) ६/५६ श | गतौ (प)। क्षी मै-सा-च-जै काक्‌ कात शा-हे। गत्याम्—वो। | √शु १/ गतौ (प)। शुनम्-निघ ३/६=सुखनाम। शुण्ड०=करिकर०—मभार ७,३५,३५। |

ग—शुन वाहा शुन नर शुन कृषतु लाङ्गलम्—ऋ ४,५७,४, शुन हुवेम मघवानमिन्द्रम्—३, ३०,२०। कुक्कुट शुनक तथा-मभार १३,१२७,१६। इन्द्राय शुनासीराय पुरोडाशम्—तै १,८,७,१।

| | | |
|---|---|---|
| √शुन्ध् ( शुन्ध ) १/७१ शX | शुद्धौ ( प ) क्षी-म-सा च-जै-काक्ट कात शा-हे-, वो (उ)। | √शुध् (शुध) ४/शौचे (प)। √शुन्ध् ( शुन्ध ) १०/ शौचकरणे ( प )। |

क—, ख—द्रष्ट √शुध् ४/७८।

ग—सूर्याया रूपाणि ब्रह्मा शुन्धति—ऋ १०,८५,३५। शुन्धति—तैब्रा ३,२,३,१। शुन्धन्ते—काब्रा ? १,३,७।

| | | |
|---|---|---|
| +√शुभ् ( शुभ ) १/४३२ क्षी श-च जै-कात। शा-हे वोX | भाषणे हिंसाया च ( प ) मै भाषणे—सा काक्ट। हिंसायाम् इति—दैवमैत्रे यादय —सा। | √शुभ् ( शुभ ) १/ दीप्तौ ( आ )। |

उत्तरधातो प्रपञ्च। अत्र 'भाषणे' इत्यस्य स्थाने 'भासने' इति भाव्यम्।

| | | |
|---|---|---|
| √शुभ् ( शुभ ) १/७४१ श | दीप्तौ ( आ ) क्षी-मै-सा-च-जै काक्ट कात-शा हे। दीप्तौ हिंसने च—वो। | √शुभ् ( शुभ ) १/ भाषणे हिंसाया च ( प )। |

ग—बभ्रू यामेषु शोभेते—ऋ ४,३०,२३, स देवै शोभते वृषा—९,२५,३, ऐब्रा ३,१०।

ङ—√सोभ ( अक )=द्युतौ। सोभत—सुज्ज १९।

छ—√सोभना * † (<शोभनम् )=शोभने।

छ—√सोहना<br>छ—√सोहाना } (<शोभनम् )=शोभने, सज्जने।

| | |
|---|---|
| +√शुभ् ( शुभ ) ६/४० श | शोभार्थे ( प ) क्षी-मै-सा च-जै काक्ट-कात-शा हे। दीप्तौ ( हिंसने च )—वो। |

ग—( शुभयति—तैब्रा ३,३,१,५ )।

ङ—√सुह ( अक )=द्युतौ। सुहइ—वज्जा १४, पिंग।

छ—√शुभाना<br>छ—√सुहाना<br>छ—√स्वहाना * } =शोभने।

| | | |
|---|---|---|
| +√शुम्भ् ( शुम्भ ) १/४७६ श× | भाषणे हिंसाया च ( प )। क्षी मै सा-जै कात-शा हे। भाषणे—च-काकृ। हिंसार्थे --कात। दीप्तौ हिंसने च—वो। 'भासने' इति दुर्ग -क्षी। क्षी सा। | >√सुम्भ् ( षुम्भ ) भाषणे हिंसाया च ( प ) इति गुप्त -क्षी। √सुम्ब् १/७०६ r मर्दने ( प ) काकृ। |

ग—निशुम्भ -मालतीमा ५,७७ = हिंसायाम्, महावीरच ७,३३ = कुब्जीभावे। शुम्भ प्रतापवान्-मार्क पु ८८,७।

| | | |
|---|---|---|
| √शुम्भ् ( शुम्भ ) ६/७३ श | शोभार्थे ( प ) क्षी-मे सा च जै काकृ कात शा हे। दीप्तौ हिंसने च—वो। | √शुभ् ( शुभ ) १/ दीप्तौ ( आ )। √शुभ् ( शुभ ) ६/ शोभार्थे ( प )। निशुम्भा निश्चयहारिणि - निरु ६,४,१ (= शीघ्रहारिणि -दुर्गाचार्य )। |

ग—शुम्भत त्वा -ऋ १०,९५,९। परि शुम्भति (अग्निम्)-अ वे १३,१,५१।

| | | |
|---|---|---|
| √शुष् ( शुष ) ४/७० श | शोषणे ( प ) क्षी-मै सा-च-जै काकृ-कात शा हे। शोषे—वो। | √श्वस् ( श्वस ) २/५८ प्राणने ( प )। √श्वि ( टुओश्वि ) १/ गतिवृद्ध्योः ( प )। √उष् ( उष ) १/ दाहे ( प )। √व्युष् ( व्युष ) ४/८ दाहे ( प ) मै। |

क—सौस्-, सुस् = शोषणे। लिथु सुसु, सुस्ति = रूक्षभावे। लेट्टिश् सुस्त = शोषणे।

ख—अवे हुस्क = शुष्कम्, शोषणे। न पर्सि उस्क = शुष्कम्, शोषणे-वा पॉकर्नी।

ग—प्रति शुष्यतु यशो अस्य–ऋ ७,१०४,११ । शुष्यति प्राण ऋतेऽन्नात्–शब्रा १४,८,१३,१ ।

ङ—√सूस ( अक )=शोषणे । सूसइ, सूसति–कुमा २७४ ।
ङ—√सुक्ख ( अक )=शोषणे—गा ४१४, वज्जा १४६ ।
ङ—√सुक्क ( अक )=शोषणे । सुक्कइ–विसे ३०३७, पव १७ ।
छ—√सूकना } =शोषे ।
छ—√सूखना }

| | | |
|---|---|---|
| +√शूरु ( शूरी ) ४/४६ श | हिंसास्तम्भनयो (आ) । क्षी-मै-सा । हिंसास्तम्भयो —जै शा । हिंसायाम —च । हिंसाया स्तम्भे च—काक्ृ कात हे । स्तम्भे हिंसे—वो । | √शॄ ९/ हिंसायाम् ( प ) । √सूरु ४/ स्तम्भे हिंसे ( आ ) वो । |

ग—शूरण =मूलविशेष ( अर्शोघ्न ) ।
छ—सूरन (<शूरण ) ।

| | | |
|---|---|---|
| +√शूल् ( शूल ) १/५२६ श× | रुजायाम् ( प ) क्षी च-जै-काक्ृ कात-शा-हे वो । रुजाया सघाते च—मै-सा । | √शूर् ( शूरी ) ४/ हिंसा स्तम्भनयो ( आ ) । √शॄ ९/हिंसायाम् ( प ) । |

ग—शूल०–ऋ १,१६२,११, शब्रा ६,७,१४ । ततस्ते शूल आरोप्य–मभार १, १०७,१२ । शूल'=रोगविशेषश्च ।

छ—सूर (<शूल' )=उदररोग –बु ख ।
छ—√सूलना (<शूलनम् )=पीडने, कुन्तेन छेदने ।

| | | |
|---|---|---|
| +√शूष् (शूष) १/६७० मै श च-काक्ृ कात-शा× | प्रसवे (प) इति चरक –क्षी । क्षी सा-जै-हे वो । | <√सूष् (षूष) प्रसवे (प) । √शुष् ४/७० शोषणे (प) । √सु ( षु ) १/प्रसवैश्वर्ययो' ( प ) । √शूय् १/ प्रसवे—वो । |

√श्वस् (श्वस) ७/ प्राणने (प)।
शूषम्-निघ २/९=बलनाम,
३/६=सुखनाम।

ग—इन्द्राय शूषमर्चति-ऋ १, ९, १०,=(बलम्), प्रमन्महे शूषम्-१,६७,१। इन्द्रिय शूषमिन्द्रे वयोऽदधत्-वा स २८, ४१। (शूषा=शाकम्-क्षी)।

√शृध् (शृधु) १/७५७ श — शब्दकुत्सायाम् (आ) क्षी मै-सा-च-जै काक्ष कात-शा हे। पर्दे—वो। औद्धत्ये, साहसे—ह्वि। — √शृध् (शृधु) १/८५८ उन्दे (आ)। √कर्द् १/३९४b कुत्सिते शब्दे (आ) काक्ष। √गर्द् १/३९४c कुत्सिते शब्दे (आ) काक्ष। √शर्द् १/३९४d कुत्सिते शब्दे (आ) काक्ष। शर्द्धस्-निघ २/९= बलनाम।

क—शेर्ध् (ऑ)=समूह, आदेश। गॉथि हैर्द, पु आइस् ह्जोर्द, ऍग्लो-सै हेरॉद्, पु उ ज हेर्त्=मिथ, परस्परम्।

क—(शेर्द्)–, शृद्–, श्रेद्=बलम्, साहसम्।

ख—अवे सरृद=पतिर्वा पत्नी वा। पु पर्सि सर्द्=पतिर्वा पत्नी वा–वा पॉकर्नी।

ग—शर्ध०–ऋ ४, १, १२, ५, ८७, १=उद्धत०, धृष्ट०। शर्धांसि स्तुकाविनाम्-ऋ ८, ६३, १३=बलानि। शर्धति, ते-ह्वि। मया नाप्तम्। शर्धाय गृणान-ऋ १०, १४७, ५ (=मरुते ?)। अवशर्धयतो गुदम्-मनु ८, २८२-शर्धनम्=कुत्सितो गुदशब्दस्तेनावमानयत (मन्व)।

√शृध् (शृधु) १/८५८ उन्दे (उ) पूर्ववत्।
श×(जै-काक्ष–√सृध्) क्षी च-जै-काक्ष-शा-हे।
उन्दने—मै-सा कात।
रुन्धे—काक्ष। (लैपिकी त्रुटि 'उन्दे' इति भाव्यम्)
क्लेदने—वो।

पूर्वस्यैव प्रपञ्च। अर्थभेदाद् विभक्त।

√शॄ ९/१६ हिंसायाम् ( प ) √सॄ ९/१५b हिंसायाम् (प)
श क्षी मै-सा च-जै काकृ- काकृ।
कात शा हे। √चिरि ५/ हिंसायाम् (प)।
हिंसने—वो।

क—शेर् ( शेर् )-तथा-* शेरा=शीर्णौं-वा पॉकर्नी।

ग—शृणाति-ऐब्रा ४,१२। शृणीयात्-शब्रा १,७,३,१९। दैवादिकोऽप्ययम्-विशीर्यन्ती नावमिव-मभार ३, १५७१२, शीर्येत्-३, ५९१। विशीर्यति-मनु २,७४।

छ—√झडना ( <शरणम् ? क्षरणम् ? )।

+√शेल् ( शेलृ ) १/५४२ गतौ ( प ) √शल् ( शल ) १/ गतौ (प)।
श काकृ× क्षी-मै सा-जै कात शा-हे।
चलने—च।
केल्वत् (=चालगत्यो)-
-वो।

ग—शेलु०-सुश्रु ४, ३८=बहुवारकवृक्ष' (श क द्रु )। शेलु गव्य च-मनु ५, ६=बहुवारकवृक्षफलम्।

+√शेव् ( शेवृ ) १/४९८ सेवने ( आ ) √सेव्(षेवृ) १/ सेवने (आ)।
श-कात शा हे-वो× क्षी च जै। √खेव् (खेवृ) १/ सेवने (आ)।
सेचने—मै-सा काकृ। शेवम्-निघ ३/६=सुखनाम।
शेवधि (=सुखनिधानम्)-
निरु ?, ४, १।

ग—शेवारे वार्या पुरु-ऋ ८,१,२२, शेवल शुने-अ वे १, ११,४। शेवधिम्-ऋ २, १३, ६, मित्र न शेव दिव्याय जन्मने-ऋ १, ५८, ६।

उणादौ ( १/१५० ) शेवशब्द शीङ्धातोर्निष्पाद्यते, निरुक्ते ( १०,१७,१ ) तु √शिष् धातो। तद्यथा—"शेव इति सुखनाम शिष्यतेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी" इति ज्ञायते यद् व्युत्पत्तिरव्यवस्थिता कल्पिता च भवति। शेवादौ शेवदर्शनात् सेवनार्थक √शेव्धातुर्निश्चेय'। शेव्यते इति शेवम्=सुखम्।

+√शै १/१०२ पाके ( प ) √श्रै १/ पाके ( प )।
क्षी-मै-श च जै-काकृ सा। √स्रै १/ पाके ( प )।
कात शा हे वो×

√शो ४/३६ तनूकरणे ( प )
श क्षी मै सा-च जै-काक्र
काल शा।
तक्ष्णे—हे।
निशाने—वो।
६/ १ ह्रि ।

क—शोइ ( शाइ- ) तथा शो ( शू- )=निशाने-वा पॉकर्नी ।
ग—श्यति-शब्रा ४,३,२,३ ।

+√शोण् ( शोणृ ) १/४४७ वर्णगत्यो ( प )
श× क्षी-मै-सा-जै काक्र
कात-शा हे ।
वर्णे—च ।
गते वर्णे—वो ।

ग—शोण०-ऋ १, ६, ७, १, १२६, ४, १, ३, ३५, वा रा ५, १२, ३५। शोणितम्-मनु ११, २०८=रुधिरम् । भागीरथीं शोण इवोत्तरङ्ग –रघु ७, ३६=गतौ ।

+√शौट् ( शौटृ ) १/२८७ गर्वे ( प )
श-काक्र शा हे× क्षी मै-सा च जै कात
वो ।

√शौण्ड् १/८० गर्वे ( प )
काक्र ।
√शौड् १/३७० गर्वे ( प )
शा । ७३३—हे, वो ।

ग—शौटीर्यम्-वा रा २, ७३, ७३=गर्व ( तिल ), शोटीर-मभार ५, १२६, ३१, १२, ८३, ४३=गर्वान्विते ।

√श्चुत् ( श्चुतिर् ) १/४० क्षरणे (प) कोशिकस्तु- <√श्च्युत् ( श्च्युतिर् )
श-च-जै-काक्र-कात× क्षी।
क्षी मै-सा-शा हे ।
क्षरे—वो ।

क्षरणे ( प ) ।
श्चोतति-निघ २/१४=गतिकर्मा ।
√चुत् ( चुतिर् ) १/ क्षरणे ( प ) द्रमिडा —क्षी ।
√च्युत् ( च्युतिर् ) १/३९ आसेचने ( प ) ।

क्षरणम्=स्रवणम्-क्षी ।

ग—श्चोतन्ति-ऋ ३, १, ८, ३, २१, २, तैब्रा ३, ६, ७, १। श्चोतति-शब्रा ४, ५, २, ६।

| | | |
|---|---|---|
| +√श्च्युत् (श्च्युतिर्)१/४० शX | क्षरणे (प) क्षी मै सा च जै-काक्ल-कात शा हे। क्षरे—वो। | >√श्रुत् (श्रुतिर्) क्षरणे (प)। पूर्ववत्। |

ग—भल्लातकनिश्च्युतित स्नेह-सुश्रु २,५१,१७। लोचनेनामृतश्च्युता-कथा सरि १०१, ३०४, गिरा प्रेममधुश्च्युता-१०३, ६४। निश्च्योतन्ते सुतनु कवरीविन्दवो यावदेते-मालतीमाध ८, २ (इति माल्त्या गणकृतानित्यत्वम् इति दुर्गादास)। एतास्ता मधुनो धाराश्च्योतन्ति सविषास्त्वयि-उत्तरराम ३, ३४। श्च्योतद्भि समधिकम्-शिशु ८, ६३।

| | | |
|---|---|---|
| √श्नथ् (श्नथ) १/५३६ a क्षी मै-सा श-जैX (कात-हे-√स्नथ्) (सा-√श्नथ्-मैसू सम्करणे) | हिंसायाम् (प) च-काक्ल कात हे हिंसार्थ—शा। वधे—वो। | ><√श्रथ् (श्रथ) १/७९२ हिंसार्थ (प) मित्। |

अपाणिनीय १

क—श्नन्त्=छेदने, प्रवेशने।

ख—अवे स्नत् (थ्)=ताडने, स्नत् (थ्) न्ति-वा पॉकर्नी।

ग—अभिश्नथ-ऋ १०, १३८, ५। श्नथत्—तैब्रा २, ८, ५, १।

| | | |
|---|---|---|
| +√श्मील् (श्मील) १/५१९ च-जै-X, श | निमेषणे (प) क्षी मै-सा काक्ल कात शा हे वो। | √मील् (मील) १/ निमेषणे (प)। √क्ष्मील् (क्ष्मील) १/ निमेषणे (प)। √स्मील् (स्मील) १/ निमेषणे (प)। |

निमेषणम्=सङ्कोच—क्षी।

स्पष्टो विकासो वर्णोपजनत्वात्।

| | | |
|---|---|---|
| √श्यै (श्यैङ्) १/९४८ शX | गतौ (आ) क्षी-मै सा च-जै काक्ल कात-शा-हे-वो। | श्याम श्यायते.-निरु ४, ३, २। |

ग—बलिष्ठ श्यायति-शब्रा ४, ३, १, १९। यावन्नाश्यायते वेदि -रघु १७, ३७=शुष्यति ( सजी )। हिमो यच्च शीयते—तैब्रा ३, १०, ७, ७ ( कर्मवा )।

+√अङ्क् ( अकि ) १/८१ शा-च× | गत्यर्थ ( आ ) क्षी-मै सा-कात। गतौ—जै काकृ शा-हे। सर्पे—वो। | √अक् १/३३८ c गत्यर्थ ( आ ) च। √श्लङ्क् ( श्लकि ) १/ गत्यर्थ ( आ )। √अङ्ग् ( अगि ) १/ गत्यर्थ ( प )।

+√अङ्ग् ( अगि ) १/१५० श जै काकृ कात शा× | गत्यर्थ ( प ) क्षी मै-सा च। गतौ—हे। व्रजे—वा। | √श्लङ्ग् ( श्लगि ) १/ गत्यर्थ ( प )। √सिङ्ग् १/३८ w गतौ (प) काकृ।

+√अण् ( अण ) १/७९१ श-च× | दाने ( प ) क्षी मै-च-जै-काकृ कात-शा हे वो। 'गतौ' इत्येके—मै। दाने, च = गतौ—सा।

ग—विश्राणनात्-रघु ७,५४=दानात्-सजी।

+√अथ् ( अथ ) १/७९२ श च जै काकृ कात-शा-हे-वो× ( सा-√अथ्-मैसूर-सस्क ) | हिंसार्थ ( प ) मित् क्षी-मै-सा। | श्रथति-निघ ७/१९=वध कर्मा। √श्रथ् ( श्रथ ) १/ हिंसायाम् ( प ) च। √श्रथ् ( श्रथ ) १०/ दौर्बल्ये ( प )।

ग—अनु श्रृथिता -ऋ १०,९४,११ [ √श्रथ्><श्रृथ् ]।

+√श्रन्थ् ( श्रथि ) १/३४ श×(काकृ√श्रृन्थ्) | शैथिल्ये ( आ ) क्षी मै-सा च-जै काकृ कात शा-हे वो। | √श्रथ ( श्रथ ) १०/३१७ दौर्बल्ये ( प )। √श्लथ् ( श्लथ ) १०/ दौर्बल्ये ( प )।

ग—श्रन्थति ? पाशान्-अ वे १४,१,५७।

| | | |
|---|---|---|
| √श्रन्थ् ( श्रन्थ ) ९/३९ च×,श | विमोचनहर्षयो ( प ) क्षी । विमोचनहर्षणयो — मै । विमोचनप्रतिहर्षयो'—सा । प्रतिहर्षविमोचनयो —जै । विमोचनप्रतिहर्षणयो —काकृ (उ), -हे । मोचनप्रतिहर्षणयो —कात-शा । मोक्षे प्रतिहृषि—वो । | √श्रथ (श्रथ) १०/ दौर्बल्ये ( प ) । √श्रन्थ् (श्रथि) १/ शैथिल्ये (आ) । |

ग—अश्रथ्नन्-ऋ २,२४,३, श्रथ्नीते-९,६९,३ ।

| | | |
|---|---|---|
| √श्रन्थ् ( श्रन्थ ) ९/४२ क्षी-श-जै-काकृ कात-शा-हे-वो× | सन्दर्भे ( प ) मै मै-सा-च । | पूर्ववत् । |

पूर्ववत् । अर्थभेदात् पृथगुपन्यस्त ।

| | | |
|---|---|---|
| √श्रम् ( श्रमु ) ४/९१ श | तपसि खेदे च ( प ) क्षी-मै-सा-काकृ-कात शा । खेदे—च । क्लेशने—जै । खेदतपसो —हे । तप खेदयो—वो । | √क्लम् (क्लमु) ग्लानौ (प)। √ग्लै १/ हर्षक्षये ( प ) । √श्राम् ( श्राम ) १०/ मन्त्रे ( प ) वो । |

क—क्लेम्-, क्लेम्-, क्लम्=श्रान्तौ, शैथिल्ये-वा पॉकर्नी ।

ग—सिन्धवो न श्राम्यन्ति-ऋ २,२८,४, ९,२२,४। श्राम्यति-शब्रा १४,४,३,३१[3] ।

ङ—√सम्म ( अक )=( १ ) खेदे, ( २ ) श्लथे । सम्मइ-उत्त १,३७ ।

| | | |
|---|---|---|
| √श्रम्भ् ( श्रम्भु ) १/३९० मै-श-जै-काकृ-कात-शा-हे-वो× | प्रमादे ( आ ) क्षी-सा च । विश्वासे—हि । | √स्रम्भ् ( स्रम्भु ) १/ प्रमादे ( आ )। |

क—श्रभ्=विश्वासे-वा पॉकर्नी ।
ग—कामेषु विश्रम्भेत-भा पु ३,३,२३, विश्रभ्य-१,१९,२४ ।

√श्रा १/८०३ पाके (प) मित्त्वार्थं
शX पाठ ।
क्षी मै-सा च-जै-काकृ
कात-शा-हे वो ।
स्वेदे—वो ।
प्रयोज ह्वि ।

ग—श्रपयति-वा स १,७७, शब्रा ३,८,३,७० । श्रपयामास-वा रा १,१४,३६ ।

+√श्रा ७/४७ पाके (प) √श्रै १/ पाके (प) ।
क्षी-मै-सा-च-जै काकृ-
कात-शा-हे-वो ।

ग—यदि श्रातो जुहोतन-ऋ १०,१७९,१ । श्रातम्-शब्रा १४,३,१,३०[२] ।

√श्रि (श्रिञ्) १/८८२ सेवायाम् (उ) ।
श (काकृ √श्री) क्षी मै-सा-च-जै-काकृ-
कात शा हे ।
सेवने—वो ।

क—श्लाइ=नतौ, आश्रये ।
ख—अवे त्रित ( स्रय्)=(आ) श्रितम्-वा पॉकर्नी ।

ग—शिश्राय मघवा कामम्-ऋ १०,४२,६ । श्रयते-ऐब्रा ७,२, शब्रा १,६,४,७ । श्रयति-अव्यु ११ ।

ङ—√सय (सक)=सेनायाम् । सयति-भग १३,६-पत्र ६१७ ।

+√श्रिभ् (श्रिभु) १/४३० हिंसार्थ (प) < √सृभ् (षृभु) हिंसार्थ (प) ।
इत्यन्ये—मै ।
बा ग पल्सुले-महाशयो विस्मृतवान् ।

√श्रिम्भ् (श्रिभि) १/४३१ हिंसार्थ (प) < √सृम्भ् (षृम्भु) हिंसार्थ (प) ।
इत्यन्ये—मै ।
बा ग पल्सुले महाशयो विस्मृतवान् ।

| | | |
|---|---|---|
| √श्रिष् ( श्रिषु ) १/६९७<br>श× | दाहे ( प )।<br>क्षी मै-सा-च-जै काकृ-<br>कात-शा-हे वो।<br>वेष्टने, आलिङ्गने—ह्वि । | √श्लिष् ( श्लिषु ) १/<br>दाहे ( प )। |

ग—कस्येमा हृदि श्रेषाम सुष्टुतिम्-ऋ ४,४३,१, अभिश्रिष –८,१,१७, कौ १,२४४।

छ—√सेंकना (<सेंखना<सेखना<श्रेषणम् )=भर्जने ( दाहे )।

| | | |
|---|---|---|
| √श्री ( श्रीञ् ) ९/३<br>श | पाके ( उ )।<br>क्षी-मै सा च-जै-काकृ-<br>कात शा हे।<br>पचे—वो । | √श्रा २/ पाके ( प )। |

क—शेरx-, शेरxइ=मिश्रणे-वा पॉकर्नी ।

ग—अभिश्रीणन्ति-ऋ ९,९३,३, कौ ७,७७०। श्रीणाति-शब्रा ४,१,४,८$^{3}$, ताब्रा ८,७,११। श्रित -वा रा ७,५६,७८=पक (तिल)। (शृतम्-तै ६,५,९,१)।

| | |
|---|---|
| √श्रु १/९२५<br>श-च-जै-शा हे वो× | गतौ ( प )।<br>क्षी ।<br>श्रवणे—मै सा काकृ-कात। |
| √श्रु ५/१६<br>क्षी मै सा काकृ-कात×,श | श्रवणे—च-जै-शा हे।<br>गतौ—जै-हे।<br>गतौ श्रुतौ—वो। |

क—श्लॉइ=श्रवणे-श्लेड्रुए-, श्लू-वा पॉकर्नी ।

ख—अवे -सुरुनओइति=शृणोति।

ग—रेवन्त हि त्वा शृणोमि-ऋ ८,२,११, १,१०९ ५। शृणोति-शब्रा १,४,३,४। शृणुते-तैब्रा ३,१,५,७।

ङ—√सुण ( सक )=श्रवणे। सुणइ, सुणेइ-महा ।

छ—√सुनना = श्रवणे।

| | | |
|---|---|---|
| +√श्रेक् ( श्रेकृ ) १/८१<br>क्षी श कात-हे वो×<br>( च-√श्रक् )<br>( जै-√शेक् ) | गत्यर्थ ( आ ) मै।<br>मै सा-च।<br>गतौ—जै-काकृ-शा। | √सेक् ( सेकृ ) १/ गत्यर्थ<br>( आ )।<br>√स्रेक् ( स्रेकृ ) १/ गत्यर्थ.<br>( आ )। |

| | | |
|---|---|---|
| √श्रै १/९०४<br>श× | क्षी मै-सा-च जै-काकृ<br>शा-हे।<br>पचने—वो।<br>स्वेदे—वो। | √श्लेक् (श्लेकृ) १/ ३३३०<br>गतौ (आ) जै।<br>√स्रै १/ पाके (प)।<br>√श्रा १/ पाके (प) मित्त्वार्थं<br>पाठ । |

क—शेराx–, शेरxइ=मिश्रणे–वा पॉकर्नी ।

ग—श्राय–तैआ ४, २, ६।

| | | |
|---|---|---|
| +√श्रोण् (श्रोणृ) १/४४८<br>श× | सघाते (प)<br>क्षी-मै-सा-च जै-काकृ<br>काव-शा-हे-वो। | √श्लोण् (श्लोणृ) १/ च =<br>सघाते (प)। |

ग—प्रतिश्रोण स्यात्–ऋ २, १५, ७। यदश्लोणत् तच्छ्रोणा–तैब्रा १, ५, ७, ९, ३, १, २, ५। श्रोणि –बृहत्संहि ५६, ७=कटि। उज्ज्वलदत्त श्रोणशब्दसिद्धयर्थं- मुणादि (३/६)–टीकाया √श्रु श्रवणे बाहुलकात् 'न' इत्युक्तवान्, तन्न सङ्गतम् "यदश्लोणत् तच्छ्रोणा" इति तैत्तिरीयब्राह्मणात्। उणादौ श्रोणिशब्दोऽपि√श्रुधातो "वहिश्रिश्रुष्विति" उणा ४/५१–साध्यते तदपि न मनोरमम्, "श्रोणि श्रोणतेर्गतिचला- कर्मण।श्रोणिश्चलतीव गच्छत"–इति ४, ३, ७, निरुक्तवचनसत्त्वात्।

| | | |
|---|---|---|
| +√श्लङ्क् (श्लकि) १/८२<br>श-च× | गत्यर्थ (प)<br>क्षी-मै-सा-कात।<br>गतौ—जै काकृ शा-हे।<br>सर्पे—वो। | √स्रङ्क् (स्रकि) १/<br>गत्यर्थ (आ) मै।<br>√स्लङ्क् १/४१२ee गतौ<br>(आ) काकृ। |
| +√श्लङ्ग् (श्लगि) १/१५१<br>श-जै-काकृ-कात-शा× | गत्यर्थ (प)<br>क्षी-मै सा-च।<br>गतौ—हे।<br>व्रजे—वो। | √श्रङ्ग् (श्रगि) १/१५०<br>गत्यर्थ (प)। |
| √श्लथ् (श्लथ) १/८०४<br>क्षी सा-श-च जै-काकृ<br>कात-शा हे-वो× | हिंसार्थ (प) मित्<br>मै।<br>शैथिल्ये—ह्वि। | √श्लथ (श्लथ) १०/<br>दौर्बल्ये (प)। |

ग—श्लथद्दुकूल सन्नह्यती–भा पु ८,१२,२१, श्लथद्वसन०–१०,१६,३१, १०,३३, ११। दृढ आश्लथेत–भा पु ५,५,९। श्लथ०–शिशु ७,६२=शिथिल०।

+√श्लाख् (श्लाखृ) १/१२७ शX | व्याप्तौ (प) क्षी मै-सा च-जै काकृ-कात शा हे-वो। | √श्राख् १/३७b व्याप्तौ (प) काकृ। √शाख् (शाखृ) १/ व्याप्तौ (प)।

सुस्पष्टो विकास -√शाख् >√श्राख् >√श्लाख् इति।

√श्लाघ् (श्लाघृ १/११४ श | कत्थने (प) क्षी मै-सा च-जै काकृ कात-शा-हे-वो। | √शाल्ह् १/ कत्थने (आ) वो।

कत्थनम् = उत्कर्षाख्यानम्-क्षी।

ग—भूयिष्ठ श्लाघेत-शब्रा ११,३,३,७। श्लाघते ज्ञातिमध्ये स-मभार ५,२६९५, स्वय श्लाघति कथितेन-३,१३३०६।

ड—√सलाह (सक)=प्रशसने। वक्र-सलाहमाण-गा ३४६, सम्म १५९।
ड—√सलह (सक)=प्रशसने। कर्म-सलहिज्जइ-पि १३२।
छ—√सराहना (<सलाहणा<श्लाघनम्)=प्रशसायाम्।

√श्लिष् (श्लिष) ४/७३ श | आलिङ्गने (प) क्षी-मै सा च जै-काकृ-कात शा-हे। श्लेषे—वो। | √श्रिष् (श्रिषु) १/ दाहे (प)। √श्लिष् (श्लिषु) १/ दाहे (प)।

ग—श्लिष्यन्तु-मन्त्रब्रा १,८,३। श्लिष्यति कामपि-गीतगो १,४४, ६,७।
ड—√लिस् (सक)=आलिङ्गने-सूअ २,७,१०।
ड—√लिस्स (सक)=आलिङ्गने। लिस्सति-सूअ १,४,१ (२)।

+√श्लिष्(श्लिषु) १/६९३ शX | दाहे (प) क्षी-मै-सा-च-जै काकृ-कात-शा हे वो। | √श्रिष् (श्रिषु) १/६९२ दाहे (प)।

सुस्पष्टो विकास -√श्रिष् >√श्लिष्। हिन्द्या √सेकना (<श्रेषणम्) इति प्रयोग उपलभ्यत एव।

+√श्लोक (श्लोकृ) १/७४ शX | सघाते (आ) क्षी-मै सा-च-जै-काकृ कात-शा हे। सघाते वर्जने सर्जने—वो। | श्लोक-निघ १/११= वाङ्नाम। श्लोक' शृणोते'-निरु ९,९, १।

सघात = ग्रन्थ-सा १/७७

ग—हंसा इव कृणुथ श्लोकमद्रिभि—ऋ ३,५३,१० । श्लोकाय-शब्रा ८,२,३,३ ।

+√श्लोण् ( श्लोणृ ) १/४४९ सघाते ( प )
श-च×
क्षी मै सा-जै काकृ-कात-शा हे-वो ।
√शूल ( शूल ) १ ५७६ रुजाया सघाते च ( प ) मै ।
√श्रोण् ( श्रोणृ ) १ ४४८ सघाते ( प ) ।

ग—यद्श्लोणत् तच्छ्रोणा-तैब्रा १,५,७,८, ।

+√श्वङ्क् ( श्वकि ) १/९७ गत्यर्थ ( आ )
श× (काकृ कात-√स्वङ्क्
क्षी मै-सा च-कात । गतौ—जै काकृ शा हे । सर्पे—वो ।
√स्वङ्क् १/४१७dगतौ (आ) काकृ ।
√ष्वक् (ष्वक्क) १/ गत्यर्थ ( आ ) ।

+√श्वङ्ग् ( श्वगि )१/१४६ गत्यर्थ ( प )
क्षी सा श च-जै काकृ कात-हे वो×
मै । गतौ—शा ।
√श्वङ्क् (श्वकि) १/९२ गत्यर्थ ( आ ) ।
√स्वङ्क् १/४१२dगतौ (आ) काकृ ।
√स्वङ्ग् १/४५९ गतौ(प)जै । ३८p गतौ (प)कात, वो ।

+√श्वच् (श्वच) १/१६४ गतौ ( आ )
श च×(कात–√स्वच्)
क्षी-मै-सा-जै काकृ कात शा-हे । गत्याम्—वो ।
√श्रु १/ गतौ ( प ) ।
√शुक् ( शुक ) १/ गतौ (प)
√श्वञ्च् ( श्वचि ) १/ गतौ ( आ ) ।

ग—मर्योयेव कन्या शश्वचै ते–ऋ ३, ३३, १० ।

√श्वञ्च् ( श्वचि ) १/१६५ गतौ ( आ )
श×( कात–√स्वञ्च् )
क्षी-मै-सा-च-जै-काकृ कात-शा हे । गत्याम्—वो ।
√श्वङ्क् ( श्वकि ) १/९७ गत्यर्थ ( आ ) ।
√श्वच् ( श्वच ) १/१६४ गतौ ( आ ) ।

क—शुऐक्-( नासिक्यम्-शुऐङ्क्-) शुक्=जृम्भणे, प्रसारणे-वा पॉकर्नी ।

ग—उच्छ्वञ्चस्व पृथिवि-ऋ १०, १८, ११।

| | | |
|---|---|---|
| +√श्वल् ( श्वल ) १/५५० क्षी श च-कात× ( काक—√स्वल् ) | आशुगमने ( प ) मै सा-जै शा। आशुगतौ—काक हे। वेगे—वो। | √शल् ( शल ) १/ चलनसंवरणयो ( आ ) √शल् (शल) १/ आशुगमने ( प )। |

ग—श्वल्०-सुश्रु १, ९६, ७।

| | | |
|---|---|---|
| +√श्वल्ल् (श्वल्ल) १/५४९ श×(काक-√स्वल्ल्) | आशुगमने ( प ) क्षी-मै-सा च-जै शा। आशुगतौ—काक कात-हे। वेगे—वो। | √शल् (शल) १/ आशुगमने ( प )। √श्वल् ( श्वल ) १/ आशुगमने ( प )। |

| | | |
|---|---|---|
| √श्वस् ( श्वस ) २/५८ श | प्राणने ( प ) क्षी मै-सा-च जै काक-कात-शा-हे। प्राणे—वो। | श्वसिति-निघ २/१९= वधकर्मा। √सस् (सस) २/ स्वप्ने (प)। |

क—शुएस् =श्वसने-वा पॉकर्नी।

ग—श्वसित्यप्सु हंसो न सीदन्-ऋ १,६५,९। श्वसति-छागलेयो २५·१३।

ङ—√सस ( अक )=श्वसने। ससइ-रयण ६।

छ—√सुसाना * †=सगद्गद रोदने।

छ—√सुसाना=निद्रागतस्य श्वसने, श्वसनशब्दे-बु ख।

| | |
|---|---|
| √श्वि ( टुओश्वि ) १/९९४ श | गतिवृद्ध्योः ( प ) क्षी मै-सा-जै, काक (उ) कात-शा-हे वो। गतिवृद्धौ—च। |

क—शॉइ=उच्छ्वयने, वर्द्धने-वा पॉकर्नी।

ग—विश्वयन्त्०-ऋ ७,५०,१। अश्वयत्-शब्रा ४,२,१,११।

छ—√सूजना (<श्वयनम्)-शोथरूपवृद्धौ।

| | | |
|---|---|---|
| √श्वित् (श्विता) १/७३३ शX | वर्णे (आ) क्षी-मै-सा च-जै काक्ट कात शा हे। शौक्ल्ये—वो। | √श्विन्द् (श्विदि) १/ श्वैत्ये (आ)। |

क—शुआइत्=द्युतौ। लिथु -स्वित्रुओति=श्वेतम्, स्वच्छम्।

ख—अवे स्पएत् (सुएतु)=द्युतौ-वा पॉकर्नी।

ग—स (अग्नि) श्वितानस्तन्यतू रोचनस्था -ऋ ६,६,२, अशिश्वितत्-८,५,१, नाञ्जिभिर्व्यश्वितन्-१०,७८,७।

| | | |
|---|---|---|
| +√श्विन्द् (श्विदि) १/१० शX (काक्ट-√स्विन्द्) (कात-√स्विन्द् ? -√स्विद्) | श्वैत्ये (आ) क्षी मै सा-च काक्ट शा-हे। शैत्ये—जै-कात। शौक्ल्ये—वो। | √श्वित् (श्विता) १/७३३ वर्णे (आ)। |

क—शुआइत = द्युतौ,-द्—वा पॉकर्नी

| | | |
|---|---|---|
| +√ष्ट्यै १/८९५ शX | शब्दसघातयो (प) क्षी-मै सा-काक्ट-कात। शब्दे सघाते च—च शा-हे। जै ? सहतौ ध्वनौ—वो। | स्त्रिय' स्त्यायतेरपत्रपणकर्मण - निरु ३,२१,२। |

"ष्ट्यै स्त्यै" उभयोरुपदेशे उपादानाद् "धात्वादे ष स" (६ १/६४) नास्ति इति स्वामी। सायणस्तु मतमिद स्मृत्वा निरास्थत्—१/८९५। पुरुषकारोऽप्येवमेव कृतवान् (१६ पृ)।

ग—निष्ट्यायताम्-वा स ६,१५,३८,१८। उत स निष्ट्याय सह वसति-तै ६,२४,१।

| | | |
|---|---|---|
| √ष्ठिव् (ष्ठिवु) १/५५९ श (काक्ट-हि √ष्ठीव्) | निरसने (प) क्षी-मै-सा च जै काक्ट-कात-शा-हे। निरासे—वो। थूत्कृतौ—भट्टमल्ल। | √क्षीव् (क्षीवु) १/ निरसने (प)। √क्षेव् (क्षेवु) १/ निरसने (प)। √ष्ठीव् १/ निरासे (प) |
| √स्थिव् (ष्थिवु) | 'निरसने' इत्येके—क्षी। | वो। |

श च-जै काकृ कात शा×(हे) क्षी मै सा ( द्र काशि ६/१/६४ )।

ष्ठिवेरभ्यास्य तो वेति तन्त्रान्तरीयम्-मै १/५६१। अस्य द्वितीयस्थकारष्ठकारो वेति वृत्ति -सा १/५५३। आचार्येण शिष्येभ्य उभयथा प्रतिपादनादुभयमपि प्रमाण मिति व्याख्यातार —सा १/५५३।

क—स्प् ( हू ) इएउ- स्पिऊ—,स्पिकू=( निरसने ) थूत्कृतौ, वान्तौ—वा पॉकर्नी ।

ग—ष्ठीवति-जैब्रा १५७। अवनिष्ठीवतो दर्पात्-मनु ८, २८२=श्लेष्मणाऽप मानयत ( मन्वर्थ )। ष्ठीवन्त्यस्य च मूर्धनि-भा पु ११,२३,३५। तेन यत्राहमष्ठीव मभूत् तत्र तत् काञ्चनम्-कथासरि १०८, ७८।

| | | |
|---|---|---|
| +√ष्ठिव् ( ष्ठिवु ) ४/४ क्षी-जै शा ( काकृ- √ष्टिव् [ष्टिवु] ) तुल ष्ठिवेरभ्यासस्य तो वेति तन्त्रान्तरीयम्—मै १/५६१। | निरसने ( प ) मै। मै-सा च काकृ कात हे। निरासे—वो। | |
| +√ष्वक्क् (ष्वक्क) १/९७ सा-श-च-जै काकृ कात हे-वो× ( शा- √स्वस्क् ) | गत्यर्थ ( आ ) क्षी मै। शा ? | ष्व कति-निघ २/१४=गतिकर्मा। √ष्वष्क् (ष्वष्क)१/ गत्यर्थ ( आ ) सा। √ष्वस्क् १/३४६ गत्यर्थ ( आ ) च, १/६६ गतौ ( आ ) जै। महाभाष्येऽपि-"ष्वस्कतीना प्रति०" (६/१/६४) इति पठ्यते। |

घ—ओ सक्कति ( <अवष्वक्कते ) चरियापिटक-१ a।

ङ—√सक्क ( सक )=गतौ। सक्कइ-पि ३०२।

| | | |
|---|---|---|
| +√ष्वष्क् (ष्वष्क) १/१०० क्षी-मै-श च-जै× | गत्यर्थ ( आ ) सा-कात। गतौ—काकृ-शा-हे। सर्पणे—वो। | पूर्ववत्। |

परिष्वस्कित०
ग—परिस्वस्कित० } —हालसात० परिशिष्टे ५१,५९।
परिषष्कित०

| | | |
|---|---|---|
| +√सस्त् ( षस्ति ) २/७० क्षी श च काक्-कात× | स्वप्ने ( प ) मै। मै-सा-जै शा हे-वो। | सम्+√स्था=सस्थ>√सस्त् इति वागीश। |
| √सस्त् ( सस्ति ) २/६७ मै सा श च-जै काक्-कात शा हे-वो× | ससने (प) इति चैके-क्षी। क्षी। | √सस् ( षस )२/ स्वप्ने ( प )। |

| | | |
|---|---|---|
| +√सग् ( षगे ) १/७८३ श× | सवरणे ( प ) इति दुर्ग—क्षी। क्षी मै-सा-च जै काक्-कात शा हे। सवृतौ—वो। | <√स्थग् ( ष्ठगे ) सवरणे ( प )। |

| | | |
|---|---|---|
| √सघ् ( षघ ) ५/२७ श (काक्√सिघ्) (कात √सग्) | हिंसायाम् ( प ) क्षी-मै-सा-च जै-शा हे। जिघांसायाम्—काक् कात। हिंसे—वो। साहश्ये—ह्वि। | >√चषघ् (चषघ) हिंसायाम् (प) इत्येके-क्षी। √सङ्घ् १/२०४१ गतौ (प) काक्। √सह् ( षह ) १/ मर्षणे ( आ )। |

क—सेघ्-, सेंगुह्-नासिक्यम्-सेंगुह्=पराजये, जये।

ख—अवे अज्गत=अजेयम् ( )-वा पॉकर्नी।

ग—असघ्नोत्-जैब्रा १७९[२], सघ्नुयात्-जैब्रा १७९। सध्यासम्-तैआ ४,३,३। असघ्नोर्भारम्-ऋ १,३१,३, गिर सघत्-ऋ १,५७,४।

| | | |
|---|---|---|
| √सच् ( षच ) १/१६१ श× | सेचने ( आ )। क्षी मै-सा-च काक् कात-हे। सेवने—शा-वो। सेवायाम्—जै। साहचर्ये—ह्वि। | सिषक्तु सचत इति सेवमानस्य—निरु ३,२१,५। साक्षतिराप्नोतिकर्मा—निरु ११,२१,२ |

क—सेकु=अनुसरणे, सघटने। लिथु -सेक्ति, लैति सेकुऑर्-ई=साहचर्यें।

ख—अवे ह्चैते=सचते—वा पॉकर्नी।

ग—ताभि सचते गोपिति सह-ऋ ६,२८,३, पुष्यन् रयिं सचते-४,१२,७।

| | | |
|---|---|---|
| √सच् ( सच ) १/३९८ मै-श-काकृ कात-शा× | समवाये ( प ) इति चन्द्र —क्षी। क्षी सा च जै हे। सम्बन्धे—वो। साहचर्यें—ह्वि। | <√सप् ( षप ) समवाये ( प )। सचति-निघ २/१४= गतिकर्मा। |
| √सच् ( षच ) १/१००५ ( क्षी १६१ ) श च जै-काकृ कात शा हे-वो× | समवाये—मै। ( क्षी ) मै सा। | |

क—, ख-पूर्ववत्।

ग—सचते-शब्रा ७,३,२,९, काब्रा २,१,३,१७। सिषक्ति-शाब्रा २४,७। सिषक्तु-शब्रा २,३,४,३५।

| | | |
|---|---|---|
| √सञ्ज् ( षन्ज् ) १/९७२ श | सङ्गे ( प ) क्षी मै-सा च जै-काकृ-कात शा-हे-वो। | √सज् १/६४f गतौ ( प ) काकृ। √सञ्ज् १/३१३१ हिंसागत्यो ( प ) काकृ। |

क—सेज् ( गु् )-नासिक्यम्-सेंग् ( ज् )=बन्धने-वा पॉकर्नी। लिथु-सृग्ति=बन्धने--जू पॉकर्नी।

ग—सजन्ति-तैब्रा १,६,१०,५।

ङ—√सज्ज (अक)=आसक्तौ, (सक) आलिङ्गने। सज्जइ-उत्त २५,२०। सज्जह्-णाया १,८-पत्र १४८।

| | | |
|---|---|---|
| +√सट् (षट) १/३०९ श ( काकृ-√वट् ) लैपिकी त्रुटि। | अवयवे ( प ) क्षी-मै-सा च जै काकृ-कात शा-हे। अशके—वो। | √सट् १/९२० ( प ) काकृ। |

ग—सटास्तस्य पञ्च चक्रे-मभार ३,१५७८५।

| | | |
|---|---|---|
| √सद् (षद्लृ) १/८३९ वो×, श | विशरणगत्यवसादनेषु (प) क्षी-मै-सा काक्‌-कात शा-हे। विशरणे—च। शातने गतिविशरणयोश्च—जै। उपवेशने—ह्वि। | √शद् (शट) १/ रुजाविशरणगत्यव (प)। √शद् (शद्लृ) १/ शातने (प)। |

क—सेद् = उपवेशने-वा पॉकर्नी।
ख—अवे हिदैति = (नि) सीदति, उपवेशने-जू पॉकर्नी।
ग—अभि सीदति-ऋ ९,७,५। सीदति-शब्रा ६,२,१,५।
ङ—√सीअ (अक) = (१) विषादे, (२) श्रान्तौ, (३) पीडायाम्, (४) फल्ने। सीअइ-पि ४८२।

| | |
|---|---|
| +√सद् (षद्लृ) ६/१४६ श× | विशरणगत्यवसादनेषु (प) क्षी मै सा काक्‌ कात-शा-हे। अवसादे—च। शातने गतिविशरणयोश्च—जै। विषादे शरणे गतौ—वो। |

शरणम् = हिंसा-दुर्गादास।

| | | |
|---|---|---|
| √सन् (षण) १/४३८ श× | भक्तौ (प) क्षी। सभक्तौ—मै-सा-च-जै-काक्‌-कात-शा-हे वो। | √सन् (षण) ८/२ दाने (उ)। |

ग—सनेम सनन्त-ऋ ७,५२,१। सनेम्-तैब्रा १,२,१,१५, मना २,५०।

| | |
|---|---|
| √सन् (षणु) ८/२ श | दाने (उ) क्षी-मै-सा-च-जै-काक्‌-कात शा-हे वो। |

क—सेन् = प्रापणे, दाने-वा पॉकर्नी।
ग—अग्नि' सनोति वीर्याणि-ऋ ३,२५,२। सनोति-ऐब्रा १,१३, शब्रा ६,४,३,१०।

√सप् (षप) १/३९८ समवाये (प)
श×(च-जै—√सच्) क्षी मै-सा च-जै-काकृ-
कात शा-हे।
सम्बे—वो।
√सच् (सच) समवाये इति चन्द्र —क्षी।

वस्तुतश्चान्द्रे धातुपाठे √सच् (षच) १/१४० समवाये (प) इति षोपदेश पाठो विद्यते।

क—सेप्=प्रेरणे।
ख—अवे हप् (हप्सि्, हप्सी)=ग्रहणे, धारणे, आश्रये-जू पॉकर्नी।
ग—अभि सपन्ते-ऋ ७,३८,५, सपेम-६,१५,१०, शब्रा १४,१,४,१६।

+√सम् (षम) १/८१३ अवैक्लव्ये (प) √स्तम् (ष्टम) १/ अवैक्लव्ये
श-जै× क्षी। (प)।
वैक्लव्ये—मै-सा-च- √सम १०/ वैक्लव्ये (प) वो।
काकृ कात शा-हे-वो। √क्षम्प् १०/३५० क्षान्तौ
(प) काकृ।

वैक्लव्यम्=विह्वलीभाव -दुर्गादा।

+√सय् (षय) १/४७६ गतौ (आ) इति कश्चित् <√नय् (णय) गतौ (आ)।
क्षी-मै श-च-जै-काकृ- —सा।
कात-शा-हे वो× सा।
ग—सय० (विशेषण)-ऋप्रा १४,१५।

√सर्ज् (सर्ज) १/२२० अर्जने (प) √सज् १/४७५f गतौ (आ)
मै-सा-श काकृ× क्षी-च-कात-शा-हे वो। काकृ।
सर्जने—जै।
कर्कशशब्दे, क्रन्दने—ह्वि।
√सर्ज् (षर्ज) १/१२२ अर्जने—मै।
क्षी-श-च-जै-कात शा हे× मै सा काकृ।

ग—शकटीरिव सर्जति-ऋ १०,१४६,३। प्रारब्ध न सर्जन्ति (?)-पब्रत २००,२१।

+√सर्ब् (षर्ब) १/४१८ गतौ (प)
श×(काक्र-√सर्व् [सर्व]) क्षी मै-सा-च-जै-काक्र कात-शा-हे। सर्पणे—वो।
√सब् (सबी) १/४१९ गतौ (प)।

+√सर्ब् (षर्ब) १/५८६ हिंसायाम् (प)
क्षी श च जै काक्र-कात-शा-हे-वो× मै-सा।
√शर्व (शर्व) १/ हिंसायाम् (प।

+√सल् (सल) १/५४६ गतौ (प)
श जै काक्र कात× क्षी-मै-सा-च शा-हे वो।
(च-√पल्)
√षल् इति भाष्यम्।
छ—सलना (बु ख)=पङ्के मज्जनम्।
√शल् (शल) १/ गतौ (प)।
√सृ १/ गतौ (प)।

√सश्च् (षश्च) १/१९९ गतौ (प) इति
मै-श-च-जै-काक्र-कात शा× शिव—क्षी क्षी-सा-हे वो। साहचर्य—ह्वि।
<√सस्ज् (षस्ज) गतौ (प)।
√सञ्ज् १/५२३ गतौ (प) जै।
√सच् (षच) १/ समवाये (उ) मै।

क—सेचु=अनुसरणे।

ख—अवे हचुँते, हछैति=सश्चति वा पॉकर्नी।

ग—सश्चत्-ऋ ७,७७,१। सश्चसि-शत्रा ७,३,४,३८। अप सश्चिरे-ऋ ५,२०,२।

√सस् (षस) २/६७ स्वप्ने
श क्षी-मै-सा-च-जै-काक्र कात शा-हे। स्वापे—वो।
सस्ति-निघ ३/२२=स्वपिति-कर्मा।

ग—अचित्रे अन्त पणयः ससन्तु-ऋ ४, ५१, ३। सस्ति-ऋ १,७९,३, ४, १, १०३

+√सस्ज् (षस्ज) १/१९९ गतौ (प)
शा-जै-काक्ृ शा×
१/२००
क्षी मै-सा-च कात-हे।
सर्पणे—वो।
भाष्यप्रयोगादयमात्मने-
पद्यपि-सा।

>√सश्च् (षश्च) गतौ (प)
इति शिव -क्षी।
√सज् १/६४ f गतौ (प)
काकृ।

ग—सज्जति-तैआ १,११,८, नाप. ३,६३। सज्जते-१ सन्यासो ७,९०, पिण्डब्रह्माण्डो ३, ६३।

ङ—√सज्ज (अक)=तत्परतायाम्, (२)-सक -सज्जने। सज्जेइ, सज्जेंति-कुमा।

छ—√सजना, √साजना*† , √सॅजोना =सज्जने।

छ—√छजना=सज्जने, शोभने (२) उपयुक्तत्वे।

√सह् (षह) १/८३७
शा×
मर्षणे (आ)
क्षी-मै-सा च जै-काकृ-
कात-शा हे।
शक्तौ—वो।

√सह् (षह) ४/ सम्भक्तौ
(प)।

क—सेघु्=ग्रहणे, धारणे-वा पॉकर्नी।

ग—सहध्यै-ऋ ६, १, १, ७, ३१, १० । सहते-शाआ १२, ४, शब्रा ७, ४, २, ३३।

ङ—√सह=मर्षणे। सहइ, सहति=उव, महा, कुमा।

छ—√सहना=मर्षणे।

√सह् (षह) ४/२१
शा-च-जै-शा×
संभक्तौ (प)
इति दुर्ग —क्षी
शक्यार्थे—मै।
'चक्यर्थे' आत्रेयमैत्रेयदुर्गा'
—सा।
शक्तौ—काकृ कात हे वो।

<√सुह (षुह) शक्यर्थे
(प)।

सहेरिह पाठो न्यासकारहरदत्तरामदेवादीनामप्यनभिमत, यत् तत्र तत्र भौवादिकमेवाहु —सा ४/२१।

ग—सह्यामि-मै –इति ह्वि । मया नोपलब्धम् । साह्याम–वनदुर्गो ४५९ ७२ [ ऋ १०, ८३, १ ] ।

[+]√साध् (षाध) ५/१७ ससिद्धौ ( प )
श-मै× क्षी-मै-सा च-जै-काकृ
कात-शा-हे ।
सिद्धौ—वो ।

√साध् ( साध ) 'ससिद्धौ' इत्येके—क्षी ।
श-च-जै-काकृ-
कात-शा×

क—से (इ)ध्- सीध्-तथा सेध्=निमीलने, बन्धने ।

ख—अवे हादू=आदेशे, परिवर्तने-जू पॉकर्नी ।

ग—भौवादिक —साधति-ऋ ६, ७०, ३, साधन्–६, ६६, ७ ।

ङ—√साह (सक)=( १ ) सिद्धौ, ( २ ) वशीकरणे । साहइ, साहेइ-भग, कप्प, उव, प्रासू ७७, महा ।

छ—√साधना=सिद्धौ, ( २ ) सधाने ( लक्ष्ये ), ( ३ ) मापने, ( ४ ) अभ्यासे, ( ५ ) शोधे, ( ६ ) सत्यप्रमायाम्, ( ७ ) निर्धारणे ।

√सि ( षिञ् ) ५/२ बन्धने ( उ )
श क्षी-मै-सा-च-जै-काकृ
कात-शा-हे ।
बन्धे—वो ।

ग—असिनोत्–जैब्रा –ह्वि । पाठस्तु–असिनात्–जैब्रा १६० इत्युपलभ्यते ।

√सि ( षिञ् ) ९/५ बन्धने ( उ )
श क्षी मै-सा-च जै-काकृ कात-
शा-हे ।
बन्धे—वो ।

क—साइ–, सुइ–, सि–,सी=बन्धने ।

ख—अवे हा ( य् )=बन्धने ( वर्तमा –हयेईति, हित=सितम् ), हित्= युगनद्धौ द्वौ ततोऽधिका वाश्वा –वा पॉकर्नी ।

ग—उत्सिनाति–ऋ १, १२५, २ । सिनीत –कठो ७, १ । सिनीथ –ऋ ७, ८४, २ ।

√सिच् ( षिच ) ६/१५१ क्षरणे ( उ ) √सिक् सेचने-सौ धा-वो।
जै×,श क्षी-मै-सा-च-जै-काक्ृ-
कात-शा हे वो।

क—साइक्=क्षरणे-वा पॉकर्नी। लैति सिअत्, पु उ ज, म उ ज-साइच्=मूत्रम्-जू पॉकर्नी।

ख—हएक्-,हिञ्चैति ( हिचैवि )=सिञ्चति, सेचने, क्षरणे-वा पॉकर्नी।

ग—सिञ्चति-ऐआ ७,५,१, शब्रा ६,३,१,७, काब्रा १,३,४,१२। सेचते-तैब्रा २,४,३,१०।

ङ—√सिंच ( सक )=सेचने, विकिरणे। सिचइ-महा।

छ—√सीचना (<सिञ्चनम्)=सेचने, ( २ ) क्लेदने।

+√सिट् ( षिट ) १/३०० अनादरे ( प )
श क्षी मै सा-च-जै काकृ कात शा-हे वो।

ग—षिङ्गैरगद्यत ससम्भ्रममेव काचित्-शिशु ५,३४=विटै (सर्वङ्कषा)।

ङ—√सिट ( पिटाना )=नम्रीभावे, सङ्कोचे, सम्पिण्डे।

छ—√सीटना=विकत्थने, मुधा प्रशसने।

√सिध् ( षिधु ) १/४५ गत्याम् ( प ) सेधति-निघ २/१४=गतिकर्मा।
श क्षी-मै-सा-च-काकृ कात-
शा-हे वो।
गतौ—जै।

√सिध् ( षिध ) गत्याम् ( प ) निरनुबन्धपाठे तु-क्षी।
श च-जै-काकृ कात शा×
क्षी मै-सा हे-वो।

ग—अपसेध-ऋ ६,४७,२९। सेधति-तैब्रा ७,४,१६, ते सेधन्ति पथो वृकम्-ऋ १, १०५,११।

छ—√सेझना (<सेधनम्)=दूरीभावे, अपसारणे।

छ—√सिधाना *=गमने, प्रस्थाने।

+√सिध् ( षिधू ) १/४६ शास्त्रे माङ्गल्ये च ( प )
श× क्षी-मै सा काकृ-कात।
शिष्टौ—च।
शास्त्रमाङ्गल्ययो—जै-शा हे।
शिवे शास्त्रे—वो।

शास्त्रम् = शास्त्रविषय शासनम् ।
माङ्गल्यम् = मङ्गलविषया क्रिया—क्षी ।

पूर्वस्यैव धातोरर्थान्तरे प्रपञ्च ।
ङ—द्रष्ट √सिध् ४/७९ ।

| | | |
|---|---|---|
| √सिध् ( षिधु ) ४/७९ श केचिदूदित पठन्ति तदसत्–सा ४/८४ | सराद्धौ ( प ) क्षी मै-सा-च काक्ठ कात शा हे । सिद्धौ—वो । | |

क—सा४( इ )ध्-, सिध्-, सीध् तथा सूध्=निमील्ने, साफल्ये–वा पॉकर्नी ।

ग—यस्माहृते न सिध्यति यज्ञ –ऋ १,१८,७ । सिध्यति–साम्रा ३,४,७ ।

ङ—√सिज्झ ( अक )=( १ ) निष्पत्तौ, ( २ ) पाके, ( ३ ) मुक्तौ, ( ४ ) माङ्गल्ये, ( ५ ) गतौ, ( ६ ) शासने । सिज्झइ–भग , महा ।

छ—√सीझना } =पाके ।
छ—√सिझाना }

| | | |
|---|---|---|
| +√सिन्व ( षिवि ) १/५८२ क्षी-मै-श च-जै-काक्ठ-कात शा हे-वो× | सेचने ( प ) अन्ये–सा सा । | <√निन्व् ( णिवि ) सेचने ( प ) । |
| √सिभ् ( षिभु ) १/४३० क्षी श-च काक्ठ कात-शा हे वो× | हिंसार्थ ( प ) इत्येके —मै, सा । हिसायाम्—जै । | <√सृभ् (षृभु) हिसार्थ ( प ) । √श्रिभ् ( श्रिभु ) १/ हिंसार्थ (प) इत्यन्ये—मै । |
| +√सिम्भ् (षिम्भु) १/४३१ क्षी श-च काक्ठ कात× | हिसार्थ (प) इत्येके–मै मैसा । हिसायाम्—जै-शा-हे । हिंसने—वो । | <√सृम्भ् (षृम्भु) हिंसार्थ ( प ) । √श्रिम्भ् ( श्रिम्भु ) १/ हिंसार्थ (प) इत्यन्ये—मै। |

ग—सिम्भुक०–पञ्चत १९१,२४ ।

+√सिल् षिल ) ६/८४ उञ्छे ( प ) √शिल् (शिल) ६/ उञ्छे
श क्षी मै सा-च-जै काकृ ( प )।
कात शा हे-वो।

ग—सिलाची-अ वे ५,५,१,८। सिलक०-इन्द्रिशे स्तू १,१९३, २५५।

√सिव ( षिवु ) ४/२ तन्तुसन्ताने ( प )।
क्षी-मै सा च-जै काकृ-
कात शा हे।
तन्तुततौ—वो।
ऊतौ—हे ( उतौ—किर्स्ते-सस्क )।
√सीव्, √स्यू ह्वि।

क–सुऊ, सीऊ=सीवने–वा पॉकर्नी।
क—सीऊ, सिऊ=सीवने। ( लिथु सिउतस्=स्यूतम् )-जू पॉकर्नी।
ग—सीव्यत्वप सूच्या-ऋ २,३२,४। सीव्यति-ऐब्रा ३,७, तैब्रा ३,१०,११,७।
ङ—√सिव्व ( सक )=सीवने। सिव्वइ-विसे १३६८।
ङ—सीव ( सक )=सीवने-आचा।
छ—√सीवना } =युतौ, सीवने।
छ—√सीना }

+√सीक् ( षीकृ ) १/७५ सेचने ( आ ) इति <√शीक् ( शीकृ ) सेचने
क्षी मै-श च जै शा-हे× धनपालकाश्यपौ—सा। ( आ )।
सा काकृ-कात।
सेके गत्याम्—वो।

स चाय पक्ष 'शीकर' इति प्रयोगाननुगुण'—सा।
ग—स नर्मदारोधसि सीकरार्द्रैं —रघु ५,४२।

√सु (षु) १/९२६ प्रसवैश्वर्ययो ( प )
श×( जै-√स्तु ) क्षी-मै-सा-जै शा-हे।
मुद्रणदोष स्यात् प्रसवे—च काकृ कात।
ऐश्वर्यप्रसवयो —जै शा-वो।

क—सॉइ-, सु-, सू=प्रसवे-वा पॉकर्नी।
ग—सवति-ह्वि। मया नाधिगतम्। सोष्यति-छान्दो ३,१७,५। सोष्यन्ती-शब्रा १४,९,४,२२।

| | | |
|---|---|---|
| +√सु (षु) १/९४४ | गतौ ( प ) | √सु १/ गतौ ( प )। |
| क्षी श-च-जै शा हे× | मै-सा-काकृ-कात-, | |
| ( काकृ-√सू ) | वो ( उ )। | |
| | पूर्वस्यैव प्रपञ्चो धातो । | |

| | | |
|---|---|---|
| √सु ( षु ) २/३० | प्रसवैश्वर्ययो ( प ) | √सु ( षु ) १/ प्रसवैश्ययो |
| च×, श | क्षी-मै सा-जै शा हे। | ( प )। |
| | ऐश्वर्यप्रसवयो — | |
| | ( जै-शा )—वो। | |
| | प्रसवे—काकृ कात। | |

ग—सुसाव-ऋ ४,१८,१०, १०,८७,२३, सुवे-१०,१२५,१०।

| | | |
|---|---|---|
| √सु ( षुञ् ) ५/१ | अभिषवे ( उ ) | √सु (षु) १/ प्रसवैश्वर्ययो |
| श | क्षी मै-सा-च-जै-काकृ- | ( प )। |
| | कात-शा-हे। | √सु (षु) २/ प्रसवैश्वर्ययो |
| | सन्धाक्लेदपीड- | ( प )। |
| | मन्थे—वो। | |

क—सॉइ-, सेवुए- सू=क्षरणे, श्च्योते, द्रुवगतौ, प्रवाहे।
ख—अवे हुनओइति=सुनोति-जू पॉकर्नी ।
ग—सुनु सोमम्-ऋ १,२८,६। सुनोति-शब्रा १२,८,२,१२, ताब्रा १२,९,१२

| | | |
|---|---|---|
| +√सुम्भ् (षुम्भ) १/४२६ | भाषणे हिंसायाञ्च ( प ) | <√शुम्भ् ( शुम्भ ) भाषणे |
| मै श च जै काकृ- | इति गुप्त —क्षी। | हिंसायाञ्च ( प )। |
| कात शा× | क्षी सा-हे। | |
| | दीप्तौ हिंसने च—वो। | |
| | 'सुम्भनाद्यर्थे' इत्येके- | |
| | क्षी ६/४३। | |
| ९/ | श्वासावरोधे—ह्वि । | |

ग—सावष्टम्भनिषुम्भसम्भ्रम०-मालतीमाध ५,२२। कुषुम्भम् ?
छ—सुम्ह (<सुम्भ' )=जातिविशेषनामधेयम्।
छ—सुभी=अयश्छेदनोपकरणमग्निविहीनम्।

| | | |
|---|---|---|
| +√सुर् ( षुर ) ६/६० | ऐश्वर्यदीप्त्यो ( प ) | √सु ( षुञ् ) ५/१ अभिषवे |
| मै सा-श-च-जै- | क्षी-हे। | ( उ )। |
| काकृ कात× | दीप्तैश्वर्ययो —शा। | सुरा सुनोते -निरु १,११,२ |

भैश्यो —वो।

√सुर् (षुर) — ऐश्वर्यदीप्त्यो (प)
श-शा× — इति दुर्ग —क्षी।
क्षी-मै-सा-जै-काकृ-
कात है।
ऐश्वर्ये—च।
दीप्तैश्वर्ययो —जै।
भैश्यो —वो।

ग—सुरा इत्यभिविश्रुता -वा रा १,४५,४८। (दुर्मदासो न सुरायाम्-ऋ स ५,७,१९,१)।

+√सुह् (षुह) ४/७१ — शक्यर्थे (प)
श — क्षी-सा।
'सभक्तौ' इति दुर्ग —क्षी।
शक्यार्थे—मै।
चक्यर्थे—सा।
शक्तौ—च काकृ कात है।
शकने—जै।
शक्तौ तृपि च—वो।
शक्यर्थ =तृप्ति —क्षी।
चक्यर्थ =तृप्ति इति स्वामिधनपालशाकटायना'-क्षी।

ग—अहेरिव गणाद् भीत सौहित्यान्नरकादिव।
कुणपादिव च स्त्रीभ्यस्त देवा ब्राह्मण विदु ॥ मभार १२,२४४, १३।
छ—सुह्म-गौडदेशात् पश्चिमस्था प्राचीन प्रदेश, (२) यवनाना जातिविशेष।

√सू (षूङ्) २/७० — प्राणिगर्भविमोचने (आ)
श — क्षी मै सा-जै-काकृ-
कात शा है।
प्रसवे—च।
सूतौ—वो।

√सु (षु) २/३० प्रसवैश्वर्ययो (प)।

क—सॉइ-,(सेउ॒ए-)-, सु-, सू=जनने-वा पॉकर्नी।
ग—असूत पूर्वो वृषभ -ऋ ३,३८,५। सूते-तैब्रा १,८,६,४, त्रिपुरातापिन्यु १,२०[२]। आयुष्मन्त सुत सूते-मनु ३,२६३।

√सू ( षूङ् ) ४/२४ श

प्राणिप्रसवे ( आ )
क्षी मै-सा च-जै काक्र
कात शा हे ।
सूतौ—वो ।

√सू ( षूङ् ) २/ प्राणिगर्भ विमोचने ( आ ) ।
पूर्ववत् ।

क—सॉइ-, ( सेउ्ए-) सु-, सू=जनने-जू पॉकर्नी ।

ग—सूयते-मन्त्रिको ४, गी ९,१० । सूयन्ते-मैत्र्यु ६,१६ ।

√सू ( षू ) ६/१२७ श

प्रेरणे ( प )
क्षी-मै सा-च-जै काक्र-कात शा हे ।
क्षेपे—वो ।

क—सॉइ-, सु-, सेउ्ए=प्रेरणे । हित्ती शुउ्आइ=प्रेरणे, उत्क्वथने ।

ख—अवे हव=सव —जू पॉकर्नी ।

ग—सविता सुवाति-ऋ ७,४०,१, ( सुष्यन्ती-५,७८,५ )। सुवत्-तैआ ३,११ । अभिषुवति-काठ १३,२ । सुवति-शब्रा ५,३,३,४ ।

√सूद् ( षूद ) १/२४ श×

क्षरणे ( आ )
क्षी-मै-सा-च-जै काक्र-
कात-शा हे ।
निरासे—वो ।
हिंसायामपि वर्तते—
सा ।
आदेशे—ह्वि ।

क—सूआद्=मधुरम् । लिथु सूद्यूति ( गॉथि सूट्स् )—वा पॉकर्नी । इंग्लि सूट् (=भुशुण्ड्यादिप्रयोगेण मारणे )—वागीश । तुल सायणीयेनार्थेन ।

ग—असुषूदन्त-तैब्रा १,७,४,४ । सूद -शब्रा ८,७,३,२१ ।

ङ—√सूड (सक)=छेदने, विनाशे, । कर्म -सूडिज्जतु-पण्ह १,२-पत्र २९ ।

छ—√सूॅटबौ ( बु ख )=ताडने ।

√सूर्क्ष् ( सूर्क्ष ) १/६५७ मै-श-कात-शा×

अनादरे ( प ) इति
चन्द्र —क्षी
क्षी च-जै-काक्र-हे ।
आदरे—सा ।
'अनादरे' इति कचित् पठ्यते
तदसत्—सा ।
नादरे—वो ।
ध्याने अवधाने—ह्वि ।

<√सूर्क्ष्य् (सूर्क्ष्य) अनादरे ( प ) ।

√सूर्क्ष् ( षूर्क्ष ) १/६६९ अनादरे ( प) मै ।
क्षी सा-श च-जै काक्र- नादरे—वो ।
कात शा-हे ×

क—सूर्एर्घ् =व्याकुलम् , उद्विग्नम् , चिन्तितम् । दु खे । गॉथि सउर्घ् = दु खम् । पु आइस्, ऍग्लो-सैक्सॉ सॉर्ग्, पु सैक्सॉ, पु उ ज सॉर्ग = दु खम्—वा पॉकर्नी ।

ग—सूर्क्षति-गोब्रा २, ३, ९, सूर्क्षत-२,२,१० । सूर्क्षेत्-आपस्त ७,२८,९ ।

+√सूक्ष्यं् (सूक्ष्यं) १/५१० ईर्ष्यार्थे ( प )
मै-सा श-च × क्षी-जै-कात-शा हे ।
ईर्ष्यायाम्—काक्र ।
ईर्ष्ये—वो ।

√सूर्क्ष् ( सूर्क्ष ) १/ अनादरे ( प ) ।
√सूक्ष्यं् ( सूक्ष्यं ) १/ अनादरे ( प ) ।

√सूक्ष्यं् ( षूक्ष्यं ) १/५१० ईर्ष्यार्थे —मै ।
क्षी-श जै-काक्र-कात शा × मै सा च-हे ।
( च-√सूक्ष्मं् ) ईर्ष्ये—वो ।

ग—असूक्ष्येत्-काठ १०,६, मा सूक्ष्येत-३४,१७ । नर्तून् सूक्ष्येत्-न्याय मालाव २४८ ।

+√सूक्ष्यं् (सूक्ष्यं) १/६५७ अनादरे ( प )
मै-सा-श-च-जै-काक्र × क्षी कात शा हे ।
( हे ) अनादरे ईर्ष्ये—वो ।
पूर्वस्यैव धातो॰ प्रपञ्च॰ ।

>√सूर्क्ष् ( सूर्क्ष ) अनादरे (प) इति चन्द्र –क्षी ।

+√सूष् ( षूष ) १/६७० प्रसवे ( प )
श-जै-शा × क्षी मै-सा च-काक्र-
कात-हे वो ।

√शूष् ( शूष ) प्रसवे ( प ) इति चरक –क्षी ।
( सूष्यन्ती–ऋ ५,७८,५ )

√सूष् ( सूष ) १/६६६ 'प्रसवे' केचित् , तदनार्षम् ,
क्षी-मै-श-च-जै-काक्र- षोपदेशलक्षणविरोधात् —
कात × सा,-शा ।
प्रसवे—वो ।

ग—सूषणा–अ वे १,११,३, सूषा–१,११,३ ।

√सृ १/९१९ गतौ (प) √सृप् (सृप्लृ) १/ गतौ (प)।
श क्षी-मै-सा-च-जै-काकृ-
कात-शा हे-वो।

क—सेर्=प्रवाहे, द्रुतगतौ।

ख—(अवे सरैति)-जू पॉकर्नी।

ग—सरन्नाप०-ऋ ४,१७,३, ससार-४,३०,११। असरन्-तैआ १,३०,१।

ङ—√सर (सक)=(१) सर्पणे, (२) अवलम्बने, (३) अनुसरणे। कृ-सरणीअ-चउ २७।

छ—√सरना (<सरणम्)=चलने, (२) भ्रमणे, (३) निर्वाहे।

√सृ ३/१७ गतौ (प)
श जै×(शा) क्षी मै सा च जै-काकृ कात
शा-हे वो।

क—पूर्ववत्।

+√सृज् (सृज) ४/६५ विसर्गे (आ)
श क्षी-मै-सा-च-जै-काकृ कात-
शा हे-वो।

ग—ससृज्यन्ते परस्परम्—मभार १२,९३६२। (वायु) ससृज्यते सरसिजैर-रुणांशुभिन्नै—रघु ५,६९=सगच्छते (सजी)।

√सृज् (सृज) ६/१३३ विसर्गे (प)
श क्षी-मै-सा-च-जै-काकृ-
कात-शा-हे वो।

क—सेल्ज् (ग्)=क्षेपणे, विसर्गे।

ख—अवे हृर्जैति, हृर्जैति=सृजति—जू पॉकर्नी।

ग—अवसृजन्ति—ऋ ५,३०,१३। सृजति—ब्रह्मो १, नृपू २,८, त्रिता ४,९। सृजते-मुण्डको १,१,७, शब्रा २,५,१,११।

छ—√सृजना* } =रचनायाम्।
छ—√सिरजना* }

√सृप् (सृप्लृ) १/९६८ गतौ (प) सर्पति निघ २/१४=गतिकर्मा।
श (जै√सृ) भ्रष्ट पाठ। क्षी मै-सा च जै
काकृ कात-शा हे।
गत्याम्—वो।

क—सेर्प् =रिङ्गणे, सर्पणे। (लैनि सेर्पो)–जू पॉकर्नी।
ग—उप सर्प मातर भूमिमेताम्–ऋ १०,१८,१०। सर्पति–शब्रा ७,४,१,२७।
ङ—√सप्प (सक)=गतौ, (२) आक्रमणे। सप्पति–सुर २,२४३।

| | | |
|---|---|---|
| +√सृभ् (सृभु) १/४२४ | हिंसार्थे (प) | √सृम्भ् (सृम्भु) १/ |
| मै-श जै-काकृ शा× | क्षी-सा च कात। | हिंसार्थे (प)। |
| (कात √शृभ्) | हिंसायाम्—हे। | |
| | हिंसे—वो। | |
| √सृभ् (षृभु) १/४३० | हिंसार्थे—मै-सा। | |
| क्षी-श-च-जै कात शा-हे-वो× | भर्त्सनहिंसयो—काकृ। | |

सृवर्जम्—६/१/६४ इति भाष्येणाषोपदेशस्यापि ग्रहणात्–क्षी।

| | |
|---|---|
| +√सृम्भ् (सृम्भु) १/४२५ | हिंसार्थे (प) |
| मै श-जै काकृ-शा× | क्षी सा-च कात। |
| | हिंसायाम्—हे। |
| | हिंसे—वो। |
| √सृम्भ् (षृम्भु) १/४३१ | हिंसार्थे—मै-सा। |
| क्षी-श-च-जै-कात शा-हे-वो× | भर्त्सनहिंसयो—काकृ। |

| | | |
|---|---|---|
| +√सेक् (षेकृ) १/७८ | गत्यर्थे (आ) इत्यन्ये-क्षी। | <√शीक् (शीकृ) गत्यर्थे (आ)। |
| मै श-च जै-काकृ-कात शा× | क्षी सा। | √सीक् १/४२ गतौ (आ)। काकृ। |
| | गतौ—हे। | अत्र क्वचित् √सीक् (सीकृ) दन्त्यादिरपरो धातु पठ्यते, तदनार्षम्–१/८१ सा। |
| | गत्याम्—वो। | |
| √सेक् (सेकृ) १/७९ | गत्यर्थे—क्षी मै-सा-च-कात। | |
| | गतौ—जै-शा-हे। | √स्रेक् (स्रेकृ) १/ गत्यर्थे (आ)। |
| | गत्याम्—वो। | √शेख् १/४१२ x गतौ (आ) काकृ। |

(ग—गोर्न सेके–ऋ १,१८१,८—√सिच् ?)।

| | | |
|---|---|---|
| √सेल् ( षेलृ ) १/५४२ मै श काकृ-कात×(क्षी यु मी स × ) | गतौ ( प ) क्षी-सा च जै शा-हे । केल्वत् (=चालगत्यो ) वो । | √शेल् ( शेलृ ) १/ गतौ ( प )। |
| +√सेल् ( सेल्ट ) १/५४२ मै श च जै-शा× | गतौ—क्षी सा-काकृ-कात हे-वो । | |

सेलतेस्तु दन्त्यादे पाठ षोपन्देशपर्युदासवाक्येऽनुपादानादनार्ष । मूर्द्धन्यादिस्तु सेलु श्लेष्मान्तक इत्यादिदर्शनाद् ग्राह्य ?-सा १/५३५ ।

ग—सेलु०-सुश्रु १,२३७,२१ ( सेलग०-ऐब्रा ७,१,८,११, शब्रा १३,४,३,१०, आश्व श्रौ १०,७,६ ) ।

| | | |
|---|---|---|
| √सेव् ( षेवृ ) १/४९९ श× | सेवने ( आ ) क्षी च जै शा हे-वो । सेवने—मै-सा काकृ-कात । सेवे—वो । | √खेव् ( खेवृ ) १/ सेवने ( आ )। √केव् ( केवृ ) १/ सेवने ( आ )। |
| √सेव् ( सेवृ ) १/५०० श-च-जै काकृ× | सेवने—क्षी शा-हे,वो ( उ )। सेचने—मै-सा-कात । सेवे—वो। | √शेव् ( शेवृ ) १/ सेवने ( आ )। |

ग—अश्व श्वेत स्थाणौ सेवते-शब्रा ३,६,२,४, गी १४,२६।

ङ—√सेव (सक)=( १ ) आराधनायाम् , ( २ ) आश्रये, ( ३ ) उपभोगे। सेवइ, सेवए-आचा , उव , महा ।

| | | |
|---|---|---|
| +√सै १/९०० मै-श च-जै काकृ-कात× √सै( षै ) १/९११ | क्षये ( प ) क्षी सा-शा-हे-वो । क्षित्याम्—वो । क्षये—मै सा-च-जै-काकृ कात-वो । | √क्षै १/ क्षये ( प ) √सो ( षो ) ४/ अन्तकर्मणि ( प ) । |
| √सो ( षो ) ४/३८ श | अन्तकर्मणि ( प )। क्षी-मै सा-जै काकृ कात- | |

शा-हे ।
अवसाने—च ।
नाशे—वो ।
√सा ६/ ? बन्धने—ह्वि ।

क—साइ-, सुइ-सि-,सी=बन्धने-वा पॉकर्नी । लिथु सिएँति, लेट्टिश्-सिएँत् =बन्धने-जू पॉकर्नी ।

ग—अवस्यति-ऋ १०,६१, २०, तै ?,५,६,१, मै ४,६,५ ।

√स्कन्द् (स्कन्दिर्) १/९६४ शोषणे (प) क्षी । गतिशोषणयो — मै सा-जै काक्त-कात-शा हे । गतौ—च । शोषणे गत्याम्—वो । कूर्दने—ह्वि ।
शX

√कन्द् (कदि) १/६७ आह्वाने रोदने च (प) ।
√स्कुन्द् (स्कुदि) १/ आप्रवणे (आ) ।
√स्कन्ध (स्कन्ध) १०/ समाहारे (प) ।

क—स्कन्द्=बन्धने, वेष्टने, पाशने । लैति स्कन्दो,-एरे=आरोहणे—वा पॉकर्नी ।

ग—अतिस्कन्दति-ऋ ५,५२,२ । स्कन्दति-शब्रा ४,१,१,२६ ।

+√स्कम्भ् (स्कभि) १/३८४ प्रतिबन्धे (आ) क्षी-मै-सा-च काक्त-कात । स्तम्भे—जै शा हे-वो ।
शX

√स्कम्भ १/३१९ b स्तम्भने (प) काक्त ।
√कम्भ् १/३५९ स्तम्भने (प) काक्त ।

ग—स्कम्भथु स्कम्भनेन-ऋ ६,७,२,२ ।

छ—√खटाना ( <प्रा खट्ट ? <स्कब्धम् ) =स्तम्भे, निर्वाहे ।

√स्कम्भ् (स्कम्भु) ५/४ सौ धा स्तम्भार्थ (प) सा ।
९/
क्षी-मै श च-जै काक्त-कात- सा ।
शा-हेX

क—स्कभ्-, स्कम्भ्=आश्रये, स्थितौ । लैति स्कभ्नुम् (*स्कभ्नोम्)-जू पॉकर्नी ।

ग—स्कभ्नुवन्त'–शब्रा ५,१,५,१७। स्कभ्नाति–ह्वि । मया नावाप्तम्।

ङ—√खभ (सक)=(१) क्षोभणे, विचलने। खभेज्जा, खभाएज्जा–ठा ५,१–पत्र २९२।

√स्कु (स्कुञ्) ५/६ सौ धा ९/ आप्रवणे (उ) क्षी मै-श-च-जै-कात-शा हे। चोष्कूयते–निघ ४/३=दानार्थ, व्युदसनार्थश्च–देवराजयज्वा। निरु ६,२२।

श, (काकृ–√स्कू) आच्छादने—काकृ। उद्धृतौ—वो। दारणे—ह्वि।

क—स्केउ-(तु-)=छेदने–जू पॉकर्नी।

ग—यो गो कर्णावास्कुनोति–अ वे १२, ४,६। स्कुनाति–इत्यपि ह्वि। मया नोपलब्धम्।

+√स्कुन्द् (स्कुदि) १/९ श× आप्रवणे (आ) क्षी मै-सा-च-जै-काकृ कात शा हे। आप्लाव उद्धृतौ उत्प्लुत्य-गत्याम्—वो। √स्कन्द् (स्कन्दिर्) १/ गतिशोषणयो (प)।

क—(स्) कॉइद्=प्रक्षेपणे, उत्प्लुतौ। लिथु स्कुद्रुस्=तीव्रम्, चपलम्। पु बुल्गा इस्–क्यदति=प्रक्षेपणे, उद्धरणे–वा पॉकर्नी।

छ—√कूँदना(<स्कुन्दनम्)=उत्प्लवने।

छ—√खूँदना(<स्कुन्दनम्)=उत्प्लवने, (२) पदाघातैर्मर्दने।

+√स्कुम्भ् (स्कुन्भु)५/५ सौ धा ९/ धारणार्थ (प) सा। रोधने—वो।

क्षी मै-श च जै काकृ-कात शा-हे×

ग—स्कुब्ध्वा (स्कुब्धा, स्कुप्त्वा)–आपस्त १,३१,२४।

छ—√खुभना=प्रवेशने।

छ—√खोपना (प्रयोज)=प्रवेशने।

छ—√गोपना=कण्टकादिनिशितोपकरणप्रवेशने–बु ख।

| | | |
|---|---|---|
| +√स्खद् (स्खद) १/७६१ शX | खदने ( आ ) क्षी शा हे । स्खदने—मै-सा च-काकृ-कात । जै ? विदारे—वो । | √खद् (खद) १/ स्थैर्ये (प)। |
| √स्खद् (स्खदिर्)१/८०३ee श-जै-शा-हे । | अपपरिभ्या च मित्—क्षी। अवेति भोज । न मित्—सा १०५। | |

खदनम् = विदारणम्–क्षी । विद्रावणमिति स्वामी–सा ७५६ ।

क—( स् )क्( ह् )ऐद्–, ( स् )क्( ह् )ऐ-न्-द् = विदारणे । लिथु स्केंदॆर्व् = तनीयस्या पट्टिकाया दारणे। केदेति, केदेन्ति = दारणे। पु च स्ला स्कॉन्द् ।

ख—अवे स्कन्दयेइति = विनाशे–जू पॉकर्नी ।

| | | |
|---|---|---|
| √स्खल् ( स्खल ) १/५४३ शX | चलने ( प ) क्षी च-जै कात शा हे। सञ्चलने—मै-सा। चलने चञ्चले च—काकृ। चये चले—वो । सञ्चये—कात । | √खल् ( खल ) १/ सञ्चलने ( प ) मै । √क्षर् ( क्षर ) १/ सञ्चलने ( प ) । √क्षल् (क्षल) १/ सञ्चलने (प)। √खल्ल् १/७४७ b चलने चञ्चले च (प) काकृ । |
| √स्खल्( स्खलि.) १/८०३ मै-श च-जै-काकृ कात-शाX | मित्–इति भोजसूत्रम्–क्षी । | |

क—स्खेद् = स्खलने । अर्मे स्खलॆम्, स्खलिम् = स्खलने– जू पॉकर्नी. ।

ग—स्खलति–आर्षेयो ७ १८ । स्खलते–ऐन्रा ७,५ ।

ङ—√खल (अक) = स्खलने, (२) रोधे। वक्र–खलत, खलमाण–से २,२७, गा ५४६ ।

ङ—√खस ( अक ) = स्खलने । खसइ–पिंग ।

छ—√खसना = स्खलने । "खसी माल मूरति मुसकानी"–तुलसीदास ।

छ—√खिसलना }
छ—√खसलना } =स्खलने-बु ख ।

छ—√सकिलना ( <स्खलनम् )=स्खलने, ( २ ) सङ्कोचे, ( ३ ) पूर्णे ।

| | | |
|---|---|---|
| +√स्तक् ( ष्टक ) १/७७६ शशा×,(काक्- √कष्ट्) वर्णविपर्ययतया | प्रतिघाते ( प ) क्षी सा काकृ । प्रतीघाते—मै च कात हे वो । लोटने—जै । | √स्तक् (स्तक) १/७७७ प्रतिघाते ( प ) । |

क—स्ताक्=स्थितौ, व्यवस्थापने-वा पॉकर्नी ।

| | | |
|---|---|---|
| +√स्तक् (स्तक) १/७७७ मै-श-च जै काकृ-कात× | प्रतिघाते ( प ) क्षी सा-शा । प्रतिघाते—हे वो । | √स्तक् (ष्टक्) १/७७६ प्रतिघाते ( प ) । √स्थग्(ष्ठगे) १/ सवरणे (प) । √स्था (ष्ठा) १/ गतिनिवृत्तौ ( प ) । |

पूर्वस्माद् धातोरभिन्न ।

| | | |
|---|---|---|
| √स्तन् ( स्तन ) १/४५५ श× √स्तन् [ ष्टन ] | शब्दे ( प ) क्षी । मै-सा-च-जै काकृ-कात शा-हे-वो । | √स्तूण् १/२०७mmशब्दे ( प ) काकृ । √स्त्वन् १/२०७००शब्दे (प) काकृ । |

अज्दन्त्यपरा सादय षोपदेशा (६/१ ६४) इति भाष्यात् षोपदेश एवायम् ।

क—उत्तरधातुवत् ।

ग—अस्तानीत्-ऋ १०, १२, ८ । निष्टनन्ति च मातङ्गा -मभार ५,४८४४ । सदा निष्टनसे उदन्वन्-भा पु १०, ९०, १७ ।

ङ—√थण ( सक )=गर्जने, ( २ ) आक्रन्दे, ( ३ ) आक्रोशे । वकृ-थणत-गा २६० ।

| | |
|---|---|
| √स्तन् (स्तन) १/८११ मै श-च-जै-काकृ-कात-शा-वो× | शब्दे ( प ) मित् क्षी सा हे । |
| √स्तन् (ष्टन) १/८११ मै-श च जै-काकृ-काल शा वो× | शब्दे इति चन्द्र —क्षी । क्षी-सा-हे । |

क—स्तेन्-, तेन्=मेघशब्दे, गर्जने। लिथु स्तेनु=स्तनति-वा पॉकर्नी। लैति तॉनो, ऍग्लो-सैक्सॉ स्तेनन्, म नि ज स्तेनेन्, रसन्-स्तॉन्=आर्तस्वरे-जू पॉकर्नी।

ग—स्तनयति-शब्रा २,२,३,८।

| | | |
|---|---|---|
| +√स्तम् (ष्टम) १/८१४ श जै× | अवैक्लव्ये (प) क्षी। वैक्लव्ये—मै-सा च काक्रु कात शा-हे वो। | √सम् (षम) १/ अवैक्लव्ये (प)। √स्तम्ब १/२०६w मर्दने (प) काक्रु। √स्तम्भ् (ष्टभि) १/ प्रतिबन्धे (आ)। |

√सम्>√स्तम्।

| | | |
|---|---|---|
| √स्तम्भ् (ष्टभि) १/३८३ श× | प्रतिबन्धे (आ) क्षी मै सा-च-काक्रु-कात। स्तम्भने—काक्रु। स्तम्भे—जै शा-हे वो। | √स्तब् १/२०६x मर्दने (प) काक्रु। स्तम्ब् १/२०६w मर्दने (प) काक्रु। √स्तुम्भ् ५/, ९/ रोधने (प)—सौ धा-वो। |

प्रतिबन्ध = क्रियानिरोध—क्षी।

क—उत्तरधातुवत्।

ग—आपस्तस्तम्भिरे यत-मभार १२,६८०७। स्तभमानम्-ऐआ १,४,१। बाहुप्रतिष्टम्भ०-रघु २,३२—प्रतिष्टम्भेन=प्रतिबन्धेन (सजी)।

| | | |
|---|---|---|
| √स्तम्भ् (स्तम्भु) ५/२, ९/ सौ धा क्षी मै-श-च-जै-काक्रु-कात शा-हे× | स्तम्भार्थ (प) सा। रोधने—वो। | पूर्वधातुद्वयवत्। |

क—स्तेब्- तथा स्तेब्-ः स्तुब्-, नासिक्यम्-स्तेम्ब्-, स्तेभ-तथा स्तेभ्-ः स्तुभ्-, नासिक्यम्-स्तेम्भ् —वा पॉकर्नी। लिथु-स्तेम्बृति-जू पॉकर्नी।

ख—अवे स्तुम्बन्=स्थितौ, स्तम्भे। न पर्सि सितम्ब् (=स्तम्भ)=क्रूर (म्), तीव्र (म्)-वा पॉकर्नी।

ग—स्तभ्नुवन्ति-शब्रा ६,५,२,१५। अस्तभ्नुवन्-ताब्रा ७,४,७। अस्तभ्नात्-ऐब्रा १,३०, शाब्रा ९,६।

ङ—√थम्भ (अक)=अहङ्कारे। थम्भइ-सूअ १,१३,१०।

च—√थभ (अक)=१-रोधे, स्थितौ। २-(सक) क्रियानिरोधे। थभइ-भवि।

छ—√थँभना }
छ—√थमना } (<स्तम्भनम्)=स्थितौ, (२), निरोधे, (३) धैर्ये।

| | | |
|---|---|---|
| √स्तिघ् (ष्टिघ) ५/१९ श (काकृ-√सिघ् [षिघ]) लैपिकी स्यात् त्रुटि | आस्कन्दने (आ) क्षी-मै सा-जै-कात-शा हे<br>स्कन्दने—च।<br>आस्कन्दने—काकृ।<br>स्कदि—वो। | √तिक् (तिक) ५/ आस्कन्दने (प)।<br>√तिक् (तिकृ) १/ गत्यर्थ (आ)।<br>√तिग् (तिग) ५/ आस्कन्दने (प)।<br>√स्तिक् ५/१९० हिसायाम् (प) च। |

क—स्ताङ्घ्=लङ्घने, रोहणे। अल्बे ऱ्तेक्, स्तेग्-उ—वा पॉकर्नी।

ग—स्तिघ्नोति-हस्तलेखे (द्रष्ट जी डी एम जी ३३,१९५ स्तिङ्नोति)-ह्वि।

| | | |
|---|---|---|
| +√स्तिप् (ष्टिप) १/३५९ श-च-जै-काकृ-कात× | क्षरणार्थ (आ) क्षी मै-सा।<br>क्षरणे—शा-हे।<br>श्च्युति—वो। | स्तिपा स्तियापालन उपस्थितान् पालयति इति वा-निरु ६,१७,८।<br>स्तिया आपो भवन्ति स्त्यायनात्-निरु ६,१७,७।<br>स्तिपा =कूप इत्युपपद्यते-दुर्गाचार्य।<br>स्तिपा'-निघ ४/३= अग्निरुच्यते-देवराजयज्वा।<br>द्रष्ट √स्तेप् १/३६०। |

√तिप् १/३५७ >√स्तिप्।

| | | |
|---|---|---|
| √स्तिम् (ष्टिम) ४/१७ श | आर्द्रीभावे (प) क्षी-मै-सा।<br>आर्द्रभावे—च-जै-काकृ कात-शा-हे। | √तिम् (तिम) ४/ आर्द्रीभावे (प)।<br>√तीम् (तीम) ४/ आर्द्रीभावे (प)। |

क्लेदे—वो । निश्चलीभावे—ह्वि ।

√स्तीम् ( ष्टीम ) ४/ आर्द्री भावे ( प )।

√स्त्यै (ष्ट्यै) १/ शब्दसघातयो (प)।

ग—स्तिमितम्-आर्षेयो ८ १३। स्तिमिता हृष्टरोमाण आसन् सर्वे सभासद-मभार ५,३४४८।

ङ—√थिम (सक)=आर्द्रीकरणे। हेक्र-थिमिउँ-राज ।

√स्तीम् (ष्टीम) ४/१८ श — आर्द्रीभावे ( प ) क्षी मै-सा । आर्द्रभावे—च-जै काक्र कात शा-हे । क्लेदे—वो । निश्चलीभावे—ह्वि । — पूर्ववत् ।

ग—अप्सु स्तीमासु-अ वे ११,८,३४।

च—√तिम्म (अक)=आर्द्रीभावे। वक्र-तिम्ममाण-पउम ३५,२०।

√स्तु ( ष्टुञ् ) २/३२ श (काक्र-√स्तू) — स्तुतौ ( उ ) क्षी-मै सा-च जै काक्र-कात शा-हे वो। — √स्तूण् १/२०७mm शब्दे (प) काक्र। स्तोति-निघ ३/१४=अर्चतिकर्मा।

क—स्तॉइ=स्तुतो।

ख—अवे स्तओइति=स्तुतौ-वा पॉकर्नी ।

ग—अभिष्टुहि-ऋ १,५४,२। स्तौति-तैब्रा १,३,५,४, तैआ ५,४,१९। सौवादिकोप्ययम्—स्तुन्वन्ति-प्रश्नो २,४। य ब्रह्मा ' स्तुन्वन्ति दिव्यै स्तवै-भा पु १२,१३,१। स्तुते-शब्रा ८,४,१,२६।

ङ—√थुव्व ( सक )=स्तुतौ। कवक्र-थुव्वत, थुव्वमाण-सुपा ८८, सुर ४,६६, स ७०१ ।

च—√थुण ( सक )=स्तुतौ। वक्र-थुणत-भवि ।

+√स्तुच् (ष्टुच) १/१७२ श× — प्रसादे ( आ ) क्षी मै सा-च-जै काक्र- — √स्तु ( ष्टुञ् ) २/३२ स्तुतौ ( उ )।

